# संस्कृतसाहित्यपरिषत्

संस्कृतसाहित्यपरिषदो मुखपत्रम्



षष्ठवर्षीयम्

( १८४६ शकीयम् )

वैशाखाच्चैत्र पर्य्यन्तम्

संस्कृतसाहित्यपरिषद्भवनम्
श्यामबाजार ब्रीज रोड
कलिकाता।



प्रकाशको मुद्रापकश्च—श्रीजानकीनाथकाव्यतीर्थः।
संस्कृतसाहित्यपरिषद्भवनम्, श्यामबाजार ब्रीजरोड, कलिकाता।
मुद्रणस्थानं—श्रीप्रेस ; १०७, कर्णवालिस ष्ट्रीट, श्यामबाजार, कलिकाता

# १८४५ शकाब्दीय संस्कृतसाहित्यपरिषत्

## पत्रिकागतविषयसूची

१८४५ शकीये वैशाखे
May 1923.

Reg. No. C. 1073.

६ष्ठ वर्षस्य १म संख्या
Vol. VI. No. 1.




संस्कृतसाहित्यपरिषदो मासिकं मुखपत्रम्

सम्पादकौ— "महामहोपाध्याय"श्रीदुर्गाचरणसांख्यवेदान्ततीर्थः
श्रीकालीपदतर्काचार्य्यश्च

सहकारिसम्पादकः— श्रीश्रीनरेश्वरठाकुरः एम. ए.

—:*:—



प्रकाशकः—
श्रीजानकीनाथकाव्यतीर्थः।
संस्कृतसाहित्यपरिषद्भवनम्, श्यामबाजार ब्रीजरोड, कलिकाता।

प्रतिखण्डमूल्यं ।० चतुराणकम्. ]    [ वार्षिकमूल्यं २, रूप्यकद्वयम्।

Foreign price 7s. yearly including postage.

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

१८४५ शकीय—वैशाखे, ६ष्ठ वर्षस्य १म संख्या


## नववर्षमङ्गलम् ।

मासादूर्द्ध्वं नूतनो मास एति वर्षादूर्द्ध्वं नूतनं वर्षमेवम् !
आयुः कालः क्षीयते नित्यमित्थं नास्ते बोधस्तत्र जीवस्य चित्ते।
दूरे भूतं सम्परित्यज्य सर्व्वे भव्ये मार्गे दृष्टिमारोपयन्ति ।
प्रत्यूहानां लङ्घयित्वा सहस्रं काम्यप्राप्तौ सोद्यमा जीववर्गाः ॥
आसीद्वित्तं यस्य पूर्व्वं प्रभूतं तस्यैवाद्य प्राप्तमुद्दामदैन्यम् ।
सोऽयं भिक्षापात्रमात्रं दधानो गेहे गेहे भैक्ष्यदीक्षां करोति ॥
दीनो वीणां वादयन् कातरात्मा योऽसौ पूर्व्वं भैक्ष्यलाभे प्रयासी ।
सोऽयं देवादेत्य वित्तोपचारान् भुङ्क्ते काले वासवीं भोगभूतिम् ॥
पुत्रा दाराः भृत्यवर्गा विनीताः सौभाग्यं वा यस्य दिव्यं पुरासीत् ।
सोऽयं काले सर्व्वसौभाग्यशून्यः शून्यां मत्वा संसृतिं कष्टभागी ॥
कालेनेत्थं पूर्व्वभावा विलीना व्यक्तो लोके नूतनो भावबन्धः ।
दर्शं दर्शं संसृतिं तत्प्रकारां लोका नित्यं नो मनश्चेतयन्ते ॥
भूते पादक्षेपणे क्लेशमाप्त्वा भव्ये शान्तिं शाश्वतीं कामयन्ते ।
तत्राप्यास्ते सम्भवः कण्टकानाम् इत्थं चिन्ता नास्ति
कस्यापि चित्ते ॥
तामेवैतां रीतिमालम्बमानो विघ्नव्यूहं भूतमुदूय दूरे ।
पादक्षेपं नूतने वत्सरेऽस्मिन् कर्त्तुं वाञ्छामन्तरे धारयामः ॥

कतिप्रवास्मिन् भूतवर्षे सहाया विज्ञा वित्तप्राप्तहृष्टप्रकर्षाः।
अस्मान् हित्वा शोकसिन्धुप्रवाहे दिव्यां भूमिं प्राप्तवन्तः स्वभाग्यात्॥
स्मारं स्मारं तानतीतानिदानीं मुक्तास्तेषां सन्निसाहाय्ययोगात्।
नैवासारं केवलं सारयामो दैवायत्ते किं भवे कृत्यमन्यत् ?
पूर्वं पुत्रे दृष्टभूयःप्रकर्षे दैवात् कालेनाहृते स्वाधिकारे।
अन्यं लब्ध्वा भाविदिव्यप्रवर्षं शान्तिं लोकाः काश्चिदासादयन्ति॥
तस्मादस्मिन् भूतवर्षे सहायान् अन्यान् कांश्चित् प्राप्तवन्तो नवीनान्।
आशामुग्धा दग्धदुःखा भवन्तः कृतिप्र मार्गे पादमारोपयामः॥
भव्यं देवा योजयन्तां विधेये विघ्नोत्पाताः चीणतामावहन्ताम्।
काले देवो दिव्यवर्षं विधेयात् भूमिर्भूयात् सन्ततं शस्यपूर्णा॥
गावो भव्यं लब्धवत्यः प्रभूतं चीरं लोके हृदये निर्व्वपन्तु।
वर्णाः सर्व्वे स्वाश्रमान् पालयन्तः पुण्यं मार्गं स्वीयमुद्दीपयन्ताम्॥
आस्तां स्वार्थं सम्परित्यज्य राज्ये शुद्धं चित्तं पुण्यकृतिप्र परार्थम्।
साहित्यानां हृदये विस्तवन्तो विद्यावन्तः शाश्वतं मोदयन्ताम्॥
स्मारं स्मारं दोषिणां दण्डयोगं हित्वा दोषं पुण्यमार्गे चरन्तः।
लोका लोकान् शिचयन्तां सुलच्यं सिद्धं भूयाद् भारतं वर्षमेतत्॥
पत्रे सूत्रे सर्व्वसौभाग्यभूतेः सोत्साहा ये प्रोन्नतिं कामयन्ते।
तेषां देवः स्वस्ति दत्तां चिराय प्राप्तं तस्मात् स्वस्ति पत्रेण बाढ़म्॥
ये ये पत्रे सन्निबन्धं ददानाः दृष्टोत्कर्षास्योपकारं वहन्ति।
तेषां तेषामुत्तमा बुद्धिधारा पत्रोत्कर्षं साधयेत् सर्व्वकालम्॥
प्रारब्धानां कर्म्मणामस्तु सिद्धिः मध्ये मार्गे मास्तु विघ्नप्रपातः।
सायम्प्रातर्होमधूमोपचारः शून्योद्देशे नोल्लिसानं विधत्तां॥
अस्मिन् पत्रे सन्निबन्धप्रचारैः सन्तः सर्व्वे मानवान् शिचयन्ताम्।
प्राचो भावः संस्कृती दीप्तिमाप्ता शुद्धं कुर्य्यात् भारतं वर्षमेतत्॥

———

# वर्षारम्भो ।

( लेखकः श्रीकृष्णप्रसन्नतर्कवागीशः )।

मङ्गलमयस्य जगन्नियन्तुरसामान्यकारुण्यबलेनानुदिनं प्रसृता-वयवा शैशवे विन्यस्तचरणेयं संस्कृतसाहित्यपरिषत्पत्रिकोररीकृता-शेषक्लेशा सप्रतिबन्धमपि पञ्चमं वर्षं सहर्षमतिक्रान्तवती । स्तन्यत्यागमात्रके वयसि वर्त्तमानायाः पुनरस्याः संस्कृतसाहित्य-परिषदो मुखपत्रिकायास्तत्रभवतां सहृदयानामनुग्राहकाणां ग्राहकाणां साग्रहकृपादृष्टिमात्रेणैव यथाभिलाषमशेषविधा क्रमिकी-समुन्नतिः सुधीजनानां मानसमुल्लासयति ।

आदित आरभ्य वर्त्तमानसमयं यावत् प्रचरन्तीषु संस्कृतभाषा-समुपबृंहितास्वखिलमासिकपत्रिकासु न कस्याश्चिदपि प्रतिमासं यथाकालमेवं प्रकाशो दृष्टपूर्व्वो दृश्यते वा ऋते संस्कृतसाहित्यपरिषद-मिति साहसेन सानुनयमावेद्यते करुणावलोकनपरवशमानसेभ्यो ग्राहकमहोदयेभ्यः । शिशोरस्याः संस्कृतसाहित्यपरिषदः स्वल्पीयसा-समयेनैवंविधाया असम्भाविताया महोन्नतेरनन्यसाधारणं निदानं प्रभूतशास्त्रानुशीलननिर्म्मलमतीनां प्रतिभाप्रभोद्भासितभूतलानां तात्पर्य्यप्राचुर्य्यविजृम्भितवाक्यकदम्बकानां सविशेषभाषारससन्तर्पित-मानवहृदयचकोराणां विविधभावसौरभामोदितदिगङ्गनानां निबन्ध-कुसुमस्तोमग्रथयितॄणां पाठकमानसमोहनप्रबन्धसमर्पणं नाम । एतस्मिन्नन्तरे पत्रिकायामस्यां मधुरास्फुटवचनोच्चारणेन परमानन्द-सन्दोहिनि दुहितृजने वात्सल्यविगलितकृपासलिला जनका इव सस्नेह मनुपातितसकरुणनयनाः केरलदेशवासिनः पञ्चनदवसतयस्त्रिकलिङ्ग-वास्तव्या अग्रवननिवासिनो वाराणसेयाश्च प्रथितनामानो महात्मानः ससम्भ्रमं कीर्त्तनीयाः । येषामलौकिककल्पनातुलिकाविलसित

मन्तर्निहितगूढ़ार्थतत्त्वं प्रासादमाधुर्य्यादिविविधगुणभूयिष्ठं गम्भीरभावोपबृंहितं द्रवीकृतपाठकवृन्दहृदयं साहित्यदर्शनधर्म्मशास्त्रप्रत्नतत्त्वादिविविधविषयकप्रबन्धनिबन्धनं पाश्चात्यशिक्षालोक समुद्भासितचित्तवृत्तौ नवीनभावप्रवणेऽपि जनगणे अस्फुटाचराया अपि अस्याः समधिकमाग्रहं प्रथयत्यल्पेन कालेन। वङ्गदेशीयो मध्यदेशीय आसामप्रदेशीयश्च सम्राट्प्रतिनिधिवर्गः (Government) सविशेषमस्माभिर्बहुमन्तव्यः एते हि सम्राट्प्रतिनिधयोऽस्याः संस्कृतसाहित्यपरिषत्पत्रिकाया उन्नत्यै गृहीतादरा दत्तावधानाश्चेति यतोऽनेकसंख्याः पत्रिकाः सदयं गृह्णन्ति साग्रहमनुशीलयन्ति च। अस्याः मासिकपत्रिकायाः प्रकर्षविधावपि तेषां केचन यत्नाश्च समीक्ष्यन्ते, इति सर्व्वथा प्रशस्तिभाजस्ते। सदुःखमेतदावेदनीयमस्माकं यन्मुद्रणयन्त्रविपर्य्यासेन भृशं प्रतिबाधिताया अस्याः परिषन्मुखपत्रिकायाः समतीते वर्षे कादाचित्कः समयातिपातो महता यत्नेनापि वारयितुमस्माभिर्न पारितः। स खलु गरीयानपि अपराधो गुणग्राहिभिर्ग्राहकैः सकृपं मर्षितः। इदानीं पुनः पञ्चमवर्षदेशीया बालिकेव गृहीतलिपिकेयं परिषदो मुखपत्रिका प्रवर्त्तमानायां समायां यथाकालमुपस्थाय दाक्षिण्यवतां सर्व्वेषामेव सहृदयानां मनांसि तोषयितुं प्रभविष्यतीत्याशास्यतेऽस्माभिः।

इयं संस्कृतसाहित्यपरिषत्पत्रिका पञ्चवर्षदेशीया एव द्राविड़पञ्चनदकाश्मीराङ्गवङ्गकलिङ्गमगधप्रभृतिषु निखिलेषु भारतवर्षेषु प्रसिद्धिमुपगता, प्रतिदिनमेव तत्रतत्रविद्वद्भिः साग्रहं गृहीता सविशेषं सम्मानिता च।

यद्यपि बहुदिवसात् प्रभृति लब्धजन्मानः सुधीजननयनमनोहारिण्यो भावभाषादिविविधसौन्दर्य्यसम्पदा समलङ्कृतशरीरा रसमयाशेषवचोनिचितनिखिलावयवाः सकलया कलया विलसिता अपि प्राचीनाः काश्चन संस्कृतभाषया समुपनिबद्धा मासिकपत्रिकाः कृतधियामाग्रहा-

तिशय्यविरहादेव द्राघीयसा समयेनापि अलब्धप्रसरा विलुप्तसत्त्वाः समभवन् तथापि संस्कृतसाहित्यपरिषदो मुखपत्रिकेयं वर्षपञ्चकं याव-दवलम्बितकलेवरा साहित्यरसपिपासूनामनन्यसाधारणदाक्षिण्यादि-गुणगरिम्णा समलङ्कृतान्तःकरणानां स्नेहसलिलप्रवाहप्लावित-लोचनानां काव्यकलासंकलनकुशलानां कोमलमतीनामशेषदर्शन-गवेषणाविशेषितमानसानां न्यायानुगृहीतसत्तर्कजालनिराकृता-प्रमादोषसमूहानां महीयसां, परमानन्दसन्दोहनभागवतामृतपान प्रमत्तानामनन्तयत्नणान्तकश्रीमन्नारायणचरणनलिनकिञ्जल्क--रजःसमलङ्कृतमौलिमालानां भागवतप्रधानानां, गूढार्थतत्त्वालो-कितागमानुशीलनापसारितान्तर्मलानां विविधसिद्धिसाधनोपासनादि-कर्म्मसन्तानसञ्चारितज्ञानप्रभाकरप्रभाणां साधकतमानामपि हृदय-मन्दिरे लब्धप्रवेशा स्वकीयालौकिकचमत्कारितया पदार्थ-सार्थनिर्णयादुरपह्न ंहिततया भक्तिपीयूषरसनिष्यन्दनवचननिचय-निचिततया विचित्रतन्त्वयन्त्रितसारप्रसूनगुम्फितप्रबन्धमालिकया च काञ्चन चिरन्तनीं रमणीयामवस्थितिं सृष्टितत्त्वे प्रकृतेरिव सर्व्वथाप्यनिर्व्वचनीयामाकलितवतीति परमानन्दकारणं सर्व्वेषामेव नः समुपस्थितम् ॥ तदिदानीं सौजन्यावनमितशिरसः सहानुभूतिसुधारसाभिषिक्तसर्व्वगात्रविदितसंस्कृतसाहित्यपरिषत्-स्नेहबन्धनानामार्य्याचारपरम्परासंबोधिन्या देवभाषायाः प्रकर्षसिद्धौ बद्धपरिकराणामंशतो दत्तक्षणानाञ्च ग्राहकमहोदयानां, प्रबन्धनि-बन्धनसंदर्शितालोकसाधारणकरुणानां महामतिलेखकनिवहानाञ्च पुरस्तादयं विज्ञापयामो यत् गृहीतलेखनीकायाः पञ्चमसमासन्नि-वेशितचरणाया मधुरभाषाचरणादिपरिमोहितमनसस्तनयायाः शारीरमानसबलसङ्कलनाय शिक्षादीक्षादिव्यापारेषु निक्षिप्तकटाक्षा असीममहिमानं समयं क्षपयितुं नाणुमात्रं सङ्कोचन्ति कृतधियो भवन्तः । तथैव शिशोरप्यस्याः परिषन्मुखपत्रिकायाः प्रबन्धसंयोजन-

प्रसारलक्षणशारीरमानसबलानि संवर्द्धयितुं दत्तक्षणा गृहीतयत्नाश्च भवन्तो वर्त्तन्ताम्। ततश्च सकलकलानुशीलनविधौतान्तर्मलानां मानससरसिजरञ्जनशास्त्रमयूखजालकज्ञानमिहिराणामापामरसाधारणजनपूजितचरणसरोजानां प्रबन्धनिबन्धनार्थमङ्गीकृताशेषायासानां लेखकमहोदयानां करुणामन्दाकिनीपरमपावनपीयूषप्रक्षालितकलेवरा जगज्जनश्रवणमनोरञ्जनदैववचनप्रसारसाधनाय यतमानमानसानां सदसद्विवेकविभूषितचेतसां ग्राहकप्रवराणाञ्चाग्रहविशेषेण दत्तहस्तावलम्बा संस्कृतसाहित्यपरिषत्पत्रिकाभिजनवती प्रभूतगुणनिलया बालिका इव सर्व्वेभ्यः समानजातीयेभ्यः वर्द्धितादरा समुज्ज्वलाखिलगुणाकरं रत्नाकरं सरिदिव सर्व्वविधशोभाप्रकर्षं भारतवर्षमाश्रित्य क्रमेण कृत्स्नंजगद्विलासनिलयं विधातुं प्रभविष्यतीति। आनन्दमयी आद्याशक्तिरवश्यमेव पत्रिकायाः प्रकर्षसम्पादनक्रमेण पूर्णतामुपपाद्य आनन्दमहोदधौ सर्व्वान् निमज्जयिष्यतीति।

"पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते" इति
प्रमाणीभूतमुपनिषद्वाक्यमस्माकमाशास्पदम् ॥

---

## वेदान्तविमर्शः।

( पूर्व्वतोऽनुवृत्तः। )

( लेखकः—श्रीशिवनारायणशास्त्री विद्यावारिधिः। )

### जीवब्रह्मणोरैक्यम्

अथजीवब्रह्मणोरैक्यं प्रतिपाद्यते। जीवब्रह्मणोरैकतायां श्रुतयः—"अयमात्मा ब्रह्म। प्रज्ञानं ब्रह्म। तत्त्वमसि। अहं ब्रह्मास्मि।" इत्यादयः॥

॥ युक्तयः ॥

ब्रह्मशब्दो व्याकरणरीत्या बृहधातोर्निष्पद्यते। बृहधात्वर्थश्च विस्तारव्याप्तिरूपः। ततश्च ब्रह्मशब्दार्थो "बृहत्तमत्वाद् ब्रह्म इति निष्पद्यते। यत् सर्व्वतोऽधिकं विस्तृतं महच्चास्ति तद् ब्रह्मेति यावत्। किं बहुना? यद्धि आब्रह्मस्तम्बपर्य्यन्तं निखिले चराचरे जगति व्याप्तं तद्ब्रह्मेति जेगीयते। जीवात्मनो यथा वैश्वतैजसप्राज्ञतुरीयाख्याश्चतस्रोऽवस्था भवन्ति, ब्रह्मणोऽपि तथा वैश्वानरहिरण्यगर्भेश्वरतुरीयाख्येतीमाश्चतस्रोऽवस्थाः सन्ति। आत्मा यथा नखतः शिखान्तं जीवदेहे व्याप्तोऽस्ति जीवानां देहश्च आत्मनो देह एवास्ति। तथैव निखिले ब्रह्माण्डे ब्रह्म व्याप्तमस्ति, निखिलं ब्रह्माण्डं च विराड्ब्रह्मणः शरीरमेव। तथा च श्रुतिः—

"तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजाः॥" इति

तस्मात् निखिले चराचरे ब्रह्माण्डे व्याप्तमखण्डैकरसं पारमार्थिकं सद्वस्तु ब्रह्म इति फलति।

एवम् आत्मशब्दो व्याकरणरीत्या अतधातोर्निष्पद्यते। अतधात्वर्थश्च सातत्यगतिव्याप्तिरूपः। तेन "अतति सर्व्वत्र व्याप्नोतीति आत्मा" इत्यात्मशब्दार्थो निष्पद्यते। यो जीवदेहानां नखतः शिखान्तं तुरीयाख्ये सर्व्वस्मिन् देहे व्याप्तस्तथा यो जीवस्य जाग्रत्स्वप्नसुषुप्त्यवस्थाभिमानेन क्रमशो वैश्वतैजसप्राज्ञसंज्ञया ऽभिधीयते यस्य च तास्ववस्थासु तासां परस्परं व्यतिरेके सत्यपि बाढ़ं तुरीयरूपेणान्वयो वरीवर्त्ति, किं बहुना यस्तासु सर्वासु नित्यैकरसो वर्त्तते स आत्मा। तथा च स्मृतिः—

"यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह।
यच्चास्य सन्ततो भावस्तस्मादात्मेति कीर्तितः॥" इति

तस्मात् निखिले जीवदेहे व्याप्तमखण्डैकरसं पारमार्थिकं सद्वस्तु जीवात्मशब्दवाच्यम् इति फलति।

तदेवं ब्रह्मण आत्मनश्च यौगिकोऽर्थः समान एव न विभिन्नरूप इति यौगिकार्थैक्यबलेन जीवात्मपरमात्मनोरभिन्नता सिद्धा भवति।

यच्चाज्ञानिनां तयोः परस्परं भेदः प्रतिभासते, स केवलं ब्रह्मात्म-शब्दार्थयोरेकतया तत्र भेदस्य वक्तुमशक्यत्वात्।

वस्तुतो यथा मृत्युनिवारणधर्मशालिन एकस्यैव पदार्थस्य "अमृतं सुधा" इति द्वे भिन्ने भिन्ने नाम्नी वर्तेते, वाच्यपदार्थस्तु तयोरेक एवास्ति, यथा वा तृषानिवारणधर्मशालिन एकस्यैव वस्तुनो 'जलं पानीय'-मिति द्वे नाम्नी स्तः, यदि यूयं स्वभृत्यं 'जलमानयेति पानीय-मानयेति वा' कथयथ तदा स यदि विक्षिप्तचेता न भवति तर्हि-नामद्वये कथिते तृषानिवारणधर्मशालिनमेकमेव पदार्थमानेष्यति नतु जले कथिते जलम्, पानीये कथिते मृदम्। तथैव ब्रह्मात्म-शब्दावपि एकस्या एव पारमार्थिकव्यापकसत्ताया द्वे भिन्ने नाम्नी विद्येते। अतो नाममात्र एव भेदो वरीवर्त्ति नतु तद्वाच्यवस्तुनीति सुतरां तयोरभेदः। एवं वा विज्ञेयम् यथा व्यष्टिवृक्षाणां समष्टि-र्वनमित्यभिधीयते, एवं व्यष्टिजीवात्मनः समष्टिरेव ब्रह्म।

यथा जीवात्मशब्दस्य जीवे परमात्मशब्दस्य च ब्रह्मणि प्रयोगो भवति, एवमात्मशब्दस्य जीवे ब्रह्मणि च द्वयोरेव प्रयोगो भवति, ब्रह्मात्मशब्दयोरेकस्यैव पारमार्थिकसद्वस्तुनो वाचकत्वात्। जीवात्मनि परमात्मनि च यो भेदः प्रतिभासते स केवलं जीवपरमरूपोपाधिकृत एवास्ति। भागत्यागलक्षणया जीवपरमोपाधिरूपविरुद्धांशत्यागे "आत्मा" "आत्मा" इत्येव द्वयोरेकएव समानोऽंश आत्मावशिष्टो भवति। एवं वा विज्ञेयम्—जीवपरमरूपोपाध्योर्मिथ्यात्वेन शून्यत्वाभ्युपगमात् आत्मनोरेकता सिद्धा भवति। अत्रेदं निदर्शनं यथा—एक एव सर्वव्यापक आकाशः घटमठमहद्रूपोपाधिभिः "घटाकाशः" "मठाकाशः" "महाकाशः" इति भिन्नभिन्ननाम-भिरुच्यते। परं वस्तुतः स एक एवास्ति न भिन्नः। तत्र दया वयं

मठे स्थिताः पुरोवर्त्तिनं घटं पश्यामः तदास्माकं बुद्धावाकाशत्रयं स्फुरति, यथा—घटाभ्यन्तरवर्त्ती घटावच्छिन्नो घटाकाशः एकः, घटो यत्र स्थितोऽस्ति तादृशमठाभ्यन्तरवर्त्ती मठावच्छिन्नो मठाकाशो-द्वितीयः, यदभ्यन्तरे मठःस्थितोऽस्ति स महाकाशस्तृतीय इति। घटे स्फोटिते मठे वा भग्ने केवलं महाकाश एव स्थितो भवति। तथैव महाकाशवत् सर्वस्मिन् ब्रह्माण्डे व्याप्तो ब्रह्मस्वरूप आत्मा जीव-परमरूपोपाधिभ्यां "जीवात्मा" "परमात्मा" इति च मन्यते, घट-मठोपाधिपरित्यागवत् जीवपरमोपाधित्यागे महाकाशवत् अखण्डै-करसं सर्वव्यापि पारमार्थिकम् आत्मवस्त्वेव अवस्थितं भवति। तदित्थं जीवब्रह्मणोरैक्यं निर्विवादं सिध्यति।]

अनुभवः।

समाधौ ब्रह्माकारवृत्तौ च ब्रह्मात्मनोरेकतायाः सम्यगनुभवः क्रमशः समाधिस्थानां जीवन्मुक्तानां च भवतीति तदर्थसमाधिर्ब्रह्मा-कारवृत्तेश्चाभ्यासोऽनुष्ठेयः। समाधौ द्वैतं संज्ञामात्रमपि न तिष्ठति। ब्रह्माकारवृत्तौ च जीवन्मुक्ताः स्वं तन्मयं पश्यन्ति।

ब्रह्मणः सत्यता।

ब्रह्मणः सत्यतायाः सिद्धितः प्राक् सत्यमिथ्याशब्दयोरर्थज्ञान मत्यावश्यकम्, शब्दार्थज्ञानमन्तरा बोधानुपपत्तेः। तत्र त्रिकालाबाध्यं सत्यम्। किमुक्तम्? यद्धि भूतभविष्यद्वर्त्तमानाभिधेषु त्रिकालेषु, जाग्रत्स्वप्नसुषुप्त्यभिधासु तिसृष्ववस्थासु पूर्ववर्त्तमानभाविषु त्रिषु जन्मसु च एकरसस्तिष्ठति तत् सत्यम्। त्रिकालबाध्यं च मिथ्या। किमुक्तम्? यद्धि त्रिषु कालेषु त्रिष्ववस्थासु त्रिषु जन्मसु चैकरसं न तिष्ठति तन्मिथ्या। सिद्धान्ते यज्जगतो मिथ्यात्वमुच्यते तस्यापीद-मेव तात्पर्यम्—त्रिषु कालेषु नैकरसं तत्तिष्ठतीति, ननु स्वरूपनाश-स्तत्राभिप्रेयते। इति

ब्रह्मणः सत्यतायां श्रुतयः—

"सत्यं ज्ञानमनन्तं ब्रह्म। अजो नित्यः शाश्वतः। नित्यं विज्ञानमानन्दं ब्रह्म। अविनाशी वा अरे अयमात्मा।" इत्याद्याः।

ब्रह्मस्वरूपा सत्यत्वानभ्युपगमे दोषद्वयं समापतति अकृताभ्यागमः कृतविप्रणाशश्च। तत्र पूर्व्वत्र न कृतानां कर्म्मणां वर्त्तमाने फलभोगः अकृताभ्यागमः, वर्त्तमाने काले कृतानां कर्म्मणां भाविकाले फलभोगाभावश्च कृतविप्रणाशः। जीवात्मा वर्त्तमानेऽस्मिन् जन्मनि शुभाशुभकर्म्मणां फलं भुञ्जानो दृष्टिपथमवतरति, भोगश्चायं पूर्वजन्मकर्म्मकृतातिरिक्तस्य नान्यस्य कस्यचित् फलं भवितुमर्हति "फलं हि कृतानामेव कर्म्मणां मिलति नाकृतानाम्" इति नियमात्। यावच्च पूर्व्वत्र कस्यचित् कर्म्मकर्तुः सद्भावो न भवेत् तावत् कर्म्मणां कृतिरेव दुर्घटा, तस्मादनायत्या पूर्व्वजन्मनि जीवात्मसद्भावो मन्तव्यो भवति, अन्यथा ऽकृताभ्यागमदोषप्रसङ्गात्। एवं जीवात्मा अयं वर्त्तमाने जन्मनि कर्म्म कुर्व्वाणः प्रत्यक्षं दृष्टिपथमवतरति "कृतानि च कर्म्माणि निष्फलानि न भवन्ति" इति नियमात् वर्त्तमानजन्मनि कृतानां कर्म्मणां फलभोगाय भाविजन्मनि कर्म्मकर्त्तुः सद्भावोऽपि बलात् मन्तव्यो भवति। अन्यथा कृतविप्रणाशदोषप्रसङ्गात्। तदेवं वर्त्तमानीयकर्म्मफलभोगैः प्राग्भवीयकर्म्मकर्त्तृसद्भावनिश्चयात्, वर्त्तमाने जन्मनि कृतानां कर्म्मणां फलभोगाय भाविजन्मनि भोक्तृसद्भावनिश्चयाच्च आत्मनः ( ब्रह्मणः ) नित्यता ( सत्यता ) सिद्धा भवति। तद् यथोक्तं भगवता श्रीकृष्णेन—

"नत्वेवाहं जातु नासं नत्वं नेमे जनाधिपाः।
न चैव न भविष्यामः सर्व्वे वयमतःपरम्॥" इति

अनुभवः

सर्व्वसाधारणोऽयमनुभवो वरीवर्त्ति—'योऽहं मातुर्गर्भे आसं स एवाहमुत्पन्नः, योऽहमुत्पन्नः स एव बाल्यावस्थायामासम्, योऽहं बाल्यावस्थायामासं स एवाहं युवावस्थायां, यश्च युवावस्थायामासं स

एवाहं वृद्धावस्थायामस्मीति। तथा योऽहं रात्रावस्वाप्सं स एवाहं प्रातरुत्थितः इति। एवं मया यानि पूर्व्वजन्मनि कर्म्माणि कृतानि, तेषां फलं वर्त्तमानेऽस्मिन् जन्मनि भुनज्मि, यानि तस्मिन् जन्मनि कर्म्माणि करोमि, तेषामागामिजन्मनि फलं भोक्ष्यामीति। नास्तिकोऽपि नैवं मन्तुं शक्नोति, अन्य एव मातुर्गर्भे आसम्, अन्य एवोत्पन्नः अन्य एव बाल्यावस्थायाम्, अन्यएव युवावस्थायाम् आसम्, अन्यएष च वृद्धावस्थायामस्मीति। का कथा पुनरन्यस्य ? तस्मात् सर्व्व-साधारणानुभवेन ब्रह्मस्वरूपात्मनो नित्यता ( सत्यता ) संसिद्धा भवतिः। तथा च गीतायां भगवान् श्रीकृष्णः—

"देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति।" इति

जगतो मिथ्यात्वम्।

तत्र जगच्छब्दो निखिलचतुर्द्दशभुवनभूतब्रह्माण्डोपलक्षकः। ब्रह्माण्डे यावन्तः स्थावरजङ्गमात्मका देहाः सन्ति ते सर्व्वे तमः-प्रधानायाः प्रकृतेर्विकाराः। प्रकृतिश्च मायेत्युच्यते। अतो ब्रह्मणो-भिन्नं यावच्चराचरात्मकं ब्रह्माण्डमस्ति, तत्सर्व्वं मायामयम्, माया-विकारमिति यावत्, अतः कारणरूपाया मायाया मिथ्यात्वे सिद्धे तत्कार्य्यभूतस्य ब्रह्माण्डस्य मिथ्यात्वं स्वयमेव सिद्धं भवति। संसार-जगद्ब्रह्माण्डदृश्यप्रपञ्चभुवनमायाप्रभृतयः शब्दाः ब्रह्मभिन्नात्मजगतः पर्य्यायाः। जगतो मिथ्यात्वे श्रुतयः—

"नेति नेति। नेह नानास्ति किञ्चन। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति।" इत्याद्याः।

॥ युक्तयः ॥

ईक्षणाद्याः प्रवेशपर्य्यन्ताः श्रुतयो निखिलचराचरब्रह्माण्डस्योत्-पत्तिं ब्रह्मतः प्रतिपादयन्तीति निखिलदृश्यप्रपञ्चस्य ब्रह्म कारणं जगच्च तत्कार्य्यमिति सिध्यति। ततश्च कार्य्यत्वादेव घटपटादि-

कार्य्यवत् प्रपञ्चस्यानित्यत्वं मिथ्यात्वं सिद्धं भवति। "वाचारम्भणं विकारो नामधेयम्" "यत् कृतकं तदनित्यम्" इत्यादिन्यायात्। अतो जगतो मिथ्यात्वं कृतकत्वात् तावत् सिद्धं भवति।

(२) अपिच—

निखिलब्रह्माण्डस्य पञ्चैवांशाः सन्ति—अस्ति, भाति, प्रियं, नाम, रूपं चेति। तत्र पूर्व्वस्त्रिवर्गा ब्रह्मणोंश इति सत्यः, नाम रूपञ्च मायांश इति मिथ्या। अस्ति,भाति,प्रियञ्च क्रमशः सच्चिदानन्दनामतया भाष्यन्ते। वस्तुतः अस्तिभातिप्रियाणां सच्चिदानन्दानां त्रयाणामंशानां सम्मेलनमेव ब्रह्मणः स्वरूपम्। किमुक्तम्? अस्तिभातिप्रियाणां त्रयाणां मेलनेनैव ब्रह्मणः सच्चिदानन्द इति नाम तच्च सत्यम्। एवं नामरूपयोर्द्वयोरंशयोः सम्मेलनमेव जगतः स्वरूपम्—किमुक्तम्? नामरूपे द्वे मिलिते एव जगदित्युच्यते। तच्च मिथ्या।

तत्र कोऽपि पदार्थो गृह्यतां तत्र च पूर्व्वोक्तानां पञ्चानां सूक्ष्मेक्षणया विचारेऽस्त्यादित्रयाणां सत्यत्वं नामरूपयोश्च मिथ्यात्वं स्पष्टीभवति। यथा—दुग्धस्यैव विचारः क्रियताम्। "दुग्धमस्ति" इत्यस्त्यंशः "दुग्धं भासते" इति भात्यंशः, "दुग्धं प्रियम्" सुस्वादुत्वात् पुष्टिकरत्वाच्चेति प्रियांशः, "दुग्धमिति नाम" इति नामांशः "शुभ्रं जलस्येव द्रवम्" इति रूपांशः। तत्रैषु पञ्चस्वंशेषु प्रथमा स्त्रयोंशा दुग्धस्य रूपान्तरे सत्यपि वाढं तिष्ठन्ति, अन्तिममंशद्वयम् च व्यभिचारित्वान्न तिष्ठति। तथाहि दुग्धे तक्राद्यम्लपदार्थपातनात् दुग्धस्य रूपान्तरं दधि भवति। तत्र च दध्नि दुग्धवत्सत्या अस्त्यादयस्त्रयो ब्रह्मणोऽंशा वाढं तिष्ठन्ति। नामरूपात्मकं मिथ्याभूतं मायांशद्वयञ्च न तिष्ठति। यथा—"दधि अस्ति" इत्यस्त्यंशः "दधि भासते" इति भात्यंशः "दधि प्रियम्" सुस्वादुत्वात् पुष्ट्यादिकारित्वाच्चेति प्रियांशः, "दधि इति नाम" इति नामांशः "शुभ्रं सान्द्रम् ( गाढ़म् )" इति रूपांशः। विचार्य्यताम् दुग्धस्य रूपान्तरे दध्नि सत्यपि अस्त्यादय-

स्त्रयोंऽशा यथा दुग्धावस्थायामासन्, तथैव सम्प्रत्यपि वर्त्तन्ते, परं नामरूपयो: सर्व्वथा परिवर्त्तनमभूत् दुग्धावस्थायां "दुग्धमितिनाम" इति नामांश आसीत् सम्प्रति तु "दधि इति नामांशो जात:। ततो दध्नि मथिते दध्नो रूपान्तरं नवनीतं भवति तक्रञ्च। अत्रापि अस्त्यादयस्त्रयोंशास्तथैव तिष्ठन्ति नामरूपयोश्च सर्व्वथा परिवर्त्तनं जायते। एवं पदार्थान्तरेषु स्वयमूह्यम्। ततश्च अस्तिभातिप्रिय-रूपाणां ब्रह्मणोंशानां सर्व्वदा सर्व्वपदार्थेष्वेकरसेन वर्त्तमानत्वात् सत्यत्वम्। नामरूपयोश्च व्यभिचारित्वान्मिथ्यात्वमिति निर्णीतं भवति। तदित्थं मायायास्तत्कार्य्यभूतस्य जगतश्च मिथ्यात्वं सिद्धं भवति। ईदृशे विचारे परिपक्वे सति जीवन्मुक्ता मायामयमिथ्यानाम-रूपदृष्टिं विहाय कालत्रयाबाध्यब्रह्मांशभूतास्तिभातिप्रियदृष्ट्या निखिलब्रह्माण्डान्तर्गतं स्वमपि निरन्तरं ब्रह्मरूपं पश्यन्ति। तथा चाभियुक्ता: ।

"अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् !
आद्यत्रयं ब्रह्मरूपं जगद्रूपं ततोद्वयम् ॥" इति

( क्रमश: )

---

## नैरुक्तमालोचनम् ।

( लेखक:—श्री.................. )

यत्तु केचिन्नवनवतत्त्वोद्भावनव्यवसायिनो निरुक्तमाश्रित्य सायण-मधुसूदनादीनां वचनेषु 'तदीयमेतद्विषयकं ध्वान्तमेव प्रकटितं' पश्यन्ति, तत्रैवाद्य किञ्चिद् विचारयामो वयं 'ध्वान्त'-शालिनां तेषां पदाङ्कानुयायिनोऽत्र निबन्धे।

निरुक्तमित्यस्य वेदाङ्गत्वेन शिक्षायामुक्तस्याङ्गस्य स्वरूपप्रदर्शनार्थं

तल्लक्षणं सायणो निरुवाच—"अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम्। गौः ग्मा ज्मा क्ष्मा क्षा क्षमेत्यारभ्य वसवो वाजिनो देवपत्न्यो देवपत्न्य इत्यन्तो यः पदानां समाम्नायः समाम्नात स्तस्मिन् ग्रन्थे पदार्थावबोधाय परापेक्षा न विद्यते एतावन्ति पृथिवी-नामान्येतावन्ति हिरण्यनामानीत्येवं तत्र तत्र विस्पष्टमभिहित-त्वात्।........। तद्व्याख्यानञ्च समाम्नायः समाम्नात इत्यारभ्य तस्यास्तस्यास्ताद्भाव्यमनुभवत्यनुभवतीत्यन्तैर्द्वादशभिरध्यायैर्यास्को निर्ममे। तदपि निरुक्तमित्युच्यते, एकैकस्य पदस्य सम्भाविता अवयवार्थास्तत्र निःशेषेणोच्यन्त इति व्युत्पत्तेः।.........। तस्माद्वे-दार्थावबोधायोपयुक्तं निरुक्तम्" इति। अत्र द्विविधलक्षणोक्तौ, द्वैविध्यस्य च उभयसाधारणैकलक्षणं विना अनुपपत्तेः, साधारणं निरुक्तमात्रलक्षणं किमपि वक्तव्यमापतति। यद्यपि तत् सायणेन कण्ठतो नोक्तं, तथापि 'तदेतद्वेदार्थावबोधायापेक्ष्यत' इत्युक्तौ 'पदार्थावबोधाय परापेक्षा न विद्यत' इत्युक्त्या च ध्वन्यत एव। तत्पुनः—पदार्थावबोधाय अन्यनिरपेक्षवचनं निरुक्तमिति उभयत्रैव निघण्टुनिरुक्तभाष्ययोर्वर्त्तते। उक्तेऽत्र लक्षणे 'अन्यनिरपेक्ष'-मित्यन्यशब्देन पदार्थावबोधनाय प्राप्तो व्याकरणरूपो विद्यास्थान-विशेषो गृह्यते, तन्निरपेक्षतया पदार्थावबोधोपयोगितया च पद-जातात्मकनिघण्टोः, सम्भाविताववयवार्थबोधनद्वारेण भाष्यस्य च ग्रहणं भवेत्। प्रातिस्विकं विशेषलक्षणन्तूक्तमेव।

निघण्टोरनिरुक्तत्व-शङ्का

अत्र केश्चिदाशङ्क्यते—स्यादेतत्, यदि नाम निघण्टोर्निरुक्तत्वं प्रामाणिकं भवेत्तदेदं युज्येतापि। प्रमाणमेवतु तत्र न पश्यामः, प्रत्युत ग्रन्थेषु प्राचीनेष्वर्व्वाचीनेषु च तद्वैपरीत्यमेवोपलभ्यते। तथाहि छान्दोग्यो-पनिषदि (८, ३, ३) "स वा एष आत्मा हृदि, तस्यैतदेव निरुक्तं हृद्ययमिति तस्मात्हृदयम्" इति हृदयशब्दस्य निरुक्तिः, गोपथब्राह्मणे

( १, १, १४-२० ) च "ओङ्कारं पृच्छामः,······किन्निरुक्तम् ?······ आपेरोङ्कार" इत्योङ्कारशब्दस्य निर्वचनमुपलभ्यते। निघण्टौ तु शब्दयोरनयोः कुत्रापुल्लेखादर्शनेन, छान्दोग्य गोपथयोर्निर्वचनार्थं एव 'निरुक्त'शब्दप्रयोगेन च सुव्यक्तं प्रतीयते—नैवाभिमतं तयोः शब्दपाठरूपस्य निघण्टोर्निरुक्तत्वमिति, विज्ञायते च 'अर्थाववोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम्' इत्यस्य सायणीयाद्य- लक्षणस्यासम्प्रतिपत्तिः। मनुस्मृतिटीकाकृताकुल्लूकभट्टेन 'श्राद्ध- भुग्वृषलीतल्प'मिति ( ३, २५० ) श्लोकव्याख्याने "निरुक्तञ्च कुर्व्वन्ति वृषस्यन्ती चपलयति भर्त्तारमिति वृषली"ति ब्रुवता उक्तमेवानु- मन्यते! प्रातिशाख्यभाष्यकृद्विष्णुमित्रोऽपि 'निरुक्तं पदविभाग- मन्त्रार्थनिरूपणार्थं शास्त्र'मिति लक्षयन् पूर्व्वोक्तमेव विशदयति। महाभारतेऽप्यादिपर्व्वणि "महत्त्वाद्भारवत्त्वाच्च महाभारतमुच्यते। 'निरुक्त'मस्य यो वेद सर्व्वपापैः प्रमुच्यत" इत्यत्र, मोक्षधर्म्मे—"यानि नामानि ते देव कीर्त्तितानि महर्षिभिः। वेदेषु स पुराणेषु यानि गुह्यानि कर्म्मभिः। तेषां 'निरुक्तं' त्वत्तोऽहं श्रोतुमिच्छामि केशव।" इत्यादिषु च स्थानेषु 'निरुक्त'शब्दाः सायणीयद्वितीयलक्षणेनवाक्रान्ता दृश्यन्ते, नत्वाद्येन। न च तत्र तत्र निरुक्ता वृषलीमहाभारत- नारायणादि शब्दा निघण्टौ दृश्यन्ते। यास्कोऽपि निघण्टुं निघण्टुनाम्नैव व्यवहरति, न तु निरुक्तत्वेन। कात्यायनीयं 'नाम च धातुजमाह निरुक्ते, व्याकरणे शकटस्य च तोकम्' इत्यनेनोच्यमानं नाम्नो धातुजत्ववचनं निघण्टावदृष्टमेव। पतञ्जलि- रपि 'नाम खल्वपि धातुजमेवमाहुर्नैरुक्ताः' ( ३, २, ३ ) इति ब्रुवन् यास्कीयभाष्यस्यैव निरुक्तत्वं द्योतयति, तत्रैव यास्कीयभाष्ये नाम्नो- धातुजत्ववचनस्योपलब्धेः। भर्तृहर्युक्तस्य 'वर्णागमो वर्णविपर्य्यय- श्चे'त्यादिनिरुक्तलक्षणस्यापि यास्कीय एव भाष्ये सत्त्वमवगम्यते। निरुक्तवृत्तिकृता देवराजयज्वनाऽपि अनेकवारं यास्कभाष्याभि-

प्रायेणैव निरुक्तशब्दः प्रयुज्यते। दुर्गाचार्य्येणापि मङ्गलश्लोके—'पञ्चाध्यायी निघण्टोश्च निरुक्तमुपरिस्थितम्' इति ब्रुवता निघण्टोरनिरुक्तत्वं बोध्यते। एवञ्च निघण्टोरनिरुक्तत्वादयुक्ता सायणस्य निघण्टोर्निरुक्तत्वोक्तिरिति।

### निघण्टोरनिरुक्तत्वशङ्कापरिहारः।

निघण्टोर्निरुक्तत्वे यास्कसम्मतिः

अस्माभिस्तु प्रथमतो यास्कीयभाष्यस्यैवोपलभ्यते निघण्टोर्निरुक्तत्वे प्रामाण्यम्। व्यक्तं हि दृश्यते नैरुक्तनामोल्लेखपुरःसरस्य तत्र तत्र भाष्यव्यवहारस्य निघण्टभिप्रायेणैव प्रवृत्तता। तथाहि—तात्पर्य्यविशेषाधीन एव लक्ष्यते निघण्टौ पदसंग्रहो, नतु याद्दच्छिकः। तत्र त्रिविधदेवतास्वीकारेण तासु पार्थिवदेवताया अग्नेः स्थानभूतायाः पृथिव्याः सन्निहितत्वेन पुरउपस्थितत्वात्तन्नामोक्तिः क्रियते सर्व्वादौ। उल्लिख्य च नामानि तत् संख्याप्रदर्शनव्याजेन खण्डसमाप्तौ पृथिवीत्यनेन लोकप्रसिद्धार्थकेन पर्य्यायत्वप्रदर्शनपुरःसरं कथ्यते तदर्थः। ततः उत्तरं पार्थिवपदार्थेषु हिरण्यस्य सर्व्वादरणीयत्वेन तन्नामानुरक्ता उल्लिख्यन्ते द्वितीयदेवतास्थानभूतान्यन्तरिक्षनामानि। ततश्च तृतीयदेवतास्थानभूतस्य द्युलोकस्य बोधकविशेषनाम्नामभावात् क्रियते अन्तरिक्षसाधारणानां द्युलोके तद्देवतायाञ्च प्रसिद्धानां स्वरादीनामुल्लेखः। अग्निरित्यादिपञ्चमाध्याये देवताबोधकपदप्रदर्शनप्रसङ्गे पार्थिवदेवतानामेवाग्न्यादीनां प्रथममुक्तिः, स्तत आन्तरिक्षाणां, ततश्च द्युलोकसम्बन्धिनीनामश्व्यादीनाम्। अत्रापि वेदे स्तुतानां तत्तल्लोकीयदेवताविशेषाणां प्रथममुक्तिर्विशेषेण—अग्निः, वैश्वानरः, अश्वः, शकुनिः, मण्डुकः; वायुः, वरुणः, इन्द्रः, अश्विनौ, उषा इत्यादिना। ततश्चोच्यन्ते तत्तल्लोकीयदेवता गणशः सामान्येन—नद्यः, आपः, ओषधयः; मरुतः, रुद्राः ऋभवः; आदित्याः, सप्त

ऋषयः, देवा इत्यादिना। ततश्चोल्लिख्यन्ते स्त्रियस्तत्तत्स्थानाः— रात्रिः, अरण्यानी, श्रद्धा; अदितिः, सरमा, सरस्वती; देवपत्न्य इत्येवंरूपाः। क्रमस्तत्रैवं नियत एवोच्यते। मध्येऽपि (३, २९) 'प्रपित्वे, अभीके' इत्यादिखण्डान्ते 'द्विशोनामानी'त्येवंविधोल्लेखादितोऽपि विज्ञायते अर्थविशेषबोधनतात्पर्य्येनैव प्रवृत्तं निघण्टुकमिति। तत्तदर्थाभिधायिकामेतां निघण्टूक्तिमभिप्रेत्यैव कृतस्तत्र तत्र यास्केन 'निरुक्त'नामोल्लेखः। तद् यथा—वृत्रपदार्थप्रदर्शनावसरे 'तत् को वृत्रः? मेघ इति नैरुक्ताः' इत्येषा भाष्योक्ति (२, १६, २) मेघनाम्नां भाष्यप्रदर्शनात् पूर्व्वमेव प्रसङ्गान्तरे विद्यते, निघण्टौ च (१, १०) मेघनामसु 'वृत्रः, असुरः' इत्यादिना वृत्रस्य मेघपरत्वं प्रदर्श्यते इत्यक्रमेणापि निघण्टूभिप्रायिकत्वं तस्य मन्तव्यं भवेत् भाष्यवचनस्य। 'नैरुक्ता' इति बहुवचनोक्तिरपि सङ्गच्छत एव निरुक्ताधिगन्तृणां बहुत्वेन। तथैव तस्करशब्दस्य निर्व्वचनप्रदर्शनावसरे तस्करस्तत्करोतीति निर्व्वचनं प्रदर्श्य तच्छब्दस्य सर्व्वनामत्वेन सर्व्वार्थसाधारण्येन प्रवृत्ततया अर्थानिर्णयं विचार्य्य तदर्थं नैरुक्तसम्मतिप्रदर्शनव्याजेन 'पापकमिति नैरुक्ता' इत्यर्थं निश्चिन्वता 'स्तेन' नामसूक्तस्करशब्दस्य स्मारणं कृतम्। तथा यज्ञनामव्याख्यानावसरे (३, १९, ६) 'यज्ञः कस्मा'दित्युक्त्वा निघण्टुध्वनितमेवोत्तरं तत्र प्रदर्शितं 'प्रख्यातं यजतिकर्म्मेति नैरुक्ता' इत्यनेन। निघण्टौ हि नामानुक्त्वा खण्डान्ते तदर्थप्रदर्शनावसरे सर्व्वत्र पूर्व्वोक्तस्यापि प्रसिद्धार्थपदस्यैवोल्लेखः पृथिवीनामधेयान्यन्तरीक्षनामधेयानीत्यादिना क्रियते। ततश्च विज्ञायते पृथिवीति प्रसिद्धार्थस्यैव वाचकाः पूर्व्वोक्ताः शब्दा इति। एवं यज्ञनामसु 'यज्ञः, वेनः' इत्यत्रोक्तस्यापि यज्ञशब्दस्य 'पञ्चदशयज्ञनामानी'ति खण्डान्ते पुनरुल्लेखेन प्रसिद्धपदार्थकत्वं यज्ञशब्दस्य दंध्वन्यते। तद् गृहीत्वैवोक्तविधा भाष्योक्तिरित्युक्तम्। अनुमतिराकयोः (११, ३०, २) सिनीवालीकुह्वाश्च

( ११, ३१, २ ) व्याख्यानावसरे 'देवपत्न्याविति नैरुक्ताः' इत्यनेन उपर्युक्तरीत्या निघण्टभिमतमेव देवपत्नीत्वं प्रकटीक्रियते। एवं साध्या इत्येतस्य व्याख्यायां ( १२, ४१, १ ) 'द्युस्थानो देवगण इति नैरुक्ताः' इत्यनेनापि निरुक्तपाठत एवावसितं द्युस्थानदेवगणत्वं प्रकटीकृतमिति निघण्ट्वभिप्रायिकैव निरुक्तोक्तिः। न च स्वाभिप्रायिकैव सा बहुवचनान्तोक्तिरिति भ्रमितव्यं स्वाभिप्रायेण तेन कुत्रापि निघण्टुप्रसिद्धार्थस्थले नैरुक्तनामानुल्लेखात्। न वाऽन्यनिरुक्ताभिप्रायिकत्वं तदुक्तेर्मन्तव्यं, सर्वान्यनैरुक्ताभिप्रायकवचनस्थले भाष्यकृतो नैरुक्तनामानुल्लेख एव शैलीदर्शनात्। तथाहि 'निधापाश्या भवति' 'पाशः पशुमयमङ्ग भवतो' ( ४, २, १-२ ) त्यादि वचनन्त्वन्यनिरुक्तसाधारणमेवात्र भाष्य उद्धृतमिति विज्ञायते, न च तत्र तथा उल्लेखस्तस्य संलक्ष्यते। अन्यत्राप्येकैकार्थनिर्वचनस्थले अनेकेषां विशेषतः प्रामानां नाम्नामुल्लेखेऽपि सर्व्वसाधारणेषु प्रामानां नैरुक्तनाम्नामनुल्लेख एव दृश्यते भाष्यशैल्याम्। यथा स्थालशब्दनिर्वचनस्थले ( ६, ८, १) 'स्थाल आसन्नः संयोगेनेति नैदाना' इत्युल्लिख्य नैदानानां नाम, तत उत्तरं नैरुक्ताभिमतव्युत्पत्तिप्रदर्शनावसरे 'स्थाह्राजानावपतीति वा' इति नैरुक्तनामानुबन्धेनैवोल्लेखः कृतः। तथा सामशब्दनिर्वचनप्रदर्शनावसरे ( ७, १२, ४ ) 'साम सम्मितमृचा, स्यतेर्वा, ऋचा समं मेन इति नैदाना' इत्यत्र पूर्व्वं नैरुक्ताभिमतमेव प्रदर्शितं तन्नामोल्लेखस्तु तत्र नैव कृतः। प्रत्युत सकलनिरुक्तकाराभिमतत्वप्रदर्शनावसरे प्रयाजानां का देवता इति विचारे ( ८, २२, ४— ) निरुक्तकाराणां तद्विषये मतानि नामोल्लेखं विनैवोपन्यस्य अन्ते 'आग्नेया इति तु स्थिति'रित्येवोक्तम्, न च कृतो नैरुक्तादिनामावनिबन्धः। तदेव "चत्वारिवाग्गि"ति मन्त्रव्याख्यावसरेवाचश्चतुष्टयप्रदर्शनाय 'नामाख्याते चोपसर्गनिपाताश्चेति वैयाकरणाः', 'मन्त्रः, कल्पो, ब्राह्मणं, चतुर्थी व्यावहारिकीति याज्ञिकाः' इत्युक्तिद्वयं कृत्वा तत

'ऋचो यजूंषि सामानि चतुर्थी व्यावहारिकीति नैरुक्ताः' इत्यनेन निघण्टुभिमतपक्षस्यैवोल्लेखः कृतः । दृश्यते हि निघण्टौ वेदत्रितयमभिप्रेत्य तद्गतानामप्रसिद्धार्थकपदानां संग्रहणम्, तेन तादृशत्रितयस्वीकरणादर्थादेव तद्भिन्नाया व्यावहारिकत्वमभ्युपगम्यते ; अतएव तदभिप्रायिक एव नैरुक्तशब्दस्योल्लेखः । तत उत्तरं 'सर्पाणां वाग् वयसां क्षुद्रस्य सरीसृपस्य चतुर्थी व्यावहारिकीत्येके' इ'त्येक'शब्द-ग्रहणेन निरुक्तान्तरकाराणामेव मतमुल्लिखितम् । लोके हि वाच एकत्वमेवाश्रीयते, वैयाकरणाभिप्रायेण चतुष्ट्वं, लौकिकवैदिकभेदेन द्वित्वं वा । यदुक्तं शिक्षायां 'यथोक्तं लोकवेदयो'रिति, यथा वा पतञ्जलिना व्याकरणभाष्ये 'अथ शब्दानुशासन'मिति पङ्क्ति व्याख्यावसरे 'केषां शब्दानां लौकिकानां वैदिकानाञ्चे'ति द्वैविध्यमुक्तम् ; अग्रे च 'प्रयुक्तानामन्वाख्यान'मिति निर्णीततया प्रयुक्तशब्दानामेव भाषात्वेन ग्रहणाद् वाचो द्वित्वमेव प्रदर्शितम् ; पदानां चातुर्विध्यमपि प्रदर्श्यते तेनेति नैतावता लोके वैयाकरणोक्तप्रकारापेक्षया अन्यादृशभाषास्वीकारस्तत उत्प्रेक्षितुं शक्यः । एवञ्च उक्तमन्वव्याख्यानाभिप्रायेण वैयाकरणातिरिक्तानां त्रयाणामेव प्राप्तिः, याज्ञिकानां यज्ञसम्बन्धित्वेन, नैरुक्तानां मन्त्रार्थप्रदर्शनव्याजेन, दार्शनानाञ्च स्वदर्शनोपयोगितया व्याख्यानेन । तत्र याज्ञिकानां दार्शनिकानाञ्च 'याज्ञिकाः' 'आत्मवादाः' इति स्वस्वशब्देनोक्तत्वात् अवशिष्टत्वं नैरुक्तानामेव भवति । तत्र यदि नैरुक्ता इत्यनेन सर्व्वनैरुक्ताभिमतपक्षोल्लेखः कृतः स्यात् तर्हि 'एक' इत्युक्त्या प्रदर्शितपक्षस्यासङ्गतत्वं प्रसज्येत, 'नैरुक्ता' इत्यनेन निघण्टुभिमतपक्षस्योक्तौ तु अन्येषां निरुक्तकाराणां केषाञ्चन 'एक' इत्युल्लेखस्योपपन्नता भवति ! निघण्टोरर्थबोधनाभिप्रायेण प्रवृत्तत्वं प्रथमत एव भाष्यकारो निघण्टुशब्दनिर्वचनप्रदर्शनेन 'निगन्तव' इत्यनेन स्पष्टं ब्रवीति ।'

---

( सावशेषम् )

# प्रसून-वाटिका ।

( शेखसादीविरचित 'गुलिस्ताँ' संज्ञकप्रख्यातपारसी-
ग्रन्थस्य संस्कृतानुवादः )

( लेखकः—श्रीरामस्वामी )

## प्रथमद्वारम्

## ( राजवृत्तविषयम् )

१ आख्यानम्—श्रुतं मया नरपतिः कश्चित् कारानिक्षिप्तस्य कस्यचिच्छिरश्छेदायेङ्गितं चकार। स तु तपस्वी तस्यां नैराश्यदशायां राज्ञे गालिं प्रदातुं परुषञ्च भाषितुमारेभे। एवं कथितमस्ति—यः खलु 'स्वजीवितात् करं प्रक्षालयति' यत् किञ्चिदन्तःपोषयति, सर्वं तदाविष्करोति ।

काले सङ्कटभूयिष्ठे यदा न स्यात् पलायनम् ।
करेणाक्रामति तदा निशिताग्रं कृपाणकम् ॥

भूपतिः पप्रच्छ—'किं ब्रूते ?' अमात्यानामेकः सद्वृत्तोऽकथयत्—"प्रभो! 'अमर्षणाञ्च यो भोक्ता क्षमाशीलस्तथा नृषु।' इतीत्थं वदति।" पार्थिवमनुक्रोशोऽविशत्, ततः स तस्य शोणितपातनेच्छां विजहौ। पूर्वोक्तात् प्रतीपचरितो द्वितीयोऽमात्योऽवोचत्—'भ्रातरः! महोपानामग्रतः सत्यमन्तरेण वाचं व्याहर्त्तुं नोचितमस्माकम्। अयं राज्ञि दुर्वचनं प्रायुङ्क्त, गिरश्चानुपयुक्तामभाषत।' इति। राजा तु तद्वाक्याद् वदनं परावर्तयत् कथितवांश्च—'सा वागनृता या तेनोदीरिता, रुचिरतरा प्रतीयते मह्ममेतस्याः सत्या या या त्वयोक्ता; यतो मुखं तस्याः किञ्चिदिष्टं प्रत्यासीत्, भित्तिस्त्वेतस्याः कस्मिंश्चिद-निष्टे दुष्कर्मणि च इति। तथाऽभियुक्तैरुक्तम्—असत्यमिष्टसंपृक्तं वरं सत्याद्धितापहात्। इति

भाषितं येन यत् किञ्चिद्धरणीपतिराचरेत्।
उपप्लवकरं नूनं यद्दते स वदेच्छुभात्॥
नरे निराशे संवृत्ते तज्जिह्वा वितता भवेत्।
मार्जारो विपदाविष्टः श्वस्पर्द्धी स्याद् यथाऽक्षमः।

सुभाषितम्—'फरेदुन्'—संज्ञकस्य राज्ञो हर्म्यतोरणोपरि लिखितमासीत्—

न साद्धं केनचित्तिष्ठेद् भ्रातरेतज्जगत् खलु।
स्वान्तं बधान तत्रैव चराचरविधातरि।
न कुरु क्वापि संसारं विषये पृष्ठनिर्भरम्।
अपालयद्धि कियतोऽमारयच्च मही चला॥
यदा प्रयाणसंकल्पं कुर्य्यादात्मा सुनिर्मलः।
पल्यङ्के का मृतिः स्वच्छे का मलीमसभूतले॥

२ आख्यानम्—'खुरासान्' देशीयभूपतीनां कश्चित् 'सुलतान महमुदसबक्तगीन'संज्ञकं स्वापि ददर्श, यत् समग्रममुष्य कलेवरं विश्लिष्टं सत् मृद्भावमापन्नम्, नेत्रन्तु यथापूर्वं विघूर्णितं तिष्ठत् परितः प्रसृतमासीत्। सभास्तारा विद्वांसः सर्व्वे तदभिप्राय-निरूपणे वितथमनोरथा बभूवुः। परमेकः परिव्राड् विचार्य्यावदत्—राज्यममुष्य परहस्तगत मित्यद्यापि सोत्कण्ठमवलोकयति इति।

निखाता भूगर्भे कति न क्षतिनः ख्यातचरिताः,
स्थितः सद्भावाङ्को न खलु भुवि येषां लवमपि।
शवोऽधस्ताद्योऽसौ स्थविर इह भूमेर्विनिहतो,
मृदेवं भुक्तो यच्छकलमपि नास्थ्नः परिहृतम्॥
नामनौशिरवाँसंज्ञ नृपतेः शुभमाततम्।
राजते सद्विचारस्य शीलस्याप्यनुभावतः।
महार्घं स्वायुषं मत्वा भोः पुण्यं कुरु सन्ततम्।
न यावदमुको नास्तीतिव्यं शब्दः प्रवर्त्तते।

( क्रमशः )

# लीला ।

## ( उपाख्यानम् )

( लेखकः—श्रीभवभूति विद्यारत्नः । )

प्रणयचित्रमवलोकयितुं के वा नोत्सुका भवन्ति ? युवकवृन्दस्य तादृशं प्रणयपक्षपातमवलोक्याहं तस्य चित्तपरितर्पणायात्मनो नवतारुण्यरञ्जितातीतजीवनस्यैकां विचित्रां प्रणयकथामिदानीं बहुकालात्ययेऽप्यभिनवामिव मम सर्म्मस्थलमधिकुर्व्वतीं तस्मै समुपहर्त्तुमभिलषन्नायकपदाधिष्ठितस्यात्मनो जीवनवृत्तोद्घाटनावसरे खल्वेतद् ब्रवीमि यत् सुजटिलभवभावनालेशपरिशून्ये नित्यक्रीड़ाकौतुकसङ्गोपभोगबहुले शैशवे अतर्कितवज्रपतनमिव तत्कालसंक्रामद्विसूचिकाप्रभावोपहतयोः पित्रोरत्यल्पकालव्यवहितममरधामगमनं निर्घृणमसांध्यं मां यदीयस्नेहाङ्कस्पर्शसुखसेवनान्निराश्रयसंसारस्यातिभीतिकरश्मशानमूर्त्तिं प्रादर्शयत्। मम पितृव्यो हि जनकपादादधिकतरधनसौभाग्यसम्पन्नोऽपि प्रकृत्या न तावत् समुन्नतः स्वकीयाग्रजेन मम जन्मदेन सार्द्धं कस्मिंश्चिद् वाणिज्यव्यापारे व्यापृतस्तद्विषयकं सर्व्वमेव कल्याणं समवायेन समुपयुञ्ज्यापि मम जनकनाम्न्येव निखिलर्णभारविन्यासेनात्मनोऽग्रजभक्तिं समुचितामिव प्रकटयामास। जनको मे नीतिविशारदेऽनुजे एवमपूर्व्वमाचरत्यपि स्वभावत एव मर्षणशीलत्वात् तस्मिन् न तावत् सञ्जातक्रोधो न्यायविचारार्थमधिकरणगमनाद् विरतो बहुकष्टार्ज्जितेन धनेन तत् प्रभूतमृणं क्रमेण परिशोध्यात्मनः पुत्रकलत्रात्मकसंसारप्रतिपालनावशिष्टं कपर्द्दकमपि मदर्थं मृत्युसमये रक्षितुं नाशक्नोत्। स्वार्थपरायणः पितृव्योऽप्येतावदसहायावस्थस्य मे पालनभारग्रहणं स्वकीयसुखकण्टकं विविच्य सकृद्दर्शनदानेनापि मां

नानुजग्राह। एवं दुर्द्दशाया: परां काष्ठां गतो सर्व्वं जगत्तमोमयमपश्यं यदा विधातृप्रेरित: परमप्रसाद इव मम दूरसम्पर्क: कश्चिन्मातुलो मदीयपैतृकभूमि'नवपल्ला:'* क्रोशद्वयव्यवधानस्थितस्य चन्दननगराभिधग्रामस्याधिवासो तत्रत्योच्चविद्यालये शिक्षकपदाधिष्ठितो महानुभवो लोकपरम्परया ममैतावद्दुरवस्थाविषयमाकर्ण्य झटितिरेव मद्गृहमागत: परमकारुण्यात् परमात्मीय इव मम अन्नाच्छादनादिप्रतिपालनभारं सर्व्वमेव विवक्षुर्मधुरभाषमब्रवीत्—"वत्स सुशीलकुमार, मा शोचीरेवमप्रतिविधेयविधिनिर्बन्धप्रेरितात्मकष्टवृत्तान्तेन। निखिलस्यैव मानवस्याग्रे पश्चाद्वावश्यम्भाविरेष दशाविपर्य्यय:। जगति निरवच्छेदसुखं हि सुदुर्लभम्। मा निन्दीश्च विधातारमात्मन एतावत् क्लेशमयदुष्परिणामेन, यतो ह्येष क्लेशभोग: स्वकीयप्राक्तनकर्म्मण: फलं सम्यगप्रतिहार्य्यमेव। मा च मन्यस्व विधिर्दुर्द्दशाग्रस्तं सन्तानं निर्द्दयमेवावलोकयतीति, यत: परमकारुण्यनिलयो हि स चक्षु:सहस्रेणैव सन्तानदु:खं पश्यंस्तस्मात् तमुद्धर्त्तुं सर्व्वथा यतते। सपत्नीकोऽहं दुर्दैववशादपत्यसुखहीन: स्वगृहे दु:खकरमेकलजीवनं धारयामि। इदानीं स्वालयं नीत्वा त्वामेव चिराकाङ्क्षणीये तनयपदे प्रतिष्ठापयितुमभिलषामि। चल वत्स! यदि न किञ्चिन्मन्यसे, मदीयापत्यहीनरिक्तभवनं पूरयितुं माधुर्य्यमयसन्तानभावेन। मैवं क्रन्दी:, बधान च हृदयं सुदृढधैर्य्यबन्धेने"ति।

अकूलदु:खपारावारनिमग्नोऽहं सदयकर्णधारमिवतं समागतं मातुलोपाधिकजनं दौर्भाग्योपहतस्यात्मन उद्धारणव्रतिनमवलोक्य दैववाणीमिव तस्य च सुमधुरामाश्वासकथामाकर्ण्य कृतज्ञतापूर्णहृदयो वाक्यैर्नात्मानन्दातिशयं प्रकाशयितुमक्षमस्तस्य चरणयो: पतित: केवलमविरलनीरवाश्रुधारासम्पातेन क्षौणीतलमप्लावयम्।

* 'न पाड़ा' इति भाषा।

ततः स सादरं मां हस्तेनोत्तोल्य वस्त्राञ्चलेन मदीयाश्रुनिचयम् मार्ज्जीत्, मम च मौनिनः तदनुसरणाभिमतं निःसन्देहं जानन् "क्षणमपेक्षस्व वत्स, यावदहं यानमेकमानयामो"त्यभिधाय ससम्भ्रमं गृहाद् बहिर्जगाम, नातिविलम्बं च यानमेकमानीय तत्र पितृत्यक्त-वस्तुसम्भारेण सहितं मामारोह्य मम पैतृकभवनं चावरुध्य स्वयमपि तदारूढ़ः स्वगृहाभिमुखं चलितः।

( २ )

मातुलालयसकाशं याने प्रविष्टे अहमद्राक्षं मम मातुलपत्नीं पूर्व्वत एवावयोरागमनमुद्ग्रीवमपेक्षमाणामधुना यानशब्देन च तदागमनं ध्रुवं परिज्ञाय सहास्यवदनं द्वारमभ्युपेत्यासहायं भागिनेयं मां प्रत्युद्गन्तुमात्मनः सस्नेहकोमलकरपल्लवं प्रसारय-न्तीम्। अष्टमवर्षवयस्कमप्यति शिशुमिव मां स्वाङ्के निधाय सा मातृहीनस्य मम हृदयमभिनवमातृवात्सल्येन भृशं सम्पूरयन्ती ससम्भ्रमं गृहाभ्यन्तरं प्रविष्टा। मम मातुलोऽपि स्नेहार्द्रकण्ठ "एतत्तवाभीप्सितधनमानीतमिदानीं जननीस्नेहप्रदानेनात्मनोऽन-पत्यतादुःखं प्रशमये"ति कथयन् मत्प्राप्त्या कृतार्थम्मन्यया तया सानन्दमभिनन्दितोऽभूत्। तत आनन्दोच्छ्वासातिरेकाद् मद्यत्नविधाने किमादौ कर्त्तव्यं किमपि वा परमिति निर्द्धारयितुमशक्नुवती कदापि वा रचितपूर्व्वं मोदकादिकं मम हस्ते समर्प्य, कदापि वा ममाभिषेकार्थमुष्णजलमानीय, कदापि वा क्रीतपूर्व्वं नूतनपरिच्छदं मे समुपहृत्य, कदापि वा गात्रमार्ज्जन्या मदवयवं सस्नेहं प्रमृज्य, कदापि वा पक्वपूर्व्वं विविधव्यञ्जनसहितमन्नं समुज्ज्वलधातुपात्र-निहितं मद्भोजनार्थं मत्समक्षं समर्प्य, कदापि वा नवागताभ्यः कामिनीभ्यो नूतनसन्तानागमनकथां तासां प्रश्नाभावेऽपि सपल्लवं समुल्लिख्य मां प्रति यद्विधं साग्रहसमादरं प्रादर्शयत्, तदानीं समुद्-घाटितस्वकीयजननीवात्सल्यस्मृतिद्वारस्य मे स समादरो न हि

मातृस्नेहात् किञ्चिदपि नूनतरोऽपि त्वधिकतर एव प्रतीयते । एवं मातुलदम्पत्योस्तदालयस्थितस्य मम च स्नेहभक्त्यात्मकयोर्व्यवहारयोः परिस्नुतादानप्रदानाभ्यामहं सत्वरं तत्र न ह्यनुग्रहार्थिप्रतिपाल्यत्वे नापि तु नितरां शैशवचापल्यात् तेषां नियहकारिसन्तानत्वेन परिणतः, पल्लीवासिभिरप्यसङ्कोचं तथा पर्य्यज्ञाये ।

---

## दुर्गेशनन्दिनी ।

( पूर्व्वतोऽनुवृत्ता । )

### द्वादशः परिच्छेदः ।

### अलौकिकमाभरणम् ।

महोत्सवः समुपागतः । जन्मतिथिरद्य कतलुखानस्य । दिवसे आसन् व्याप्टताः सर्व्व एव जनाः रङ्गनृत्यदानाहारपानादिषु । निशायान्तु ततोप्यधिकम् । सायाह्नसमय उत्तीर्णप्रायः । दुर्गाभ्यन्तरमालोकमयम्, पूर्णञ्च योधद्वारपालप्रधानदासपौरभिक्षुकमद्यपनटगायकवादकैन्द्रजालिकपौष्पिकगान्धिकताम्बुलिकापणिकादिभिः सर्व्वत एव । यत्रैव गम्यते तत्रैव केवलं दृश्यन्ते दीपमाला, सङ्गीतकं, सुगन्धं पानीयं, ताम्बुलं, कुसुमम्, अग्निक्रीड़ा गणिकागणाश्च । अन्तःपुरेऽपि स्तोकं तथैव । नवावस्य विहारगृहं श्यालतरं प्रमोदमयञ्च । प्रतिकक्षं वर्षन्ति राजताः स्फाटिकाः सुगन्धाश्च प्रदीपाः स्निग्धोज्ज्वलमालोकम् । पुष्पाधारेषु, स्तम्भगात्रेषु, शयनेषु, आसनेषु, पौररमणीनाम् अङ्गेषु च विराजन्ते सुगन्धीनि कुसुमदामानि । क्लान्तस्तावत् लक्ष्यते पवनो भारवहने पद्मगन्धस्य । अगण्येषु दासीवर्गेषु भ्रमन्ति काश्चित् परिहितहेमखचितवसनाः काश्चिद्वा यथेच्छ-

प्रतिपन्ननीललोहितश्यामलपाटलादिवर्णचीनांशुका: दीपालोकोद्भासितभरणा: । वर्त्तन्ते तासां भर्त्रिका: कृतासीना: कृतप्रसाधनयत्नाश्च । अद्य तावत् प्रमोदमन्दिरमागत: पाठानराजो भविष्यति प्रमोदनिरत: सह सर्व्वैर्जनै: । सङ्गीतकं भविष्यति । यस्य यदीप्सितं स जनस्तदद्य पूरयिष्यति । कापि सम्पादयिष्यति सहोदरस्य राजकार्यमिति सबलं बध्नाति केशेषु कङ्कतिकाम् । अपरा वर्द्धयिष्यति दासीसंख्यामिति नमयति आवद्य अलकगुच्छम् । कस्या अपि नवप्रसूतस्य कुमारस्य कृते अभिलाष: कस्मिन्नपि विषये । सा तदर्थं कपोले रक्तिमानं विकाशयितुं घर्षणेन रुधिराक्तं कृतवती गण्डदेशम् । कापि वा पाठानराजप्रियतरललनाया: नवाधिगतस्य रत्नालङ्कारस्य अनुरूपं भूषणमिच्छन्ती लिम्पति नयनयोराकर्णमञ्जनम् । कयापि चण्डिकया रसनां परिधापयन्ती दासी कञ्चुकं पदा पीड़यामास । चण्डिका च कपोले तस्याश्चपेटां दत्तवती । कस्या अपि प्रगल्भाया: वयोमहिम्ना केशकलाप: क्रमश: शिथिलमूल: सञ्जात: । केशप्रसाधनसमये कतिचन केशा: सह कङ्कतिकया उत्थिता: । तद्दर्शनेन विगलिताश्रुधारा सा तारस्वरेण क्रन्दितुमारेभे । कुसुमवने स्थलपद्ममिव, कलापीव विहङ्गकुले, काचित् ललना समाप्तप्रसाधना भ्राम्यति प्रतिकक्षम् । ( नासीदद्य निषेध: कस्यचित् जनस्य कुत्रापि गमने । ) प्रदत्तं विधात्रा तस्यै सर्व्वाङ्गसौन्दर्यम् । कतलुखानेन च प्रदत्तं प्रत्यङ्गमलङ्कारजातम् । तथापि नासीत् तस्या वदनमण्डले किमपि सौन्दर्यगौरवचिह्नम् अलङ्कारगर्व्वचिह्नं वा । नाविद्यत तत्र हासो हर्षो वा । गम्भीरा स्थिरा च तस्या मुखकान्ति: । नयने तु तीव्रा ज्वाला ।

ईदृशे पुरीमध्ये परिभ्रमन्ती विमला सुसज्जं कक्षमेकं प्रविश्य द्वारमर्गलबद्धं चकार । उत्सवदिवसेऽस्मिन् ज्वलति तत्र कश्चित् क्षीणालोक: । प्रान्तभागे आसीदेक: पर्य्यङ्क: । पर्य्यङ्के तस्मिन्

वर्त्तते आमस्तकं सर्व्वंशरीरं शयनच्छदेन आवृता शयाना काचित् रमणी। विमला पर्य्यङ्कपार्श्वगता मृदु अब्रवीत्—आगताहम्। शयाना रमणी चकितेव दूरीचकार मुखावरणम्। ततः प्रत्यभिज्ञाय विमलां शयनच्छदमपहाय उत्थितास्ते। न तु कृतवती किमपि उत्तरम्।

विमला पुनरपि उवाच—तिलोत्तमे, आगताहम्। तथापि तिलोत्तमा आसीद्विरता उत्तरदानात्। केवलं स्थिरदृष्ट्या निरीक्षते स्म विमलाया वदनमण्डलम्।

न पुनस्तिलोत्तमा पूर्व्ववत् व्रीड़ाविवशा बालिका। तदा क्षीणालोके तस्मिन् दृष्टा सा दशवर्षाधिकवया इव प्रतिभाति स्म। शीर्णदेहा मलिनञ्च मुखमण्डलम्। परिहितं तया वसनमेकं सङ्कीर्णायतनम्। अविन्यस्तकेशकलापो धूलिराशिसंभिन्नः। अङ्गेषु न विद्यते भूषणलेशः। दृश्यते केवलं धृतपूर्व्वाणाम् अलङ्काराणाम् चिह्नमात्रम्।

विमला पुनरपि अभाषत—उक्तपूर्व्वं मयागन्तव्यमिति। साहं समागता। कथं न प्रतिभाषसे ?

तिलोत्तमा प्रत्यभाषत—उक्तमेव मया यदासीद्वक्तव्यमिति। किमन्यत् कथयामि ?

तिलोत्तमायाः कण्ठस्वरेण ज्ञातं विमलया—आसीत् सा रोदननिरतेति।

विमला तस्या मस्तके हस्तं संस्थाप्य मुखमुन्नमय्य ददर्श—नयनजलेन तन्मुखं प्लावितमास्ते। अञ्चलं स्पृष्ट्वा तस्यार्द्रतामनुभूय तथा न्यस्तमस्तकमुपाधानं अश्रुप्लावितं दृष्ट्वा विमला प्रोवाच—एवं नक्तन्दिवं क्रन्दन्त्यास्तव शरीरं कियच्चिरं स्थास्यति ?

तिलोत्तमा साग्रहमुक्तवती—किंवा कार्य्यमनेन स्थितेन। कथमेतावन्ति दिनानि स्थितमित्येष मे मनस्तापविषयः।

विमलापि निरुत्तरा रोदनपरायणा बभूव। क्षणान्तरे दीर्घं निश्वस्य उवाच विमला—अद्य तावत् क उपायः ?

तिलोत्तमा सरोषं विमलायाः अलङ्कारजातेषु दत्तदृष्टिरुवाच—किं नाम प्रयोजनमुपायेन ?

विमला प्रोवाच—वत्से, मा तावदुपेक्षस्व। न जानासि किम् अद्यापि कृतलुखानम् ? आत्मनः अवसरदानाभावात् अस्मासु च शोकनिवृत्त्यवसरदानाभिप्रायाच्च एतावन्तं कालं मर्षिता वयं दुरात्मना। प्रागेव विज्ञापितं तेन यदद्य यावदेव अवसरोऽस्माकम्। अतोऽद्य नृत्यशालायामलक्षितासु अस्मासु न जाने को विपत्पातः सम्भवति !

तिलोत्तमा उक्तवती—कस्तावदतोऽधिको विपत्पातः ?

विमला किञ्चित् स्थैर्यमवलम्ब्य प्रोवाच—तिलोत्तमे, कथं नैराश्यं गम्यते ? अधुनापि देहेऽस्माकं वर्त्तन्ते प्राणाः। इदानीमपि वयं न च्युता धर्म्मात्। यावत् प्राणास्तावत् धर्म्मो रक्षितव्यः।

तदा तिलोत्तमा प्रत्यभाषत—ततस्त्यज्यतां मातरलङ्कारजातमिदम्। तव तावद्भूषणधारणं मे चक्षुःशूलाय सम्पद्यते।

विमला ईषद्विहस्योवाच—वत्से मा तावत् निन्द, अदृष्टा मम सर्व्वाणि भूषणानि।

एवमुक्त्वा विमला स्वपरिहितं वसनमन्तरा गुप्तां तीक्ष्णधारां क्षुरिकां निष्क्रामयामास। दीपप्रभया तस्या निशिता धारा विद्युद्वत् विद्योतिता।

तिलोत्तमा—विस्मिता विशुष्कवदना प्रपच्छ कुतोऽस्या अधिगमः।

विमला प्रोवाच—किं दृष्टा काचित् अवरोधगता नवीना दासी।

तिलोत्तमा—दृष्टा मया। आसमानी तावदागता।

विमला—तयैव अभिरामस्वामिनः सकाशादानायिता।

तिलोत्तमा—तूष्णीमवतस्थे। हृदयं तस्याः कम्पितम्। क्षणान्तरे विमला पप्रच्छ—किं त्वया न त्यज्योऽयायं वेषः ?

तिलोत्तमा—नहि।

विमला—न खलु गम्यते सङ्गीतशालायाम् ?

तिलोत्तमा— न हि।

विमला—एतेनापि नाधिगमिष्यसि निष्कृतिम्।

तिलोत्तमा अरोदीत्।

विमलाऽभाषत—स्थैर्य्यमवलम्बस्व। श्रूयताम्। अनुष्ठितो मया तव निष्कृतेरुपाय:।

तिलोत्तमा साग्रहं विमलाया मुखं प्रति निहितवती दृष्टिम्।

विमला तिलोत्तमाहस्ते श्रीसमानदत्तमङ्गुरीयकं दत्त्वा उवाच—गृह्यताम् एतदङ्गुरीयकम्। मा तावत् गच्छ सङ्गीतशालाम्। अर्द्धरात्रात् पूर्व्वं सम्पूर्त्तिं न गच्छेदुत्सव:। तावन्मया निवर्त्तयितव्य: पाठानराज:। ज्ञातं तेन यदहं तव विमातेति। न खलु मम समक्षं गन्तुं शक्यते त्वया इति छलेन सङ्गीतशेषं यावत् बाधितव्या मया तस्य दर्शनेच्छा।

अर्द्धरात्रे गन्तव्यं त्वया अन्त:पुरद्वारम्। तत्र अन्य: कश्चिज्जनो दर्शयिष्यति त्वामीदृशम् अपरमङ्गुरीयकम्। निर्भयं गन्तव्यं तेन सह। यत्रैव त्वया गन्तुम् इष्यते स नेष्यति त्वां तत्रैव। उच्यताम् त्वया स:—अभिरामस्वामिन: कुटीरं यावत् प्रापणाय।

श्रुत्वैतत् तिलोत्तमा परं विस्मयं गता। विस्मयाद्वा आनन्दाद्वा सा क्षणं वचनशक्तिरहिता सञ्जाता। तत: सा प्रोवाच—कीदृश एष वृत्तान्त: ? केन वा तुभ्यं दत्तमेतदङ्गुरीयकम् ?

विमला उवाच—विस्तृता तावत् सा कथा। कालान्तरे यथावसरं कथयिष्यामि। इदानीं यदुक्तं तन्नि:सङ्कोचम् अनुष्ठीयताम्।

तिलोत्तमा प्रोवाच—का गतिस्ते भविष्यति ? कथं निष्क्रमितव्यम् त्वया ?

विमला प्रत्युवाच—मा तावत् चिन्तय मदर्थम्। अन्येन केनचिदुपायेन निष्क्रम्य—श्वः प्रातरेव त्वामुपस्थास्ये।

एवं समाश्वासिता तिलोत्तमा विमलया। परं तया स्वमुक्तिपथः स्वयमेव रुद्ध इति तु तिलोत्तमा कथमपि न परिज्ञातवती।

बहूनि दिनानि नासीत् तिलोत्तमाया मुखे हर्षविकाशः। अद्य तु विमलाया वाक्येन तन्मुखं हर्षोत्फुल्लं जातम्।

विमला तद्दृष्ट्वा पुलकितमनाः सञ्जाता। वाष्पगद्‌गदस्वरेण चावोचत्—'मया तावत् गम्यते'।

तिलोत्तमा ससङ्कोचमुवाच—ज्ञातम्, अधिगतस्त्वया सर्व्वः सन्देशो दुर्गस्य। कुत्र वर्त्तन्ते अस्माकमात्मीया जनाः। तेषां कुशलमपि श्रोतुमिच्छामि।

ज्ञातं विमलया—अस्मिन् विपत्समुद्रेऽपि तिलोत्तमामनसि विराजते जगत्सिंहः। अधिगतं विमलया राजपुत्रस्य निष्ठुरं पत्रम्। तत्र च तिलोत्तमाया नामापि न वर्त्तते। विज्ञाय एतत् तिलोत्तमा केवलं हृदि दग्धतरा भविष्यति। अतस्तदनालोच्य सा प्रत्यभाषतः—वर्त्तते जगत्सिंहोऽस्मिन्नेव दुर्गमध्ये। कुशलञ्च तस्य शारीरिकम्।

तिलोत्तमा नीरवमवतस्थे।

विमला च नेत्रे प्रमार्जयन्ती ततः प्रतस्थे। (क्रमशः)

---

## नक्षत्रम्।

(पूर्व्वतोऽनुवृत्तः।)

(लेखकः—श्रीउपेन्द्रनाथसेनगुप्तकाव्यतीर्थः।)

सन्ति तत्र बहवोऽन्ये विषया ये तु प्रबन्धेऽस्मिन्नालोच्याः। परन्तु प्रबन्धस्यातिविस्तरभिया तत्प्रसङ्गान्मया विरम्यतेऽधुना।

प्रबन्धेऽस्मिन् गणितज्योतिषमेवालोचितं, फलितज्योतिषं प्रबन्धान्तरमपेक्षते। परन्तु तद्‌विषये एतदेव वक्तुं युज्यते यत् फलितज्योतिषशास्त्रस्य वैज्ञानिकत्वेऽपि तात्पर्य्यं निरूपयितुं न शक्यते। परन्तु फलितज्योतिषमतिवैज्ञानिकं। गर्गादीनामभ्रान्तत्वे वयं विश्वासवन्तः किन्तु न खलु पारयामो वयमस्य कारणानि निर्द्धारयितुं। तथाच—

लग्ने शभाग्ये शसुखेशयुक्ते षष्ठाधिपे स्यात् परजात एव।
तदंशनाथेन युते तदीशे पापेक्षिते स्यात् परजात एव॥

तथाच—

गुरुक्षेत्रगते चन्द्रे तद्‌युक्ते वान्यवेश्मनि।
तद्द्रेष्काणे नवांशे वा जायते न परेण सः॥
वित्ते पापबहुत्वे तु कलत्रे वा तथाविधे।
तदीशे पापसंदृष्टे कलत्रत्रयभाग्भवेत्॥
पितुः षष्ठाष्टमे जातः पित्रोः शत्रुर्भवेन्नरः।
पितु र्धर्म्मायवित्तेषु जातः पितृवशो भवेत्॥
अष्टमस्थो यदा सौमो रवियुक्तो भवेद्‌ यदि।
शिरश्छेदकरो योगो मुनिभिः परिकीर्त्तितः॥

यदि कश्चित् ज्योतिर्व्वित् कारणान्येषां पृच्छति तदैव स निर्व्वाग्भविष्यति वदिष्यति च मुनिवचनमेव प्रमाणं नास्त्यन्यत् किमपि। सत्यमेव मुनिवचनमेवास्य प्रमाणं दृश्यते च अभ्रान्ते गणिते एषां सत्यता। सुतरामेव आप्तवाक्यमेवात्र प्रमाणं शास्त्रञ्चेदमतिवैज्ञानिकं। सन्ति च फलितज्योतिषे केचित् विषया ये त्वाधुनिकैः विज्ञानज्ञानेन निरूपयितुं शक्यन्ते—तथाच—

शनिभौमदिनेशानां वारे स्वातिगते रवौ।
नष्टचन्द्रे ध्रुवं वातो भवेद्‌वृष्टिरणद्‌भूता (?)॥

ये तु ग्रहनक्षत्रादीनां प्रकृतिविज्ञानं जानन्ति अनायासेनैव तेऽस्य कारणमपि प्रदर्शयितुं शक्नुवन्ति।

गणितज्योतिषस्य विशेषज्ञानं अयनांशक्रांतिपातकान्तिवृत्त लग्नालोकविज्ञानप्रकृतिविज्ञानगतिवलविज्ञानगणितवीजगणितसूक्ष्मच्छेदगणित—( Conics section )—भूपरिमाणविज्ञानप्रभृतिषु ज्ञानमपेक्षते। सर्व्वे तु विषयाः—एकस्मिन्नेव सन्दर्भे वर्णयितुं नैव शक्यन्ते। सुतरामधुनास्मद्देशे गणितचर्चाविषयकं किञ्चिदुक्ता प्रबन्धमुपसंहृतिं नयामो वयं॥ वेदानन्तरमेव आयुःशास्त्रं—ज्योतिषशास्त्रञ्च भारतीयर्षिमनीषायाः श्रेष्ठे फले। गर्गादीनां प्राणपातपरिश्रमा इदानीं पौराणिककथाविषयीभूताः, यान्तु, परवर्त्तिनि युगे आर्य्यभट्टभास्कराचार्य्यादिभिश्च यद्यत् कृतमस्मिन् शास्त्रे तत्तदपि भारतभूमेः जगति वरेण्यतायै अलमेव। माध्याकर्षणं ग्रहाणां सौरकेन्द्रिकगतिं उपरागप्रभृतीनां कारणं तथापरानपि संख्यातीतान् विषयान् भारतीया विद्वांसएव जगति प्रथमं घोषयाम्बभूवुः। वयमपि तस्मिन्नेव भारतवर्षे एव जाताः,आर्य्यभट्टादीनां गौरवेण गौरवितम्मन्याश्च परन्तु ज्योतिषालोचनायां श्लथादराः। प्रायशो दृश्यते संस्कृतवाणीमाराधयतां गणितशास्त्रेषु नितरामनभिज्ञता, शास्त्रान्तरजिज्ञासामन्थरता च। अतो ज्योतिर्व्विदोऽपि प्रतिदिवसमेवास्माकं देशे विरलायन्ते। सन्ति केचन ज्योतिर्व्विन्नामधारिणः ज्योतिषशास्त्रं येषामाजीवः परन्तु तेष्वपि बहव एवानधिगतशास्त्ररहस्याः। फलेन ज्योतिषं प्रति सर्व्वेषामादराभावः। दृश्यन्ते तावत् केचित् येतु फलितज्योतिषमेव अधीयते परन्तु गणितज्योतिषशिक्षार्थिनः प्रायशो नैव दृश्यन्ते। पण्डितानां ज्योतिषज्ञानाभावात् क्रमशोऽस्माकं धर्म्मक्रियाकलापानामपि कालव्यतिपाताः भवितुमारब्धाः। अतः सर्व्वैरेव यथा ज्योतिःशास्त्रं पुनरप्यालोच्यते येन चास्योन्नतिर्भवति तथा कर्त्तव्यं। सत्यमेवाराध्यं—ज्योतिषादीनि विज्ञानशास्त्राणि

सतेऽष्वेव प्रतिष्ठितानि। सूर्य्यस्तपति, पृथिवी चलति, दिवा संपद्यते, रात्रिः प्रलीयते इत्यादिकं सर्व्वमेव सत्यम्। वेदाङ्गञ्चेदं ज्योतिषशास्त्रं तथाच—

"शिक्षा कल्पो व्याकरणं निरुक्तं छन्द इत्यपि।
ज्योतिषामयनञ्चैव षड़ङ्गो वेद इष्यते॥" इति

अपिच, ज्योतिःशास्त्रमिदं वेदानां चक्षुरिव, यथा चक्षुर्भ्यां विहीनः कोऽपि किञ्चिदपि द्रष्टुं न शक्नोति—तथा ज्योतिषमनधीयानो जनः किञ्चिदपि वेदानां ज्ञातुं न शक्नोति। स्वयं गीर्व्वाणी सरस्वत्यपि ज्योतिषहीना, अन्धा नारीव शोच्यां दशां प्राप्नोति दूरमास्तामस्मादृशां वार्त्तामात्रमपि। तथाचोक्तं पाणिनीयशिक्षायां—

"छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते॥
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते॥" इति

ज्योतिषशास्त्रस्य प्राधान्यविषये चोक्तमापिशलीयैः—

"अन्यान्यशास्त्रेषु विनोदमात्रं
न तेषु किञ्चिद्भुवि दृष्टमस्ति।
चिकित्सितज्योतिषतन्त्रवादाः
पदे पदे प्रत्ययमावहन्ति॥" अपिच—

"विफलान्यन्यशास्त्राणि विवादस्तेषु केवलम्।
सफलं ज्योतिषं शास्त्रं चन्द्रार्कौ यत्र साक्षिणौ॥" इति

ज्योतींषि एव भगवतो ब्रह्मणो रूपाणि। वयं तानि निरूप्य भगवतो नारायणस्य रूपाणि एव निरूपयामः—

उक्तञ्च व्यासेन—

"एतदुहैव भगवतो विष्णोः सर्व्वदेवतानामयं रूपमहरहः सन्ध्यायां प्रयतो वाग्यतो निरीक्षमाण उपतिष्ठेत—नमो नमो ज्योतिर्लोकाय कालायानाय निमिषां पतये महापुरुषायभिधीमहीति"—

५

"ग्रहर्चताराभयमाधिदैवकं
पापापहं मन्त्रकृतां त्रिकालम्।
नमस्यतो वा स्मरतस्त्रिकालं
ध्वंसेत तत् कालवामाशु पापम्॥" इति

अधुना विदुषां समीपे प्रबन्धोपसंहारे इयमेव मे प्रार्थना—

पदेष्वर्थेषु वा दोषा येऽत्र लग्ना भ्रमान्मम।
सतां चणिकदृक्पातैः शोधनीयाः कृपायुतैः। इति शिवम्॥

———

## चन्द्रालोकः।

### चतुर्थोऽङ्कः।

(पूर्व्वतोऽनुवृत्तः।)

(लेखकः—श्रीधूर्ज्जटिप्रसादकाव्यतीर्थः।)

कुन्ती—वच्छ! जं कधेसि तं सच्चं ज्जेव; किन्दु धम्मं पड़िवज्जिअ तुमं दुवारआनाहे कहं अविणद्द संबुत्तो?

भीमः—अम्ब! स्थाने युक्तमुक्तमविज्ञातधर्म्मयात्रभवत्या; किन्तु नाहमविनयो न चापि लुप्तधर्म्मा। यथाभ्युदिते दिवाकरे सर्व्वं जगन्मण्डलं जागर्त्ति तथा स्वधर्म्मे दीप्यति सति जीवानामन्तरात्मनि सर्व्वो विनयार्ज्जवादिगुणो युगपदादीप्यति मोहयति च चराचरम्:—

षट्कर्म्मनिरता विप्राः चत्रिया भूतरचकाः।
वैश्याः पण्यसमृद्धाश्च वृषला द्विजसेवकाः॥

अतो भूतरचणं हि चत्रियाणां धर्म्मस्तथाहि किन्न विदितपूर्व्वं पुरा जतुगृहान्निष्क्रान्ता एव वयं पर्य्यटन्तः कदाचिदेकचक्रायां नगर्य्यां प्रातिष्ठामहि—

तदा तस्यां पुर्य्यां सह परिजनैः शोकपिहितः ।
कया त्रातो विप्रः स जननि ! शरण्यः खलु पुरा ॥

कुन्ती—वच्छ ! स पावो बअरक्खसो तारिसेण णिअपावकम्मेण-मिदो ज्जेव आसी अदो दानीं से मारणे णिमित्तमत्तेण तुए जादं—

भीमः—कियद्वायूराजंत्र कति च दिवसान्नश्वरभवे
निषेव्यः स्वो धर्म्मो यदि भवति, बाधा क्व नु ततः ।

तथाच— युधिष्ठिरो वैष धनञ्जयो वा,
माद्रीसुतौ वान्यकुरुप्रजा वा ।
तिष्ठन्तु ते ते हरिपादलेहे,
न भीमसेनस्य स नाम धर्म्मः ।

कुन्ती—हा सुभद्दे ! तुमं ज्जेव सव्वानिट्ठस्स मूलं जादा ।

भीमः—अम्ब ! मन्यतामिमां स्नुषां मूर्त्तां चात्रप्रतिष्ठां ।
अपिच न खलु न खलु स्मरति वीरप्रसूर्भवती ।

येन प्रागवहेलया विनिहतो दुर्द्धर्षरक्षोगणो
हुङ्कारश्रवणात् प्रयात्यरिघटा यस्याजवद् व्याकुला ।
द्वन्द्वे तेन कृतं नु किं मम हिडिम्बे नाधमेन द्विषा
सोऽहं चेद् विजितः परैर्ननु बलात् ह्याधिगृहृत' जीवितम् ॥

अपरथा युद्धे जयो वा पराजयो वास्तु ; उभयथापि कीर्त्तिः ।
अन्यथा—वरं मृत्युरः संख्ये नच परपदे वेतसनति—
वरं वासोऽटव्यां नच परविगर्हौद्धतवचः ।
यत्सत्यं- प्रतिज्ञारक्षार्थं य इह न यतन्ते कुपुरुषाः
प्रविख्यातास्ते ते जगति नरसंज्ञा हि पशवः ॥

युधि—वत्स ! यदुच्यते न तद्दरलोकं किन्तु
क्षमा क्षीणप्राणे बलवति विनीतः स्फुटतरा
समे वीर्य्यं वीरे श्रुतमिह न किं भीम ! भवता ?

भीमः—न खलु न खलु भीमसेने नीतिरेवम्विधा युज्यते
तथाहि—

श्रुतं यच्छ्रोतव्यं बलवदरिपक्षाद् यदि भयं
भवन्तो वर्त्तन्तामहमिह यते किन्तु वचसा।

युधि—वत्स ! समरमत्र कर्त्तव्यतया मन्यसे—समरप्रियोऽसि तत् कुरुष्व यद्रोचते किन्तु सृष्टिस्थितिप्रलयनिदानेन भगवता वासुदेवेन सार्द्धं कथं महावीरोऽपि त्वं योद्धुं समर्थः स्याः ! विशेषतस्त्वास्मिन्नागतप्राये राजसूययज्ञे तं विना कोऽस्मानितः परित्रास्यते, अपिच पुरा किल—

मृषा वन्धूच्छेदोऽपसरणमतोजातुषगृहात्।
प्रतिज्ञा ध्वंसार्थं तदनु धृतराष्ट्रात्मजकृतान्
निकारान् निन्द्यांस्तान् गहनविपिने नः स्मर सदा
कथं विस्मृतैतान् झटिति कुरुषे दुर्म्मतिमिमाम् ॥

भीमः—आर्य्य ! अस्मिन् कार्य्यसन्देहे भवन्तमेवात्र पृच्छामि

युधि- -किमिव ?

भीमः—अत्रोभययैव प्रतिज्ञा नवा ?

युधि—सत्यम् ; उभययथापि प्रतिज्ञा।

भीमः—अतः कथं नोदयति मां प्रतिज्ञाभङ्गकल्मषे क्षत्रियवर्य्योपि भवान् ( विचिन्त्य ) अथवा यदि नाम भवन्त एवं मां नीतिशून्यमवबुध्यन्ते तदा किमस्मन्मुखप्रेक्षणया ; अहमेकक एवैतान् प्रतिबलजीवान् अवरोद्धुमभियामि। तथाहि यस्य—

पृथ्वीपत्तनतोरणार्गलमहाकालायसप्रांशुको-
द्घूर्णद्भीमगदाकरालकठिनारत्नेर्ममैकाकिनः।
दोर्वज्रद्वयमुष्टिपेषितशिरोभाण्डावमण्डास्त्रिरं
रक्तं कीर्त्तिनदीर्न किन्नु जनयिष्यन्ते रिपूणां घटाः ॥

अपिच नष्टं वा मृतं वा कामं मां विचिन्त्य द्वारकाधिपमाश्रयन्तु भवन्तो, नत्वहं भवद्भिरिह कलुषिताशये निक्षेपणीयोऽस्मि।

---

( क्रमशः )

# जातिबाधकविचारः ।

( पूर्व्वतोऽनुवृत्तः । )

( लेखकः—श्रीकालीपदतर्काचार्य्यः । )

प्रतियोग्यधिकरणत्वाभावोऽपि स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकः प्रतियोग्यधिकरणत्वसामान्याभाव एव ग्राह्यः अन्यथा अधिकरणभेदेन अधिकरणताव्यक्तीनां भेदात् तत्तद्व्यक्तित्वेन, ऐक्येऽपि तत्तद्व्यक्तिवृत्तित्वविशिष्टत्वादिना वा स्वप्रतियोग्यधिकरणत्वाभाववति घटादौ यथापूर्व्वं पटवृत्तित्वविशिष्टपृथिवीत्वं नास्तीत्याद्यभावमादाय घटत्वादिनिरूपितस्य साङ्कर्य्यस्य पृथिवीत्वादावनपायेन व्यभिचारदोषनिरासस्य ब्रह्मणापि दुर्निवारतापत्तेः ।

तादृशाभावप्रतियोगितावच्छेदकसंसर्गविधया विशेषणताविशेषसम्बन्धस्य निवेशेन स्वरूपसम्बन्धावच्छिन्नोपेक्षात्वाधिकरणत्वस्य कालिकेन सम्बन्धेन चाक्षुषज्ञानादौ वर्त्तमानत्वेऽपि न क्षतिः । स्वरूपसम्बन्धावच्छिन्नोपेक्षात्वाधिकरणत्वस्य स्वरूपेण सम्बन्धेन उपेक्षात्मकज्ञानवृत्तितया चाक्षुषत्वादेरुपेक्षाभिन्नज्ञानसाधारणतया उपेक्षात्वस्य स्वप्रतियोग्यधिकरणताशून्यचाक्षुषत्वाद्यधिकरणज्ञानवृत्त्यभावप्रतियोगिताया अक्षतत्वादिति ।

तदत्र तादृशप्रतियोग्यनधिकरणत्वस्यायं निष्कर्षो यथा—स्वप्रतियोगिनिष्ठावच्छेदकतानिरूपितनिष्ठत्वनिष्ठावच्छेदकताभिन्ना सती या आधेयतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकता तदनिरूपिका या आधेयत्वनिष्ठावच्छेदकता निरूपकत्वसम्बन्धावच्छिन्ना तद्भिन्ना सती या अधिकरणतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकता तदनिरूपिका या अधिकरणत्वनिष्ठा प्रतियोगिता स्वरूपत्वावच्छिन्नसंसर्गतानिरूपिता तन्निरूपकोऽभावः ।

पटादिवृत्तित्वविशिष्टपृथिवीत्वाभावप्रतियोगिपृथिवीत्वनिष्ठवैशिष्ट्यावच्छिन्नाधेयताव्यक्तिं स्वप्रतियोगिनिष्ठतदाधेयतात्वेन उपादाय

तन्निरूपिताधिकरणत्वाभावस्य घटादावपि सत्त्वेन घटत्वादिनिरूपित-साङ्कर्य्यस्य पृथिवीत्वादौ व्यभिचारवारणाय प्रथममनिरूपिकान्तम् अवच्छेदकताया विशेषणम्। द्वितीयमनिरूपिकान्तन्तु प्रदर्शित-व्यावृत्तिकमेवेति नेह पुनस्तद्व्यावृत्तिरुपादीयते।

स्वप्रतियोग्यधिकरणत्वसामान्याभाववत्त्वञ्च स्वाधिकरणस्य स्वरूप-सम्बन्धेन वाच्यं, अन्यथा प्रतियोग्यधिकरणस्यापि घटादेः कालिकादि-सम्बन्धेन पृथिवीत्वादिनिष्ठाधेयतानिरूपिताधिकरणत्वसामान्याभाव-वत्तया चाक्षुषादेश्च तथैव ज्ञानत्वादिनिष्ठाधेयतानिरूपिताधिकरणत्व-सामान्याभाववत्त्वेन पटवृत्तित्वविशिष्टपृथिवीत्वं नास्ति श्रावण-वृत्तित्वविशिष्टज्ञानत्वं नास्तीत्याद्यभावमादाय पृथिवीत्वज्ञानत्वादौ व्यभिचारापातेन भक्षितेऽपि लशुने न शान्तो व्याधिरित्यनुयोगस्य दुरतिक्रमत्वात्।

स्वसामानाधिकरण्यघटकीभूतमधिकरणत्वं समवायसम्बन्धेन विशेषणीयं, अन्यथा कालिकविशेषणतया घटत्वाद्यधिकरणस्पन्दादौ समवायसम्बन्धावच्छिन्नप्रतियोगिताकपृथिवीत्वाभावादेः सत्त्वेन घटत्वादिनिरूपितसाङ्कर्य्यस्य पृथिवीत्वादौ तथैव व्यभिचारात्। प्रकृते तु समवायेन स्पन्दादौ घटत्वादीनामभावात् न स्वाधिकरणतया स्पन्दादिलाभः। स्वाधिकरणनिरूपितवृत्तित्वं स्वरूपसम्बन्धावच्छिन्न-मेवोपादेयं, अन्यथा कालिकादिसम्बन्धावच्छिन्नस्वाधिकरणनिरूपित-वृत्तितामादाय दोषापातात्। अन्तिमं प्रतियोगित्वन्तु न सम्बन्ध-विशेषेन विशेषणीयम्, घटादौ संयोगादिसम्बन्धावच्छिन्नप्रतियोगि-ताकपृथिवीत्वाद्यभावानां वर्त्तमानत्वेऽपि घटादेः समवायसम्बन्धेन यत् पृथिवीत्वाद्यधिकरणत्वं तदभावविरहादेव व्यभिचारवारणस्य सुकरत्वात्।

अथ घटजलोभयं न पृथिवीत्वाधिकरणत्ववत् इत्यादिप्रतीति-साक्षिकव्यासज्यवृत्तिधर्म्माद्यवच्छिन्नानुयोगिताकैकदेशवृत्तिप्रतियोगि-

काभावमादाय तथापि घटत्वादिनिरूपितसाङ्कर्य्यस्य पृथिवीत्वादौ व्यभिचारो न शक्यो निवारयितुम्, इति चेत् तादृशधर्म्मावच्छिन्नानुयोगिताकैकदेशवृत्तिप्रतियोगिताकाभावानभ्युपगमस्य पूर्व्वमेव समुट्टङ्कितत्वात्। घटपटयोर्न घटत्वं विशिष्टसत्तायां न गुणवृत्तित्वं इत्यादिप्रामाणिकप्रतीत्यनुरोधेन तादृशधर्म्मावच्छिन्नानुयोगिताकस्य एकदेशवृत्तिप्रतियोगिताकाभावस्य अभ्युपगमपक्षे तु स्वाधिकरणतायां—स्वप्रतियोग्यधिकरणत्वसामान्याभावानुयोगितावच्छेदकतायाः प्रवेशेन अव्यापकत्वपदार्थस्य परिकल्पनात्। तथाच सति स्वप्रतियोग्यधिकरणतासामान्याभावानुयोगितावच्छेदक स्वाधिकरणतावद्वृत्त्यभावप्रतियोगित्वम् इति अव्यापकत्वशब्दफलितार्थः पर्य्यवस्यति। प्रकृते अवच्छेदकत्वं स्वरूपसम्बन्धविशेष एव न तु अन्यूनानतिरिक्तवृत्तित्वं, तेन शरीरत्वादौ पृथिवीत्वादिसाङ्कर्य्येण जातित्वबाधने पृथिवीत्वाद्यधिकरणतायाः स्वाधिकरणतापदलभ्यायाः शरीरत्वाधिकरणत्वसामान्याभावाभाववति शरीरत्वाधिकरणे वर्त्तमानतया तादृशसामान्याभाववद्गगणादिवृत्तिभेदप्रतियोगितावच्छेदकतया च प्रतियोग्यधिकरणत्वसामान्याभावानुयोगितावच्छेदकत्वाभावात् नासिद्धिः।

( क्रमशः )

---

## सन्देशकणिका: ।

**पुस्तकसमृद्धिः ।**—विदितमस्तु पारिषदानां यच्छालिखावास्तव्यैरर्दानशौण्डैस्तूलारामगोयेनकामहोदयैरङ्गीकृतानां पुस्तकानामष्टादशोत्तरशतद्वितयं नानाशास्त्रीयं परिषत्पुस्तकालयमासादितम्। आगमिष्यन्ति च क्रमेणावशिष्टानि। परिषदा च दीयन्ते

सुष्ठु अवसराः पाठरसिकेभ्यः पारिषदेभ्यः, साधुकाराश्च बहुबहुशो-महद्भ्यो दातव्यः ।

**शोकसन्देशः** ।—इदानीमुपस्थाप्यते कश्चिच्छोकसन्देशो नितरां दुःखितदुःखितैरस्माभिः। झाँपड़दहाग्रहारं जन्मनालं-चक्रिवाणाः कीर्त्तयोङ्गासितदिगन्तराः पञ्चाननचूड़ामणिपादाः उपशतानि हायनानि अजस्रान्नदानमन्दिरजलाशयादिप्रतिष्ठानजप-होमपूजादिभिश्च अतिवाहयन्तः सम्प्रति विश्वेश्वरपुरे विश्वेश्वरसेवा-सुखं भाग्यादर्जयन्तश्चिरार्थितममृतत्वमाप्नुवन् । दरिद्रब्राह्मणपण्डित-समाजगृहस्य धुरन्धरो महानयं स्तम्भः कालेनापहृत इति नितरां ते सीदन्तीति युक्तमेव। आशास्यते परेशकृपया तत्तनयोऽपि दीर्घायुः कल्याणचरितैनैवं कीर्त्त्या च पितृगौरवं जनमानसेषु चिरजागरूकं रक्षत्विति ।

**चित्रमूर्त्तिप्रतिष्ठा** ।— मैमनसिंहमण्डलान्तःपातिसेर-पुरभूम्यधिकारिणा विद्याविनयदानकीर्त्तितचरितेन श्रीमता-गोपालदासचतुर्धुरीण एम, ए, बि, एल् महोदयेन जन्मपवित्रीकृत-तन्नगराणां वङ्गगौरवभूतानां स्वर्गतानां स्वनामधन्यमहामहोपाध्याय-चन्द्रकान्ततर्कालङ्कारपादानां तैलचित्रमूर्त्तिरेका परिषद्गृहमण्डनाय विद्वद्भिः साग्रहमभिलषितेति विज्ञायैव तदङ्कनार्थमपेक्षितमर्थजातम् परिषदि प्रेषितम् । तेन च परिषन्निदेशात् चित्रकलाकुशलेन श्रीमता सुरेन्द्रनाथवागचीमहाशयेनाङ्कितं तदालेख्यमवसितप्रायं सौराषाढ़स्य मध्यमे भागे सम्भविष्यति परिषद्वार्षिकमहोत्सवे सामाजिकविदुषां दर्शनानन्दं विधास्यतीति सहर्षं सूच्यते। अन्यच्च विज्ञाप्यं यत् तस्मिन् महोत्सवे परिषत्सदस्यानामनुरञ्जनाय महाकविविशाखदत्तकृते मुद्राराक्षसस्य प्रयोगो भवितेति शम् ।

---




# ভারতবর্ষ মধ্যে সর্ব্বাপেক্ষা পুরাতন, বৃহৎ, অকৃত্রিম ও সুলভ আয়ুর্ব্বেদীয় ঔষধালয়

সুলভে অকৃত্রিম ঔষধ বিক্রয় শক্তি ঔষধালয়ের বিশেষত্ব

কারখানা—স্বামীবাগ রোড, ঢাকা; হেড আফিস—পাটুয়াটুলী ষ্ট্রীট, ঢাকা। কলিকাতা হেড আফিস—৫২।১ বিডন ষ্ট্রীট, কলিকাতা।

দশন-সংস্কার চূর্ণ—উৎকৃষ্ট দাঁতের মাজন, দাঁতের বিশেষ উপকারী, মূল্য ৵০ কোটা।

খদির বটীকা—পানের পরিবর্ত্তে ব্যবহার্য্য উপকারী ও সৌগন্ধযুক্ত মূল্য ৵০ কোটা।

বহরের ননী—পাঁচড়া ও ঘায়ের মহৌষধ, মূল্য ।৹ আনা।

শক্তি বা কর্ম্মযোগ এবং আয়ুর্ব্বেদীয় চিকিৎসা প্রণালী সম্বলিত ক্যাটলগ পত্র লিখিলে বিনামূল্যে পাইবেন। সকল ব্রাঞ্চেই সুদক্ষ কবিরাজ বিনা মূল্যে ব্যবস্থা দিয়া থাকেন।

অধ্যক্ষ— শ্রীমথুরামোহন চক্রবর্ত্তী, বি, এ,

টেলিগ্রাম "শক্তি" ঢাকা।

প্রিন্টার—শ্রীকুলচন্দ্র দে, শাস্ত্রপ্রচার প্রেস, ৭নং ছিদামমুদির লেন, কলিকাতা।








প্রিন্টার—শ্রীকুলচন্দ্র দে, শাস্ত্রপ্রচার প্রেস, ৭নং ছিদামমুদির লেন, কলিকাতা।

१८४५ शकीये | आषाढ़ | July 1923.
Reg. No. C. 1073.
६ष्ठ उपख्य | ३य संख्या | Vol. VI. No.



भारते जयतु भारती । कलिकाता श्यामबाजार ब्रिज रोड,

## संस्कृतसाहित्यपरिषद:

सबहुमानमावेदनम्—

विदितमस्तु भवतां यदागामिनि सौरश्रावणस्य सप्त-विंशद्दिवसे रविवासरे सायं सार्द्धषष्ठघटिकायाम् परिषद एतन्-मासिकमधिवेशनं भविता। कृपया भवद्भिर्यथाकालमागत्य सभाकार्य्यं पूरणीयमिति—

१८४५ शकाब्दीयसौर-
श्रावणस्य २०श-
दिवसीयम्।

आश्रवयो:
श्रीपशुपतिनाथशास्त्रिण:
श्रीगीष्पतिरायचतुर्धुरीणस्य च
सम्पादकयो: ।

### कार्य्यावलि:—

१। दामोदरदासवर्म-शिवनारायणमुखोपाध्यायानां स्वर्याने शोकप्रकाश:

२। "द्रौपदीचरितम्" इतिशीर्षकप्रबन्धपाठ:
(प्रबन्धलेखक:—श्रीदक्षिणारञ्जनशास्त्री M.A.)

३। निबन्धसमालोचनम् ।

४। श्रीलमतिलालवर्ममहोदयस्य परिषच्छात्रेभ्यो गीताप्रदानम् ।

५। परिषच्छात्रपद्यै: कविवरश्रीयुतकालीपदतर्काचार्य्य-कृत "स्यमन्तकोद्धार" व्यायोगस्याभिनय: ।



...न परिवर्त्तन ।—" संस्कृत दुकडिपो " २८/१ नं कर्णओयालिस ष्ट्रीटे उठिया गियाछे । ये कोनओ संस्कृत पुस्तकेर जन्य उक्त ठिकानाय अनुसन्धान करिबेन ।

কেশরাশিকে কুঞ্চিত ও কোমল করিবার জন্যই

# কে-শ-র-ঞ্জ-ন-তৈ-ল

এই আসমুদ্র ভারতের সর্ব্বত্রই কেশরঞ্জনের শতমুখে সুখ্যাতি। নিত্য স্নানকালে কেশরঞ্জন মাথায় মাখিলে সমস্ত দিনটী চিত্ত প্রফুল্ল থাকে। কেশরঞ্জন নিত্য মাথায় মাখিলে মাথা ধরা, মাথা ঘোরা, অনিদ্রা, মন হু হু করা প্রভৃতি উপসর্গ বিদূরিত হয়। দেশের রাজা মহারাজা হইতে সামান্য গৃহস্থ গৃহেও কেশরঞ্জনের সমাদর। আপনিও ব্যবহার করুন। মূল্য প্রতিশিশি এক টাকা, ডাকব্যয় সাত আনা।




## স্নায়বিক দুর্ব্বলতার আশু প্রতিকার।

বলবর্দ্ধক, মেধাবর্দ্ধক ও স্মৃতিবর্দ্ধক মহৌষধ। আমাদের "সঞ্জীবন রসায়ন" স্নায়বি দুর্ব্বলতার জন্য যাহাদের উদ্যম-উৎসাহশক্তি-স্ফুর্ত্তি ও স্মৃতিশক্তি বিনষ্ট হইয়াছে, অগ্নি অগ্নিমান্দ্য প্রভৃতি গ্লানিকর উপদ্রব উপস্থিত হইয়াছে, তাঁহাদের পক্ষে সঞ্জীবন রসায় অমৃতের ন্যায় উপকারী। বিশেষতঃ ইহাদ্বারা বমন, বমনেচ্ছা, উদ্গার, হিক্কা, আধ্ম (পেট ফাঁপা) ও পেট ভুটভাট করা প্রভৃতি পেটগরমের উপদ্রবসমূহ অচিরে নিবারি হইয়া থাকে। এক কথায় বলিতে হইলে, অজীর্ণ, অগ্নিমান্দ্য ও স্নায়বিক দুর্ব্বলতা নিবার জন্য এবং ছাত্রগণের মেধাবৃদ্ধি করিতে "সঞ্জীবন রসায়নের" ন্যায় অব্যর্থ ঔষধ অ বিরল। এক শিশির মূল্য ১৲ টাকা। মাশুলাদি ।৶০ আনা।

পরিবর্ত্তিত **সচিত্র কবিরাজি-শিক্ষা।** পরিবর্দ্ধিত

শ্রীযুক্ত নগেন্দ্রনাথ সেনগুপ্ত প্রণীত।

সমগ্র আয়ুর্ব্বেদ শাস্ত্রের সার সঙ্কলন। বড় বড় আটটী খণ্ডে সমগ্র পুস্তক বিভ অতি সরল ভাষায় লিখিত হওয়ায়, কেবল চিকিৎসকের নয়—সাধারণ গৃহস্থের পা ইহা একখানি নিত্য-ব্যবহার্য্য গ্রন্থ। নাড়ী পরীক্ষা হইতে আরম্ভ করিয়া সমস্ত রো নিদান, চিকিৎসা-প্রণালী আয়ুর্ব্বেদীয় ঔষধ, তৈল, ও ঘৃতাদি-প্রস্তুত-বিধি, এবং বিষচিকি দীর্ঘজীবন-লাভের উপায়স্বরূপ স্বাস্থ্যকারক স্থানসমূহের পূর্ণবিবরণ, রোগীর পরিচর্য্য দ্বিতীয়খণ্ডস্বরূপ মহর্ষিদের গৌরব—সুশ্রুত-সংহিতা এই সংস্করণে সন্নিবেশিত হইয়া মূল্য ২৸০ টাকা। ডাকমাশুল ও প্যাকিং ৸৹ বার আনা।

**কবিরাজ নগেন্দ্রনাথ সেন এণ্ড কোং, লিমিটেড্।**

**১৮।১ ও ১৯ নং লোয়ার চিৎপুর রোড, কলিকাতা।**

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवि: ।
भावालोकैर्मन:पद्मं प्रकाशयतु धीमताम् ॥

---

१८४५ शकीय आषाढ़े, ६ष्ठ वर्षस्य ३य संख्या

---

नवरत्नान्तर्गत:

## राधिकाविरह:

योगीन्द्रनाथविद्याचुञ्चु विरचित: ।

नाम्ना राधा व्रजकमलिनी कृष्णविच्छेदसिन्धौ
मग्ना क्षीणा मनसिजशरावातसन्तापशीर्णा ।
वृन्दारण्ये करुणहृदया वाष्पविन्दून् चरन्तीं
कामप्यालीं व्यजननिरतां मन्दमन्दं जगाद ॥ १

शोषीभूतस्तव सखि महानुद्यमस्तापशान्त्यै
ग्लानिश्चेयं प्रभवति हृदभ्यन्तरात् नैव बाह्या ।
नैवोशीरं सरसिजदलं शीतलं वा मृणालं
न श्रीखण्ड: कथमपि भवेत् शान्तिदं क्लेशभाजाम् ॥ २

व्याधिश्चायं विषमजटिलो नोपकाराय चान्यद्
भैषज्यं यच्चरकवि[illegible]तं निदाने ।
वैद्यग्राह्यं परमिह [illegible]कारदक्षं
यत् सेवित्वा भवति [illegible]व्यथाशान्तिश्च रोगी ॥ ३

को मे दद्याज् झटिति फलदं भोगिदन्तान्निकृष्य
तादृग् दिव्यौषधमयि सखि प्राञ्जलिः प्रार्थये तत् ।
को वा कुर्य्याद् व्यसनसमये चेदृशं बन्धुकार्य्यं
प्रायेणास्मिन् जगति सविधं दुर्भगाया न याति ॥ ४

पृच्छामि त्वां प्रियसखि न किं यातनाया विरामः
कालेनापि प्रभवति विधेः कीदृशी वा लिपिः सा ।
जन्तोः षष्ठेऽह्निजनिदिनान्निख्यति भालपट्टे
या वै धात्रा प्रसवभवने शुभमित्य ऋपायाम् ॥ ५

पूर्व्वं सृष्टाः सहपरभृताः सौधराशिं व्यवर्षन्
वर्षन्त्येते विषमगरलं साम्प्रतं कुञ्जमध्ये ।
वह्नेर्ज्वाला मलयगिरिजो मारुतो मन्यतेऽद्य
चन्द्रखण्डं किरति किरणं माधवीयो यथार्कः ॥ ६

आद्यं नालं दशति फणिवत् वक्षसि स्थापितं मां
यद् यत् पुष्पं स्थलजलभवं तीक्ष्णधारं हि शूलम् ।
उद्यानस्थः किशलयचयो मन्यते कालजिह्वा
हा धिक् सर्व्वं विरहिणि जने प्रातिकूल्यम् करोति ॥

ये ये चासन् परमसुहृदः कोकिलः पद्मचन्द्रौ
याम्यो वातो नवदलचयः षट्पदाः प्राङ् ममात्र ।
ते ते सर्व्वे प्रकृतिविहताः शत्रुभावं प्रपन्ना
उच्चैर्ग्लानिं विदधतितरां साम्प्रतं मेऽबलायाः ॥ ८

हा धिक् कष्टं ननु कृतविधे त्वद्व्यवस्था किमीदृग्
यैवं दुःस्था प्रियविरहिणी सैव पीड्या न चान्या ।
शिक्षायां ते कथय भुवने को गुरुः किञ्च पाठ्यं
शास्त्रे नास्ते किमु विरहिणीहिंसने पापलेशः ॥ ९

दग्धं शून्यं जगदिदमहो कः शरण्यो भवेन्मे
नारीसृष्टिर्भवति भुवने दुःखभोगाय धातुः ।

नोचेत् कस्मात् युवतिहृदयं पुम्पराधीनमेवं
प्रेमासक्तं मृदुलसरसं व्रजन्ती वैपरीत्यम् ॥ १०
त्यक्ताहारा व्रजकुलवधूर्वीतनिद्रा रजन्यां
निन्दन्तीन्दुं विसकिशलयान् दक्षिणञ्चैव वातम्।
भृङ्गध्वानं परभृतरुतं क्ष्मातलं सिञ्चतीयं
प्रेमोन्मत्ता विलपति पतद्वाष्पधारा विवर्णा ॥ ११.
कृष्णप्रेमार्णवतलगता राधिका तद्वियोगात्
कृष्ण! क्कासीत्यलवुगमना श्लिष्यतीयं तमालम्।
नक्तं भ्रान्त्या क्वचिदपि तमःपुञ्जमायाति धर्त्तुं
धत्ते लज्जां चकितचकितं कार्य्यवैकल्यहेतोः ॥ १२
यां यामाशामभि शुभमसौ दृष्टिपातं करोति
सा सा कृष्णाकृतिमतमयी दृश्यते तन्मयत्वात्।
कोऽयं तेषां प्रणयजलधेश्चन्द्रमा इत्यसौ यत्
ज्ञातुं शक्ता नहि विरहिणी लज्जते विस्मितात्मा ॥ १३
कृष्ण! क्वासि प्रणयविहिता कीदृशी पद्धतिस्ते
बाला दीना तव विरहतः खिद्यमाना विचेताः।
भुङ्क्ते ऽशान्तिं रतिपतिवराघातजातामसह्यां
त्वं निर्लिप्तो विहरसि सुखं निर्गुणो निर्विकारः ॥ १४
स्निग्धस्निग्धं मधुरिपुतनूच्छायमूर्द्धं नवीनं
दृष्ट्वा मेघं सुरपतिधनुर्दण्डसञ्जातकान्तिं।
श्रुत्वा गर्ज्जं विरहहुतभुग्वर्द्धनं तस्य बाला
दृग्भ्यामग्रे भुवमविरलं सिञ्चतीयं हताशा ॥ १५
हा धिक्, कीदृक्, तव कुतुकिता प्रेमिका या नवीनाः
संपीड्यन्ते विरहदहनैः क्रीड़ितं किञ्च तासां।
प्राणैश्चक्रिन् कठिनहृदये नास्ति ते विन्दुमात्रं
सारल्यं वा प्रणयिसुलभं सौकुमार्य्यं व्रजेश ॥ १६

नैतच्चित्रं स्मरशरधरो मारुतो दक्षिणस्य
पद्मं भृङ्गो हतपरभृतस्तन्वते मेऽप्रियं यत्।
आद्यो दग्धः स्मरहररुषा वायुभूतः पिशाचो
दृष्ट्वा क्लिष्टां विरहिरमणीं संश्रयत्येष पापः॥ १७
कस्तु दक्षो हतविधुरयं विप्रियं नः कलङ्की
खस्योत्पत्त्या गरलसहितभ्रातृसम्बन्धबद्धः।
योऽयं वायुर्मलयगिरिभूः सर्पनिश्वासदुष्टः
पद्मं पङ्कात् धृतजनुरिदं पुष्यति चैत्रधर्म्मम्॥ १८
भृङ्गो नायं सरलहृदयो लक्ष्यते मूर्त्तिलक्ष्म्या
क्रूरात्मासौ जनयति रुजं गुञ्जनैः कामिनीनाम्।
वंशद्रोही विगतकरुणः कृष्णकायोऽन्तिमोऽसौ
वृक्षात् क्षिप्रं क्षिपति विषमं क्ष्वेड़मुग्रं तरुण्याम्॥ १९
उच्चैश्चित्रं त्वमिव सदयः साधुचेताः सुधीरः
प्रेमोत्फुल्लो भुवनहितकृत् कीर्त्तिभाक् चारुशीलः।
नारीक्लेशं तव विरहजं बुध्यते यत् क्षणं नो
तन्मन्ये नो जगति जननं केवलं दुःखमात्रम्॥ २०
क्वासौ प्रीतिः प्रणयजलधेस्तुङ्गभङ्गाभिरामा
क्वासौ वाणी तव गतवती प्रेमरागं क्षरन्ती।
क्वासौ दृष्टिर्युवतिहृदयग्राहिणी साम्प्रतं ते
तस्मान्मन्ये पुरुषहृदयं सर्व्वथा सारशून्यम्॥ २१
सत्यं या दिक् त्रिदशललनाहृद्यमत्यप्रसन्ना
प्रेतक्रीड़ा भवति भयदा दृश्यते तत्र नित्यम्।
राका नक्तं व्यतरदमितां स्निग्धपीयूषधारां
सैवोच्चण्डैर्विषमयकरैः पीड़यत्येव तीव्रम्॥ २२
धिङ्मे नेत्रभ्रमरयुगलं कृष्णपादाब्जहीनं
धिङ्मे कर्णौ हरिगुणकथासीधुपानाकृतार्थौ।

धिङ्मे जिह्वां हरिगुणयशःकीर्त्तने बद्धजाड्यां
धिङ्मे घ्राणत्वचमपि हरेर्गन्धसंसर्गशून्यम् ॥ २३
धिङ्मे गात्रं हरिकृतसमाश्लेषसौख्यान्निवृत्तं
तीव्रात् तीव्रैर्मदनविशिखैर्नित्यविद्धं विशीर्णम् ।
धिङ्मे बाहुद्वयमिदमदः सेवनाद्भ्रष्टदुष्ट
श्चाङ्गुल्यग्रे नखरपटलान्यप्यसूनीन्दुखण्डान् ॥ २४
धिङ्मे केशान् नवजलधराकारचौरान् करौ च
धिग्धिक् फुल्लाम्बुजरुचिहरौ तत्सपर्य्याविरामात् ।
अङ्गान्येतान्यपि विरहिणीं पीड़यन्तीति यस्मां
भाग्ये मन्दे भवति विमुखः स्वः परो वा न चित्रम् ॥ २५
कन्दर्प त्वं जगति विदितः पुष्पबाणो हि नाम्ना
तत् किं नारीं प्रति सुनिश्चितं पात्यतेऽयोमयास्त्रम् ।
नोचेत् कस्मात् विरहिरमणी त्वच्छराघातभिन्ना
संज्ञाहीना पतति मृतवद् भूतले भग्नवृत्ते ॥ २६
बाणं पौष्पं ननु भवति किं तेन किं मुच्यते वा
प्राणैर्नारी प्रियविरहतः सत्यमेतन्मतं चेत् ।
यन्माध्वीकं कुसुमजठरे दैवदत्तं तदीयं
नारीप्राणक्षयकरगुणं मादकं तन्नवेद्मि ॥ २७
यद्यप्यस्मिन् कुसुममयता कीर्त्तिता पूर्व्वधीरै
र्नान्यैः पुष्पैर्विरचितमिदं केतकीसंज्ञकानाम् ।
सूचीभागैः स्मरनृपतिना पात्यकान्तान्तकेन
व्यद्धं नारीमृदुलहृदयं किंवदन्ती तु साध्वी ॥ २८
भूतात्मा त्वं भवसि दहनान्नेत्रजाच्चन्द्रमौले
र्लब्धा मृत्यं श्रयसि रमणीं स्वप्रियाभ्रान्तितोऽत्र ।
रत्या ज्ञाते सति ननु भवेन्निग्रहस्ते कठोर-
स्तत्त्वं तूर्णं शठ निजगृहं गच्छ हित्वा तनुं मे ॥ २९

क्षणाभ्रष्टं न पतति कथं भौतिकं मांसपिण्डं
चिन्ताज्वालाशतमयमिदं भारभूतं पृथिव्याः।
अद्याप्येतन्नयनयुगलं वाष्पधाराभिरन्धं
चित्तं दग्धं प्रबलदहनाज्जायते नैव भस्म॥ ३०
न सन्देहो मृत्यो मम सखि विलम्बो न च बहु
मृदा मे देहेऽस्मिन् लिखतु हरिनामामृतमये।
किरत्वेतत् कर्णे हरिगुणसुधासारमनघं
गतासुं दृष्ट्वा मां त्यजतु यमुनाकृष्णसलिले॥ ३१
दग्धं पूर्वं विरहहुतभुक् तेजसा देहमेतत्
भूयो दग्धा खलु सखि तथा कारणं ह्यन्यदस्ति।
यन्नाथेन प्रथममरुणा स्पृष्टमासीच्च भुक्तं
तत्तु द्रव्यं बहुमतमये वह्निसान्नैव कार्य्यम्॥

(क्रमशः)

श्रीहरिपदभारतीभट्टाचार्य्येण प्रकाश्यते।

---

संस्कृतसाहित्यपरिषदः

## सप्तमवार्षिक-कार्य्यविवरणम्।

क्षीरोदसर्पशयने विलसच्छरीरम्
लक्ष्म्या निरन्तरनिषेवितपादपद्मम्।
ऐन्दीवरद्युति मनोहरनेत्रयुग्मम्
नारायणं सकलदुःखहरं नमामि॥

यस्य चराचरगुरोर्भगवतो नारायणस्यानुग्रहेण इयं संस्कृतसाहित्य-

परिषत् सप्तमं वर्षमिदानीमतिक्रान्तवती महामहिमशालिनां श्रीचरणारविन्दयुगलं पुनः पुनः स्मृत्वा, गुरुजनान् प्रणम्य, अन्यांश्च सामाजिकप्रवरान् यथायोग्यमभिनन्द्य, परिषदः सप्तमवार्षिकं कार्यविवरणं संक्षेपेण विज्ञापयितुमुद्युक्ताः स्मः।

कालस्रोतः खलु अति द्रुतं चलति। स समय एव वर्त्तत एव, यदा प्रथमवार्षिकोत्सवोऽस्मिन्नेव रङ्गालये सार् श्रीयुताशुतोषमुखोपाध्यायसरस्वतीनामाध्यक्ष्येण सम्पादित आसीत्। वस्तुतस्तस्मिन् समयेऽयं परिषद्वृक्षोऽङ्कुराकार एवासीत्, अदूरवर्त्तिनि काले अस्य कीदृश आकारः स्यात्, तदपि केनापि नाज्ञायत। परं महानुभावानां मुखोपाध्यायपादानामनुभावजलेन सिक्तः सोऽङ्कुरः अचिरेणैव कालेन वृद्धिमप्यपुष्णात्। ततः परवर्त्तिषु चतुर्षु वार्षिकोत्सवेषु, सार् देवप्रसादसर्वाधिकारि-सार् आशुतोषचतुर्धुरीण-नाटोर महाराजकाशिमवाजारमहाराजैश्च शुभागमनेन संवर्द्धितेयं परिषत्। पूर्ववर्षस्य महोत्सवः, ष्टाररङ्गालये सम्पादितः। तत्र विविधविद्याविशारदा द्वारकामठाधीशाः श्रीमद्राजराजेश्वरानन्दसरस्वतीपादा नेतृत्वमकुर्वन्। तस्यां सभायां सत्लोकस्य आर्मेण्टदेशीयकन्साल् जेनारल् महोदयस्य तथा अन्येषां बहूनां महात्मनां समागमो जातः। सभाकृत्यावसाने समुपस्थितानां विदुषां परितोषविधानार्थं परिषत्सदस्यैर्महाकविभासविरचितं प्रतिमानाटकं महेन्द्रवर्मविरचितं मत्तविलासं नाम प्रहसनञ्च इत्येतद् रङ्गमञ्चेऽप्रयुक्तपूर्वं रूपकद्वयं प्रयुक्तम्। गीतवादित्रप्रचुरेण प्रयोगकौशलसम्पन्नेनाभिनयेन सा उत्सवसभा परमानन्ददायिन्यभवद् रसिकजनानाम्।

सुविदितमेतदत्रभवतामार्य्यमिश्राणां यत् परिषदा स्वकर्त्तव्यतयाऽधोनिर्दिष्टकार्यजातानि प्रारब्धानि—

(१) सभानुष्ठानादिना शास्त्रानुशीलनं देवभाषानुशीलनञ्च, (२) अध्यापनेन शास्त्रज्ञानस्य सम्यग्विस्तारः, (३) संस्कृतभाषाया

पत्रिकाप्रकाशः, (४) मुद्रितानाममुद्रितानाञ्च पुस्तकानां संग्रहः, (५) ग्रन्थप्रकाशः, (६) समानकर्मभिः सहयोगः, (७) संस्कृत-नाटकाभिनयश्चेति।

सदनुष्ठानम्—

आलोच्यवर्षे एकादशसु मासेषु संसाधितानि एकादशमासिका-धिवेशनानि। तत्र निबन्धानां पाठः, समालोचनञ्च अजायताम्। ये तावत् प्रबन्धाः पठिताः प्रायेण तेषां सर्वेष्वेव लेखकानामनुशीलन-पाटवं भाषाविन्यासचातुर्य्यं च लक्ष्यते स्म। अधुना परिषच्छात्रा अन्ये च बहवः अभ्यासवलाद् बहुधा देवभाषया यथावद् व्यवहर्त्तुं शक्नुवन्ति। यस्मिन् यस्मिन् मासि येन येन लेखकेन यो यो निबन्धो रचितस्तस्य तस्य नाम कीर्त्त्यते—

| मासाः | निबन्धाः | रचयितारः |
|---|---|---|
| ज्यैष्ठे— | परिणयवादः | कृष्णप्रसन्न तर्कवागीशः |
| आषाढ़े— | प्रपञ्चसारकृत् शङ्कराचार्य्यः | सतीशचन्द्रसिद्धान्तभूषणः |
| श्रावणे— | प्राचीनभारते कारापद्धतिः | अमरेश्वरठाकुरः एम्, ए |
| भाद्रे— | प्राचीनभारते नारीणामवस्था | दक्षिणारञ्जनशास्त्री एम्, ए |
| आश्विने— | प्राचीनभारते राष्ट्रसंस्थानम् | जातकीनाथ साहित्यशास्त्री |
| कार्त्तिके— | वर्णविभागः | कृष्णप्रसन्नतर्कवागीशः |
| अग्रहायणे— | अतिथिसेवा | दक्षिणारञ्जनशास्त्री |
| पौषे— | आश्रमधर्मः | कालीपदतर्काचार्य्यः |
| माघे— | हितोपदेशवार्त्ता | श्यामाचरणकाव्यतीर्थः |
| फाल्गुने— | शिवाद्वैतवादः | जानकीनाथसाहित्यशास्त्री |
| चैत्रे— | प्राचीनभारते भृत्यसंव्यवहारः | उपेन्द्रनाथसेनगुप्त-काव्यतीर्थः |

वर्षेऽस्मिन् कार्य्यनिर्व्वाहकसमितिः पञ्चदश वारान् मिलिता सती परिषदः कार्य्यव्यवस्थां सम्पादयामास। प्रायेण पण्डितजनानां सम्बन्धे एवं निन्दा श्रूयते, यत् ते मिलित्वा विवादमेव कुर्वन्ति। अस्माकं कार्य्यनिर्वाहकसमितौ पण्डितानामेव बाहुल्यं वर्त्तते, परं ते मिलिताः सन्तो विनैव विवादं कर्म्माणि सुष्ठु साधयन्ति इत्येतद्दर्शनात् सा निन्दा मिथ्यैव प्रतीयते।

विशेषाधिवेशनम्—

अस्मिन् वर्षे साधारणसभायास्त्रयोऽधिवेशनविशेषा जाताः। प्रथमस्तावदाषाढ़े मासि परिषत्सदस्यानां महामहोपाध्यायोपाधि-प्राप्तानां श्रीमतां दुर्गाचरणसांख्यवेदान्ततीर्थानां, राजोपाधिप्राप्तानां मणीन्द्रचन्द्रसिंहवाहादुराणां, सार्‌उपाधिप्राप्तानाम् श्रोङ्कार-मल् जेठियानाम्, रायबाहादुरोपाधिप्राप्तानां श्रीमतां जलधरसेनानां तथा पि, एइच्, डि, इत्युपाधि-प्राप्तानां श्रीमतां नरेन्द्रनाथलाहा-महाशयानामभिनन्दनार्थम्; द्वितीयः—पौषमासि महामहोपाध्यायो-पाधिप्राप्तानां श्रीमतां पार्वतीचरणतर्कतीर्थानां, तथा रायबाहादुरो-पाधिप्राप्तानां श्रीमतां फणीन्द्रलाल-दे-महाशयानां, श्रीमतां नलिनी-नाथशेठमहाशयानाञ्च अभिनन्दनार्थम्; तृतीयश्च, फाल्गुने श्रीमतां व्योमकेशचक्रवर्त्तिनामाध्यक्ष्येण राजकीय-संस्कृत-विद्यालय-विलोप-प्रस्तावस्य प्रतिवादार्थम् आहूता अभवन्।

पाठशाला—

अत्र पञ्चविंशतिर्विद्यार्थिनो विभिन्नविषयेषु पाठानलभन्त। केचन छात्राः परिषद्‌गृहे एव उषित्वा, केचन च स्वगृहादागत्य परिषदध्याप-केभ्योऽध्ययनमकुर्वन्। अपरे च केचित् प्रवीणाः कृतविद्या विषय-विशेषमध्येतुकामाः समागच्छन्। अस्मिन् वर्षे राजकीयपरीक्षा-फलमनुसृत्यैव पञ्चानां छात्राणां वृत्तिर्निरूपिता। दश विद्यार्थिनो राजकीयपरीक्षायामवतीर्णाः, नव उत्तीर्णाः, त्रयश्च तेषु वृत्तिमलभन्त।

अत्र पाठशालायां प्राचीनया एव प्रणाल्या अध्यापनादिकं भवति। अध्यापनप्रणाल्याः परिवर्त्तनमिदानीं कैश्चन अभिप्रेयते। परं वर्त्तते प्राचीनपद्धतावपि बहूनामाग्रहः। परीक्षणार्थं पृथक्तया परिवर्त्तनप्रवर्त्तनमपि सुसाधिकसामर्थ्यसाध्यमिति कृत्वा इदानीमस्माभिस्तादृशप्रयत्नाद् विरम्यते।

पत्रिका—

एषा संस्कृतसाहित्यपरिषत्पत्रिका इदानीमेकैव मासिकी संस्कृतपत्रिका या यथाकालं प्रकाश्यते। नानादेशीयानां विदुषां निबन्धा अस्यां नियमेन आविर्भवन्ति। एतत्पत्रिकाद्वारेण भाषानुशीलनं विशेषेण भवति, नवीन-लेखकानां समुत्साहनं भवति, विभिन्नदेशीयानां विदुषां परस्परं परिचयोऽपि भवति। अतः केवलसंस्कृतज्ञानां पण्डितानामेतादृशी एका पत्रिका सर्वथापेक्षितैव। य इमां पत्रिकां धीरतया अवलोकयिष्यन्ति, त एव अस्याः प्रयोजनीयत्वमनुभविष्यन्ति। प्रथमावस्थायामस्या ये ये दोषा जातास्तेषां संशोधनार्थं प्रयत्नः क्रियते। अस्याः समुन्नतिविधानार्थं केषाञ्चन महताम् विदुषामाग्रहः परिलक्ष्यते, दूरदेशेष्वपि अस्याः ग्राहकाणां संख्या वर्द्धते।

ग्रन्थसंग्रहः—

अस्मिन् वर्षे रूप्यकाणां त्रिंशती मुद्रितपुस्तकानां क्रयार्थं विनियुक्ता। बहूनि पुस्तकानि उपहाररूपेण समालोचनार्थं च प्राप्तानि। वहूनि दुर्लभानि अमुद्रित-पुस्तकानि अपि प्रयत्नविशेषैः संगृहीतानि। अतीव सुखकरमेतत् यत् पुस्तकालये पाठकानां संख्यावृद्धिर्दृश्यते। अस्माकं संकल्पितः संग्रह इदानीमपि कल्पनायामेव वर्त्तते; तथापि यावन्तो ग्रन्थाः संगृहीतास्तावद्भिरेव सर्वविधपाठकानां साधारणप्रयोजनसाधनं भवतीतीदमेव सुखकारणम्।

ग्रन्थमुद्रापणम्—

पूर्वस्मिन् वर्षे कालीतन्त्रमित्याख्यतन्त्रग्रन्थस्य प्रकाशनमङ्गीकृतम्।

अयं खलु वीराचारपरायणानां शक्त्युपासकानां प्रमाणभूतो ग्रन्थः। अस्मिन् वर्षे स ग्रन्थः संस्कृतटिप्पण्यलंकृतो वङ्गभाषानुवादसहितश्च प्रसिद्धतन्त्रशास्त्रविद्भिः श्रीसतीशचन्द्रसिद्धान्तभूषणैः सम्पादितः। गीतशङ्करीयमित्यपरो ग्रन्थः पत्रिकायां प्रकाशितः। सोऽपि अचिरेणैव विवरणविशेषैः संयुक्तः पृथक्तया प्रकाशमेष्यति। अतः परं द्वादशयात्रातत्त्वम्—सटीकसानुवादमुक्तिवादः—भरतमल्लिककृतं द्रुतबोधं नाम व्याकरणम्—वररुचिकृता कलापव्याकरणस्य वृत्तिरित्येतेषां ग्रन्थानां प्रकाशनं सङ्कल्पितम्। आशास्यते आगामिवर्षेण एतेषां सम्पादनं भवेदिति।

समानकर्मभिः सहयोगः—

पूर्ववङ्गसारस्वतपरीक्षायाः कलिकाताकेन्द्रस्य व्ययादिभारः पूर्वेषु वर्षेष्विव अस्मिन्नपि वर्षे परिषदा स्वीकृत ऊढ़श्च। पूर्ववद् बहुभ्योऽध्यापकेभ्यस्तथा बहुषु पाठशालापुस्तकालयादिषु पत्रिका मूल्यं विनैव प्रदत्ता। अन्यविधं साहायकं कर्त्तुं नास्ति इदानीं परिषदः सामर्थ्यम्। शक्तिरल्पा, दानपात्राणि असंख्यानि, अतः शक्तिवृद्धिमनुसृत्य दानपरिमाणं वर्द्धयितव्यम्।

अभिनयः—

अस्याः सभायाः स्थापनकालात्प्रभृति प्रतिवर्षं द्वित्रान् वारान् नाटकाभिनयोऽनुष्ठितः। मृच्छकटिक-मुद्राराक्षसाभिज्ञानशकुन्तल-चण्डकौशिक-नागानन्द-वेणीसंहारादीनि प्रायः सर्वाणि प्रसिद्धनाटकानि अस्माभिरभिनीतानि। नवाविष्कृतानि भासादिकवि-कृतानि नाटकान्यपि प्रयुक्तानि। कस्यचन कस्यचन नाटकस्य वारद्वयं वारत्रयं वा प्रयोगो जातः। भासकृतो मध्यमव्यायोगोऽस्मिन् वर्षे वारचतुष्टयमभिनीतः, पुनरपि तदभिनयार्थं वयमनुरुध्यामहे। अस्मिन् वर्षे मध्यमव्यायोगादन्यानि त्रीणि रूपकाणि—भासकृतप्रतिमानाटकं महेन्द्रवर्मकृतं मत्तविलासं नाम प्रहसनं तथा अभिज्ञानशकुन्तलम्—

अभिनीतानि। अन्ये विषयाः केवलं पण्डितजनानां प्रीतिमावहन्ति, परमभिनयः पण्डितानामपण्डितानाञ्च मनांसि रञ्जयति। परिषत्-कृताभिनयदर्शने जनानामेवमाग्रहो दृश्यते यत्ते शुल्कप्रदानेनापि अभिनयं द्रष्टुमिच्छन्ति। विगतशारदीयाभिनयकाले शुल्कं गृहीतम्, तथापि दर्शकानामभावो न जातः। अभिनये वेशभूषादि प्राचीन-कालानुरूपं विधातुं वयं यथाशक्ति यतामहे। परं तादृशदृश्यपटादि-निर्माणं बहुव्ययसाध्यत्वाद् अस्माकमशक्यमेव। तथापि अस्माभिः परिषद्गृहमध्ये एकस्य क्षुद्रस्य रङ्गस्य निर्माणं प्रारब्धम्। अजन्तादि स्थानस्थितगुहासु, कोणार्कादिस्थितप्राचीनमन्दिरा-दिषु च यादृशं गृहसंस्थानं दृश्यते तदनुकरणेनैव चित्राणि पटेषु आरोप्यन्ते। एतत् सर्वेषामेव प्रीतिकरं भवेदिति सम्भाव्यते।

परिदर्शनम्—

अस्मिन् वर्षे शिक्षाविभागीय-राजपुरुषाणां कृपा परिषदं प्रति निपतितासीत्। माननीयाः शिक्षासचिवाः श्रीमन्तः प्रभासचन्द्रमित्र-(एम्, ए, वि, एल्; सि, आइ, इ) महोदयाः, वर्त्तमानशिक्षाध्यक्षा हर्णेल् (एम्, ए) महोदया, भूतपूर्व्वशिक्षाध्यक्षाः डब्लु सि ओयार्डसीयार्थ (एम्, ए) महोदयास्तथा महामहोपाध्यायाः श्रीहर-प्रसादशास्त्रिपादाः (एम्, ए; सि, आइ, इ) शुभागमनेन सभामनु-गृहीतवन्तः। परिदर्शनाद् एतैर्महात्मभिः सन्तोषः प्रकटितः; विशेषतः शास्त्रिपादैः हस्तलिखितपुस्तकानां संग्रहं दृष्ट्वा भूयसी प्रशंसा कृता।

शोकप्रकाशः—

जातं परिषद एकं गुरुतरं मनस्तापकारणम्। पाइकपाड़ा-राजवंशप्रदीपस्य मणीन्द्रचन्द्रसिंहस्य अकालवियोगेन जनितः शोकः परिषदा तीव्रमनुभूतः; न केवलमसौ राजा परिषदः परमः सहाय आसीत्, परं नवीने वयसि तादृशमुदाररमणीयचारित्रं प्रायेण

कस्मिन्नपि न दृश्यते। अस्मिन्नेव वर्षे राजोपाधिलाभात् परिषदा तस्य अभिनन्दनं कृतम्, अस्मिन्नेव च वर्षे तस्य प्रयाणमपि जातमिति विशेषत: शोककारणम् संवृत्तम्।

आय:—

पूर्वस्मिन् वर्षे सार्द्धषड्विंशतिशती रूप्यकाणां सदस्यानां सकाशाद् वृत्तिरूपेण लब्धा, अस्मिन् वर्षे सदस्यानां संख्यावृद्धौ सत्यामपि सा शतचतुष्टयेन न्यूना जाता। ये तावद् धनिका व्यवहारिण: परिषद: पृष्ठवंशस्वरूपास्तेषामायह्रास एव अस्य ह्रासस्य प्रधानं कारणम्। कियच्चिरेण एतद्देशव्यापि अर्थकृच्छ्रमपगमिष्यति, तद् विधाता एव जानाति। परं यावत्कालपर्य्यन्तं देशस्य एवंविधा दुरवस्था वर्त्तेत, तावत्कालपर्य्यन्तं वृत्तिमुखेन आयवृद्धिर्न स्यादिति आशङ्का वर्त्तते।

धन्यवाद:—

अस्मिन् दुर्दिने राजपुरुषैरस्माकं हस्तावलम्बो दत्त:। रूप्यकाणामष्टादशशती तै: साहाय्यरूपेण प्रदत्ता। एतस्य असम्भावितस्य उपकारस्य हेतो: शिक्षाविभागाधिकृतेभ्यो राजपुरुषेभ्य: परिषत्पक्षत: सहस्रशो धन्यवादा: प्रदीयन्ते। पूर्वस्मिन् वर्षे कलिकातास्य-मिउनिसिपाल्महासभया पुस्तकालयार्थं सार्द्धं शतद्वयं प्रदत्तम्, अस्मिन् वर्षे तत्परिमाणं शतेनैकेन वर्द्धितम्। एतस्य हेतोस्तत्सभाधिकृता: पुरुषा: धन्यवादमर्हन्ति। शिक्षासचिवा: श्रीमन्त: प्रभासचन्द्रमित्रमहाशया: स्वकीयमेकं शतम्, तथा वादश्‌रश्मि-भूम्यधिकारिण: श्रीरमेशचन्द्रचतुर्धुरीणा: सपादं शतं परिषदे प्रदत्तवन्त:, अत: तेभ्योऽपि धन्यवादा: प्रदीयन्ते। ये पत्रपुस्तकोपहारदानादिना सर्वदा परिषद: पोषणं कुर्वन्ति, तेभ्योऽपि धन्यवादा: प्रदीयन्ते। अन्ये च ये महात्मान: परिषद्धितार्थमकपटं स्वार्थत्यागं कुर्वन्ति, तेभ्य: सर्वेभ्यो विज्ञाप्यते आन्तरिकी कृतज्ञता।

सभ्यवर्या:, इत: परं नास्ति भवतां सकाशे किमपि अधिकं

विज्ञाप्यम्; केवलमिदमेकमेव प्रार्थनीयं वर्त्तते यद् भवन्तः अस्मत्-कृतानि कार्य्यजातानि परिपश्यन्तु। वर्त्तते एकमेव वस्तु यद् अस्याः सभायाः स्थितेर्मूलम्। यदि भवताम् मनसि एवं संप्रत्ययो दृढ़ः स्यात् यदनया सभया किमपि प्रशस्यं कार्य्यं क्रियते, तदा कोऽपि विघ्नोऽस्माकं पथि अवस्थातुं न शक्नुयात्, एषा सभापि देशस्य गौरवास्पदानां वस्तूनां मध्ये विशिष्टतया परिगण्येत। भगवत्कृपयैव सर्वमेतत् सम्भाव्यते।

"अम्भोधिः स्थलतां स्थलं जलधितां धूलीलवः शैलताम्।
मेरुर्मृत्कणतां, तृणं कुलिशतां, वज्रं तृणप्रायताम्॥
वह्निः शीतलतां हिमं दहनतामायाति यस्येच्छया।
लीलादुर्ललिताद्भुतव्यसनिने देवाय तस्मै नमः॥"

---

## लीला।

(पूर्व्वतोऽनुवृत्ता)

एवं कतिपयवत्सरा गता निरवच्छेदसुखामृताभिषिक्ता अन्योन्य-प्रणयायस्कान्तसन्निकृष्टचित्तयोरावयोः। चिरमोहनं यौवनमपि क्रमशोऽपचीयमानवयस्कावावाम् आत्मनः प्रकृष्टरङ्गस्थले विदिन्तयत् स्वकीयापूर्वमायातूलिकया न केवलमावयोरापादकेशं निखिलाङ्गप्रत्यङ्गं सुमनोहरमनुरञ्ज्य निवृत्तिमयासीदपितु कुसुमशरसहायकतया वर्द्धितात्मशक्त्यनिपुणशैशवकृतचाञ्चल्यादिदोषान् प्रमृज्यावयोः शिशुभाव-भतिमाधुर्य्यौदार्य्यमयविलासरागेण स्फुटीकुर्व्वंदजागरयदस्मन्मनसि कामपि

सुखकल्पनामन्योन्यमिलनानन्दनवनपरिदर्शनाय। मम मातुलान्यपि लीलाजननीं नितरां वैवाहिक्यभिधेयेन समाकारयन्ती परस्परकथा-प्रसङ्गेन भाविसुखमयवैवाहिकजीवनकथां च परमाकाङ्क्षणीयत्वेना-लोचयन्ती तां हृत्पोषितामुभयोर्मिलनाकाङ्क्षामत्तीवाग्रधदुत्तरोत्तरम्। मम मातुलो यदि चैतद् युवतीसङ्गसंसृष्टमवकाशकालयापनं विद्यार्ज्जनस्य दारुणमन्तरायं मन्यमान उभयोर्नियतमन्तदासे न तावदनुकूलदृष्टिरासीत्तथापि मातुलानीमुखान्मधुरप्रकृतेर्लीलाया विविध-गुणकथाः समाकर्ण्य निर्द्दोषचरित्रे मयि च सम्यक् विश्वासादासयो-स्तन्मिलनं सुनिर्म्मलभ्रातृभगिनीस्नेहात्मकमिति जातबुद्धिर्न खल्वकार्षीत् किमपि तत्र प्रतिकूलाचरणम्। हृदयानन्दकरेण च लीलासङ्गेन नैव मे ह्रस्वीकृतः पाठानुरागः, अपितु प्रवर्द्धित एव स निखिलचित्त-शैथिल्यापहारित्वात्तस्य परमेप्सितसंसर्गस्य, येन हि तदानीं सङ्घटितां प्रवेशिकाख्यपरीक्षां परमसफलतया समुत्तीर्य्य सर्वेषामतिप्रशंसाभाजन-मभवम्।

मम्मैतत् परीक्षासाफल्येन परमप्रीतचित्तो मातुलो मामब्रवीत्—"वत्स सुशीलकुमार, न केवलं धन्यीकृतमस्माकमनवाप्तपूर्वछात्र-वृत्ति विद्यागृहं त्वया लब्धवृत्तिना, शिक्षकजीवनमपि मे सम्यक् कृतार्थीकृतं त्वदीयैतच्छात्ररूपसम्बन्धेन। वेत्सि त्वमत्रोच्चतरविद्या-लयस्यासद्भावो विद्यत इति। तदभिलषामि त्वां राजधान्यां कुत्र-चिच्छात्रावासे संरक्ष्य तत्रत्ये लब्धप्रतिष्ठे कस्मिंश्चिदुच्चतरपाठागारे च प्रवेश्य तवैतत्पठनस्पृहां निःशेषं सम्पूरयितुम्। आगामिमासस्य शुभदशमदिवस एव मया स्थिरीकृतस्तव कलकत्तागमनाय। इत्य-स्मिन्नवसरे मयैकेदुरास्तत्र गत्वा तस्य विद्यालयस्य तत्संलग्नछात्रावासस्य च सर्वविधा नियमा विज्ञातव्याः। इदानीं त्वयैव पुत्रवतीरनपत्ययो-रावयोर्यद्यपि त्वद्विरहितजीवनमतीव कष्टकरं स्यात्, तथापि तव सुपरिणामं विचिन्तयन्नावामावाभ्यां तत् सर्वथा सहनीयमिति

विविच्यैव साम्प्रतमेष प्रस्तावः क्रियते । मन्ये तवाप्यनभिमतहेतुरत्र न कोऽपि वर्त्तत इति ।

समाकर्ण्य मातुलवचनमहं मधुमयलीलासङ्गवर्ज्जनक्लेशचिन्तया प्रबलमभिभूतोऽप्येतादृशात्मजीवनोन्नतिकरं सुप्रस्ताव कथमपि परिहर्त्तुमपारयन् विशेषतस्तस्याः क्षणिकविच्छेदेन तया सहैतद्धृदयपोषितं चिरमिलनं न कदापि खण्डयेतेति परिभावयन् मातुलाय सानन्दमिवानुकूलाभिमतं व्यजिज्ञपम् । तथापि रहसि लीलामुपागत्यापृच्छम्—"लीले, निरवसितं मे त्वदीयनियतसुखसंस्पर्शामृतसम्भोगसौभाग्यं, यतो मातुलेनाहं विद्याभिचार्थं सत्वरं राजाधान्यां प्रेषयिष्ये । तत्रावतिष्ठमानस्य सुचिरलब्धगृहागमनस्य मे हृदयानुरञ्जिनीं त्वामन्तरेण कथं कालातिपातो भवेदिति चिन्तया न शक्नोम्यात्मानं समाश्वासयितुम् । कथय, कथय, लीले ! न विस्मरिष्यस्येनं त्वदीयमधुरमिलनामृतपानैकव्रतचकोरं हतभाग्यं सुशीलकुमारम् । जानीहि त्वं केवलं तव चिन्तनं मदीयहृदयसहचरभूत-मालोकयिष्यति मे निदारुणप्रवासजीवनमिति ।" अशनिसम्पातेनैव ममैतत्प्रवासगमनप्रस्तावेन प्रहतहृदया सा क्षणं निर्वाक् तस्थौ, ततः परिम्लाननयनकमलविगलद्विरलधारानिःसृतैः कतिपयैरश्रुमुक्ताफलकैः प्रकटितमर्म्मगूढगभीरवेदनापि परमसहिष्णुतया तां वेदनां विशुष्कस्मितच्छलेन बहिरप्रकाशयन्ती मामवोचत्—"गच्छ, गच्छ सुशीलकुमार, आत्मोन्नतिसाधनाय क्षुद्रप्राणामेतां नारीं विसृज्य । तव शुभपरिणामो न हि कदाप्येतस्या अनभीप्सितो भवेत् । एषाप्यत्र नियतान्तरनिहितत्वन्मूर्त्तिं स्वपस्विनीव त्वां स्मरिष्यति ।" एतावन्मात्रमभिधाय सा ममुच्छ्वासकम्पितहृदया न्यधापयत् तस्या आलुलायितकुन्तलकलापं शीर्षस्थलं मम वेपथुमति वक्षःस्थले, अहमप्यावेगविकलेन्द्रियो रोमाञ्चिततनुः कियत्क्षणं तां तथाधारयं तन्न जाने, यदाकस्मान्मातुलाह्वानेन विदूरिततन्मोहस्वप्नावेशः सस्यगालिङ्ग्याप तदशिथिलपरिरम्भा-

टात्मजमतिकष्टेनैव विमुच्य वाष्पावरुद्धकण्ठविगलितैः कतिभिः स्खलितकरुणवचनैर्निवेदितात्मचित्तक्लेशभारः चरणयोर्यिल्याम्मूर्च्छनोन्मुखीं मदर्पितानिमिषनेत्रतामरसां तां तमसीव विनिक्षिप्य तत्स्थानाद्वीरपदमपसृतो वारंवारं वदनपरावर्त्तनेन दर्शं दर्शं विसृष्टाप्रतिमायास्तस्याः सुमनोहरं नैराश्यपाण्डुरवदनम्।

मातुलान्तिकमुपागतस्तेनाहं सस्नेहमभिहितः—प्रिय वत्स सुशीलकुमार, अयमपराह्ण एव दैवज्ञेन निर्व्वाचितः शुभवासरत्वेन तव राजधानीगमनस्य। तत् सत्वरमेव सज्जीभव प्रवासगमनोचितैरुपकरणैर्येन शुभकालाभ्यन्तर एव शक्नुयास्त्वं भवनाद् बहिर्गन्तुम्। शुभव्यापारे हि शुभयात्रैव चिरमिह प्रशस्यते। अत्र चौदासीन्यं न विधेयम्।"

तदाकर्ण्य लीलाविच्छेदव्यथोत्पीड़ितहृदयोऽप्यात्मानं न्ययोजयं ससम्भ्रमं नगरगमने सज्जीभवितुम्। क्रमेण समायाते मे तस्मिन् शुभयात्रावसरे मातुलो मां निर्व्वाचितविद्यालयच्छात्रावासविषयकाणि विविधज्ञातव्यानि नगरवासोपयोगिनीर्विविधोपदेशकथाश्च सस्नेहमेकैकशः समभिधाय पाठशालाप्रवेश-नगरावस्थितिशुल्कव्यपदेशेन च किञ्चिद् वित्तं मम हस्ते सादरं समार्पयत्, ततो मदभावेनैकलीकृतजीवनं कथं वा यापनीयमिति सस्नेहकरुणवचनैर्वारंवारं ज्ञापयन्नश्रुभाराक्रान्तनयनाभ्यां मम मातुलाभ्यां कियद्दूरं प्रत्युद्गम्य विसृष्टोऽहं यूथभ्रष्टो मेषशिशुरिवैकलतां गतः सङ्गिहीनोऽपि लीलाचिन्तनसहचरो मातुलविच्छेदतमःक्लिष्टहृदयोऽपि भाविमङ्गलाशालोकोद्भासितचित्तोऽभिराजधान्यगच्छम्।

---

8

# रथयात्रा-भ्रान्तिनिरासः ।

लेखकः—ब्राह्मणसभाध्यापकः श्रीचण्डीचरणतर्कतीर्थः

प्रवर्त्तमानपञ्चचत्वारिंशदधिकाष्टादशशतशकाब्दीय-सौराषाढ़स्य त्रिंशद्दिवसे रविवासरे द्वादशविपलसहित-त्रिंशत्पलाधिक-दण्डद्वयम् आषाढ़स्य शुक्लप्रतिपत्तिथिरस्ति, तत आरभ्य परदिवसीय-षड् विपलाधिक-त्रिंशत्पलपर्य्यन्तमाषाढ़स्य शुक्लद्वितीयातिथिरिति गुप्तप्रेसादिनामभिः प्रसिद्धासु दिनपञ्जिकासु निर्णीतमस्ति ।

एवं स्थिते श्रीश्रीरथयात्रोत्सवः सौराषाढ़स्य त्रिंशद्दिवसे तत्परदिवसे (एकत्रिंशद्दिवसे) वा कर्त्तव्य इत्यर्थविरोधे विद्वत्समाजेषु विचारः प्रवृत्तः ।

अत्र प्राधान्येन गुप्तप्रेस इति नामधेयदिनपञ्जिकायाः पृष्ठपोषकाः पि एम् बाक्चि इति नामधेयदिनपञ्जिकायाः पृष्ठपोषकाश्च स्व-स्व-दिनपञ्जिकाया व्यवस्थापितदिने रथयात्रोत्सवकर्त्तव्यता स्मृतिपुराण-मीमांसादिशास्त्रीययुक्त्या विद्वद्भिः कृतसिद्धान्तेति कृत्वा प्रातिस्विकं मतं पत्रादिप्रचारद्वारा जनसमाजे समुद्घोषयन्तः परस्परं विवदमानाः साधारणानामन्तःकरणे विशेषेण संशयमुत्पादितवन्तः ।

तदत्र प्रबन्धे रथयात्राव्यवस्थायाः किमपि तत्त्वमालोचयामः ।

रथयात्रायाः दैवतिथिकृत्यत्वेन उभयदिनप्राप्तद्वितीयातिथिस्थले एकत्र पूर्व्वाह्णलाभे पूर्व्वाह्णरूपप्रशस्तकालप्राप्ततिथौ कर्त्तव्यता प्राप्ता । उभयदिने क्रियोपयोगिपूर्व्वाह्णकालप्राप्तौ युग्मशास्त्रादिना व्यवस्था, इत्यादि पर्य्यालोचनयास्मिन् वर्षे सौराषाढ़स्य एकत्रिंशद्दिवसे मुहूर्त-न्यूनाया द्वितीयायाः क्रियानुपयोगितया तत्पूर्व्वदिने एतद्वर्षीयसौराषाढ़स्य त्रिंशद्दिवसे रविवासरे पूर्व्वाह्णे द्वितीयायां रथयात्रा कार्य्येत्येके व्यवस्थापितवन्तः । अयमेकः पक्षः ।—

अपरे च—"आषाढ़स्य सिते पक्षे द्वितीया पुष्यसंयुता । अरुणोदय-

वेलायां तस्यां देवं प्रपूजयेदिति वचनोपक्रान्तं तादृग्वेलायामुभयदिने द्वितीयालाभे पूर्व्वदिने एव यात्रा कर्त्तव्या" इति यात्रातत्त्वोक्तमुपजीव्यारुणोदयकालप्राप्तमुहूर्त्तान्यूनद्वितीयातिथेर्यात्रानियामकत्वमवगच्छन्त एतद्वर्षीयसौराषाढ़स्य एकलिंशद्दिवसे सोमवासरे अरुणोदयप्राप्तद्वितीयायां रथयात्रोत्सवः कर्त्तव्य इति वर्णयन्ति। एषः अपरः पक्षः।

तत्रोभयपक्षनिरपेक्षतयास्माभिरेवमालोच्यते—रथयात्रायाः कर्त्तव्यतायां को नियामक इति प्रश्ने किमुत्तरं, किं वा कदा सा कर्त्तव्येत्यपेक्षायामनुसन्धेयमित्यस्मिन्नर्थे विधिरित्येवोत्तरं सन्निर्विधेयमिति प्राप्ते यावद्धि स्वरूपतो विधिर्न निरूपितस्तावदेव हि प्राप्तावसरा जिज्ञासा उत्तरोत्तरमनुवर्त्तिष्यते।

अतोऽत्र प्राधान्येन विधिस्वरूपनिरूपणे अस्माभिरवकाशः प्राप्त इति स्थिते किमिदं विधिस्वरूपमिति जिज्ञासानिवृत्तये प्रकृते रथयात्राविधिस्वरूपे निरूपयितव्ये तत्र साक्षात् श्रुतिप्रमाणालाभेन तत्प्रमाणतया श्रुतिः कल्पनीया तत्र तल्लिङ्गतया अरुणोदयवेलायां तस्यां देवं प्रपूजयेदिति स्कन्दपुराणीयं यद्यनुबध्यते तदाषाढ़े शुक्लपक्षे द्वितीयायामरुणोदये रथयात्रां कुर्य्यादित्याकारको विधिः पर्य्यवस्यति। ततश्च अरुणोदयकाले उभयदिने तादृशद्वितीयाया अलाभे रथयात्राकृत्यलोपप्रसङ्गः, तदर्थमरुणोदयाघटितव्यवस्थितवैकल्पिकविध्यन्तरकल्पने च गौरवमित्यरुणोदयाघटित एक एव विधिर्लाघवतः कल्पनीयः। न च फलसन्देह एव लाघवं नियामकमिति प्रकृते फलस्य संशयकविरहेण गौरवस्य फलमुखत्वे नाकिञ्चित्करत्वमिति वाच्यम् आषाढ़स्य सिते पक्ष इत्यादिवचने अरुणोदयवेलाकथनस्य यात्राङ्गपूजाकालप्रतिपादनपरत्वव्याख्यानसम्भवस्य यात्राविहितद्वितीयातिथेररुणोदयवेलायां प्राशस्त्यप्रतिपादनपरतया वा व्याख्यानसम्भवस्य च तत्संशयप्रयोजकत्वात्।

अथोभयदिनेऽरुणोदयवेलायां द्वितीयाया अलाभे यात्रा न कर्त्तव्या इत्येवमेव निर्णय इति चेन्न—

"तल्लाभावे तिथौ कार्य्या सदा सा प्रीतये मम" इत्यत्र तिथौ सदा कार्य्येति सामान्यतः तादृशद्वितीयातिथौ यात्राया अबाधितकर्त्तव्यता प्राप्तेति तत्र तद्बाधासम्भवात् । न चाषाढ़े शुक्लपक्षे द्वितीयातिथ्यवच्छिन्नदिवसीयारुणोदये यात्रां कुर्य्यादिति द्वितीयाघटितारुणोदयान्तर्भावेन विधिरित्यपि वाच्यम्, दिवारात्र्योरेकारुणोदयस्य असार्व्वत्रिकतया सूर्य्यकिरणावच्छिन्नकालपरत्वे यत्र पूर्व्वदिने सूर्य्योदयानन्तरं द्वितीयातिथिप्रवृत्तिः तत्र पूर्व्वदिन एवारुणोदये प्रतिपदि रथयात्राप्रसङ्गस्य दुर्व्वारत्वात् ।

अथारुणोदयकालान्तर्भावेन तादृशविधिवादिनां तत्र रथयात्रोत्सवप्राप्तिरनुकूलैवेति चेन्न तादृशविधिररुणोदयकालप्राप्तद्वितीयास्थले अरुणोदयाघटितविधिकल्पयितॄणां मते समानप्रयोजनत्वेन उपदर्शितस्थले च तत्कर्त्तव्यतायाः सन्दिग्धतयाऽरुणोदयकालप्रवेशकृतगौरवस्य तादृशविधिपक्षनिरासकत्वात् । न च यत्र परदिने मुहूर्त्तन्यूनदण्डादिकालं द्वितीयास्थितिस्तत्रारुणोदयघटितदिधेरुदयगामिनीं तिथिमधिकृत्य विशेषकालकर्त्तव्यताविधायकत्वात् तत्कल्पनमिति वाच्यम् तादृशस्थले मुहूर्त्तन्यूनपूर्व्वाह्णप्राप्ततिथेः कर्म्मोपयोगित्वप्रयोजकताया एवनियुक्तिकत्वात् ।

अथैवं मा भवतु अरुणोदयवेलाया रथयात्राविधायकश्रुतिगर्भे प्रवेशः, तथापि विधिबहिर्भावेण प्राप्तप्रशस्तकालकर्म्मसमर्थतिथिग्रहणस्य "पूर्व्वाह्णो वै देवानाम्" इति सामान्यशास्त्रोपात्तपूर्व्वाह्णप्राप्ततिथिकृतव्यवस्थादृष्ट्या परिप्राप्ततया "अरुणोदयवेलायां तस्यां देवं प्रपूजये"दित्युत्सवात्मकपूजायां प्राशस्त्यकथनेनारुणोदयकालावच्छिन्नतादृशद्वितीयातिथिरेव यात्रायामुपयुज्यते इति चेन्न अरुणोदयवेलायां तस्यां देवं प्रपूजयेदित्यत्र तस्यामिति तच्छब्दस्य प्रक्रान्तद्वितीयातिथि-

परत्वावश्यकत्वेन पूर्व्वाह्णो वै देवानामित्यविरुद्धसामान्यशास्त्रोपात्त-कर्म्मोपयोगिपूर्व्वाह्णप्राप्तताहशद्वितीयातिथ्यवच्छिन्नारुणोदयस्य प्रसक्तायास्तद्वचनविषयत्वात्।

न च तस्यामिति तच्छब्दस्य केवलद्वितीयातिथिपरत्वमिह सम्भावनीयम् ताहशद्वितीयायां अरुणोदयकालस्य कः सम्बन्धः, अवच्छेद्यत्वं, सामानाधिकरण्यं, व्याप्यत्वं व्यापकत्वं वा? आद्यद्वये मुहूर्त्तन्यूनताहशद्वितीयायामप्यरुणोदये यात्रोत्सवप्रसङ्गः तृतीये असम्भवः। अन्त्ये अरुणोदयकालाद्यव्याप्तायां कर्म्मोपयुक्तपूर्व्वाह्णप्राप्त-द्वितीयायामपि रथयात्राया अप्राप्तिप्रसक्तिः।

एतेन अरुणोदयवेलायां तस्यां देवं प्रपूजयेदित्यस्य अरुणोदयवेलाया यात्राङ्गपूजाकालत्वविधायकतया अनुक्तविशेषकालस्य प्रधानस्यापि यात्रोत्सवस्य अरुणोदयकालकर्त्तव्यतापत्तोऽपि निरस्तः।

वस्तुतोऽरुणोदयवेलायां तस्यां देवं प्रपूजयेदिति वचनं न प्राप्तयात्रोत्सवमनूद्य अरुणोदयकालविधायकं किन्तु यात्राङ्गपूजाविशेषस्यैव कालविधायकमन्यथा यात्रायामरुणोदयकालप्राशस्त्यकथनेन यात्रोत्सवस्य रात्रिकृत्यत्वप्रसक्त्या अरुणोदयकालाप्राप्तिदशायां पूर्व्वाह्णादिकाले तदनुष्ठानासम्भवः।

अपि च प्रीत्यनुकूलव्यापारत्वस्यानुगतत्वेन तेन रूपेण अङ्गसहितप्रधानरूपसकलव्यापाराणां संग्रहस्यासम्भवात् यात्राङ्गीभूतप्रथमपूजारूपव्यापारविशेष एव प्रपूर्व्वकपूजिधातोरर्थो लाघवतः अङ्गीकर्त्तव्यः। तथाच अरुणोदयवेलायामित्यादिना यात्रायामरुणोदयकालप्राप्तिपक्षः सुदूरपराहत एव।

एवञ्च अरुणोदयवेलाया रथयात्रया सहाङ्गाङ्गीभावस्य तद्विधिशरीरप्रवेशनस्य चासम्भवेन तत्कालाघटित आषाढ़े शुक्लपक्षे द्वितीयायां रथयात्रां कुर्य्यादित्येक एव विधिः कल्पनीयः।

तथा च यात्राप्रकरणीयस्य अरुणोदयवेलायां तस्यां देवं प्रपूजये-

टित्वस्य यात्राङ्गपूजायामरुणोदयकालप्राप्तस्य्यमात्रविधायकतया प्रधानभूतयात्राकालानुरोधेन तत् सामान्यशास्त्रोपात्तपूर्व्वाह्णप्राप्तविहितद्वितीयातिथिर्यत्रारुणोदयकाले लाभस्तत्रारुणोदये यात्राङ्गपूजां विधाय पूर्व्वाह्णे रथयात्रोत्सवः कार्य्यः। अरुणोदयकाले द्वितीयातिथेः पूर्व्वाह्णमुहूर्त्तभङ्गस्थले तु अरुणोदयकालमनादृत्यैव पूर्व्वाह्णप्राप्ततादृशद्वितीयायां रथयात्रा विधेया। उभयदिनेऽरुणोदयकालप्राप्तमुहूर्त्तान्यूनद्वितीयाया अलाभ इव तादृशस्थले प्रधानानुरोधेन पूर्व्वाह्णप्राप्तद्वितीयायां रथयात्रायाः पूर्व्वाङ्गभूतपूजा करणीयेति तत्त्वनिर्णयः। एवञ्च १८४५ शकाब्दीयसौराषाढ़स्य त्रिंशद्दिवसे रविवासरे अप्रप्तारुणोदयवेलायां कर्म्मसमर्थपूर्व्वाह्णप्राप्तद्वितीयायां रथयात्रोत्सवव्यवस्था शास्त्रसम्मतेति विदुषां सिद्धान्तः। अलमतिविस्तरेण।

---

## जातिबाधकविचारः।

लेखकः—श्रीकालीपदतर्काचार्य्यः।

(पूर्वतोऽनुवृत्तः)

ननु प्रतियोग्यनधिकरणं स्वाधिकरणमेवाप्रसिद्धम्, सर्व्वस्यैव स्वाधिकरणस्य पूर्व्वक्षणादिवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिनिरूपिताधिकरणतावत्त्वात् पूर्वप्रदर्शितेन कारणान्तरेणैव समवायस्वरूपान्यतरसम्बन्धावच्छिन्नप्रतियोग्यधिकरणत्वस्य निवेशात् स्वाभावरूपप्रतियोगिनः समवायसम्बन्धेन अधिकरणत्वाप्रसिद्ध्या तत्परीहारासम्भवादिति चेत् न, निरुक्तान्यतरसम्बन्धेन यादृशप्रतियोगिताश्रयानधिकरणं स्वाधिकरणं तादृशप्रतियोगित्वस्य सारचिन्तायां वक्तव्य-

त्वात्। तथाहि पृथिवीत्वादिना शरीरत्वादेः साङ्कर्य्यस्थले याद्दशप्रतियोगितापदेन शरीरत्वत्वावच्छिन्नशरीरत्वनिष्ठप्रतियोगिताया एव लाभः, नतु शरीरत्वाभावस्य पूर्व्वं चणवृत्तित्वविशिष्टस्य योऽभावः शरीरत्वातिरिक्तस्तन्निष्ठप्रतियोगितायाः, पृथिवीत्वाधिकरणवस्तुमात्रस्यैव ताद्दशप्रतियोगिताश्रयाधिकरणत्वात्।

अथ स्वाभावाभावः स्वस्वरूप इत्येव कुतो निर्णीतं तदनिर्णये च स्वाधिकरणवृत्त्यभावस्य प्रतियोगिवैयधिकरण्य निर्व्वाहाय नोपयुज्यते ताद्दशः प्रयासोऽपि इति चेन्न द्रव्यत्वाभावादीनां भावप्रतियोगिकाभावानामभावस्य अभावत्वप्रतीतिप्रामाण्यानुरोधेन कथञ्चिदतिरिक्तताकल्पनेऽपि शरीरत्वाभावाभावविरहादेः शरीरत्वाभावस्वरूपत्वादिकल्पनाया एव लाघवेन कल्पनीयत्वात्। तावतापि अभावत्वप्रतीतिप्रामाण्यस्य अनपायात्। वस्तुतस्तु "अभावविरहात्मत्वं वस्तुनः प्रतियोगिते"त्याचार्य्यवचनस्वरसेन अभावप्रतियोगिनामभावाभाव रूरूपताया अवश्यं कल्पनीयत्वेन द्रव्यत्वाभावाभावादिरपि द्रव्यत्वादिभ्यो नातिरिच्यते। अतएव पञ्चलचण्यां साध्याभाववदवृत्तित्वमित्यादिलचणे विशेषणताविशेषसम्बन्धेन साध्याभाववत्त्वनिवेशकल्पे घटत्वाभाववान् पटत्वादित्यादौ घटत्वादिरूपस्य घटत्वाभावाभावस्य विशेषणताविशेषसम्बन्धेन वृत्तित्वाप्रसिद्ध्या अव्याप्तिमाशङ्क्य साध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धेन साध्याभाववत्त्वं निरुक्तम्। तथा सिद्धान्तलचणेऽपि अभावे विशेषणताविशेषसम्बन्धेन हेत्वधिकरणवृत्तित्वप्रवेशे द्रव्यत्वाभाववान् सत्त्वादित्यादौ अतिव्याप्तिमाशङ्क्य जगदीशपादैः स्वप्रतियोगिमत्त्वबुद्धिप्रतिबन्धकतावच्छेदकविषयतावच्छेदकसम्बन्धेन अभावे हेत्वधिकरणवृत्तित्वमुपगृहीतम्। तत्र प्रथमे कल्पे घटत्वाभावो नास्तीतिप्रतीतिसिद्धे घटत्वरूपे साध्याभावे वर्तमानायाः साध्यसामान्यघटत्वाभावनिरूपितायाः प्रतियोगितायाः समवायसम्बन्धेनावच्छेदात् तेन

सम्बन्धेन साध्याभावघटत्ववति घटे पटत्वस्य अवृत्तेरव्याप्तिनिरासः। द्वितीये द्रव्यत्वाभावो नास्तीत्यभावप्रतियोगिद्रव्यत्वाभाववत्त्वबुद्धि-प्रतिबन्धकतावच्छेदकद्रव्यत्वनिष्ठ--समवाय--सम्बन्धावच्छिन्नप्रकारता-वच्छेदकसमवायसम्बन्धेन द्रव्यत्वरूपस्य द्रव्यत्वाभावाभावस्य हेत्व-धिकरणे द्रव्ये वर्त्तमानतया द्रव्यत्वाभावत्वस्य तादृशप्रतियोगिता-वच्छेदकत्वात् नातिव्याप्तिरिति ग्रन्थतात्पर्य्यलाभेन अभावाभावस्य प्रतियोगिरूपत्वं सुविदितचरमेवेति।

अथ द्रव्यत्वादेरभावस्य अभावो यदि द्रव्यत्वादिरूपः, नातिरिक्तः, तदा वह्निमत्त्वादौ विशिष्टवह्निमत्त्वादिव्यापकत्वस्येव अभावत्व-सामान्ये प्रतियोगिविशेषिताभावत्वव्यापकत्वस्यावश्यकतया भाव-भिन्नत्वरूपस्य अभावत्वस्य द्रव्यत्वाभावप्रतियोगिकाभावे असत्त्वेन नियमभङ्गप्रसङ्गः, सिद्धान्तमुक्तावलीग्रन्थादौ विश्वनाथप्रभृतिभिः सप्तमस्य अभावत्वकथनादेव षण्णां भावत्वं प्राप्तं, तेन भावत्वेन पृथ-गुपन्यासो न कृत" इत्यादिसन्दर्भैरभावत्वस्य भावभिन्नतारूपत्वस्य व्याख्यानादिति चेन्न अभावत्वं भावभिन्नत्वमिति नास्मिन् मते सम-भ्युपगम्यते, परन्तु घटवद्भिन्नभेदादेः घटादिसमनैयत्येन घटादि-स्वरूपतया भेदत्वस्य भावाभावसाधारणाखण्डोपाधित्वमिव घटत्वेव घटाभावाभावसत्त्वात् घटाभावाभाववत्येव च घटसत्त्वात् मिथः सम-नैयत्येन घटाभावाभावस्य घटस्वरूपतया अभावत्वस्यापि भावाभाव-साधारणाखण्डोपाधित्वमेव स्वीक्रियते। सप्तमपदार्थतया समुद्दिष्टस्य मूलग्रन्थे न तथाविधाभावावच्छिन्नस्य किन्तु भावभिन्नरूपस्यैव, तत्त्वेन द्रव्यादीनां व्यवहारस्तु औपचारिक एवेति ध्येयम्।

(क्रमशः)

# दुर्गेशनन्दिनी

( पूर्व्वानुवृत्ता )

लेखक:—श्री.........

## त्रयोदशपरिच्छेद:

गतायां विमलायां एकाकिन्या: कक्षमध्ये समासीनायास्तिलोत्तमाया-श्चिन्ताराशिरासीत् सुखदु:खयोरुभयोरेव कारणम्। विचिन्तितं तया मुहुर्मुहु:, पापात्मन: पिञ्जराद्दाशु मुक्ति: सम्भविष्यतीति। न केवलम् एतदेव, विमला तस्यां स्वजीवितवत् स्निह्यति, जातो विमलात एव तस्या मुक्त्युपाय इति पुन: पुनरालोच्य सा सुखिततरा सञ्जाता। भूयोऽपि चिन्तयामास—मुक्तयापि वा मया क्व गन्तव्यम्? किं तावत् विद्यते तत् पितृगेहम्? तिलोत्तमा पुनरपि क्रन्दनरता बभूव। शान्तिमुपगतासु सर्व्वासु चिन्तासु नवीना काचित् चिन्ता मनसि समुदिता। अपि कुशली राजपुत्र:? क्व वा कीदृशो वास्ते? अपि स वन्दित्वमुपगत:? एवं चिन्तयन्ती तिलोत्तमा वाष्पाकुललोचना सञ्जाता। 'भो हतविधे, मदर्थमेव वन्दित्वमुपगतो राजपुत्र:। तस्य चरणेषु दत्तेऽपि जीविते किमस्य प्रतिदानं भवेत्? किं मया तस्य कृते कर्त्तव्यम्?' पुनरपि सा चिन्तामग्ना बभूव। किं नाम वर्त्तते तत्रभवान् कारागृहे? कीदृशं वा तत् कारागृहम्? किं तत्र न शक्यते गन्तुमन्येन केनापि जनेन? तत्राधुना किं चिन्तयति तत्रभवान्? किं स्मरति तिलोत्तमाम्? कथं न स्मरति? अहमेव कारणं तस्य सर्व्वासाम् यन्त्रणानाम्। न जाने तत्रभवान् मनसा मां कतिशो वा निन्दति!' पुनरपि सा चिन्तनरता बभूव 'किमेतत्? कथं मया चिन्त्यते एवम्? किं तत्रभवान् कस्मिन्नपि जने कर्कशं भाषते? न तावदेवम्। शङ्के यदि मां विस्मृतवांस्तत्रभवान्! अथवा

यवनगृहवासिनीति कृत्वा जुगुप्सया मनसि स्थानं न यच्छेत्। भूयश्चिन्तयामास—'नहि नहि कथमेवं करिष्यति? अहमपि तद्वत् वन्दित्वमुपगता एव। तदा कथं नाम मां जुगुप्सते? तथापि यदि जुगुप्सते तदाहं तस्य पादयोः पतित्वा सर्वं निवेदयिष्यामि। किं न वेत्स्यति? वेत्स्यत्येव। न चेद् बुध्येत तदा तस्य पुरतः प्राणान् त्यक्ष्यामि। आसीत् पुरा प्रचलिता अग्निपरीक्षा। कलौ सा निषिद्धा। भवतु वा निषेधः। अहं पुरतस्तस्य अग्नौ प्राणांस्त्यक्ष्यामि।" भूयोऽप्यचिन्तयत्—"कदा वा तस्य दर्शनं लप्स्ये? कथं वा स मुक्तिमधिगमिष्यति? मुक्तायां मयि किं नाम सिध्येत्। कुतो वाधिगतं विमात्रा एतदङ्गुरीयकम्? किमेतत् प्रभवति तस्य मुक्तये? किं न भविष्यति प्रेषितेऽस्मिन् अङ्गुरीयके तस्य समीपे? को वा गमिष्यति मां नेतुम्? किं तेन न शक्यते विधातुं कश्चिदुपायः? भवतु, तमेव प्रक्ष्यामि—स किं वदति! किं रुद्धात् दर्शनमपि न लभ्येत!" पुनरपि चिन्ता सञ्जाता—"जातेऽपि दर्शने किं तावत् कथयिष्यामि? कया वा वाचा मनसो ज्वालाम् उपशमयिष्यामि।" तिलोत्तमा एवम् अनवसरं चिन्तयन्ती तस्थौ।

काचित् परिचारिका कक्षमध्यं प्रविष्टा। तिलोत्तमा पप्रच्छ ताम् कियती रजनीति। सा प्रत्यभाषत—अतीतो द्वितीयो यामः। तिलोत्तमा तस्या निर्गममपैक्षत। दासी समाप्तप्रयोजना प्रतस्थे। तिलोत्तमा च विमलादत्तमङ्गुरीयकमादाय कक्षमध्यान्निर्गता। पुनरपि जाता तस्याः शङ्का। पदं कम्पितम्, हृदयं विचलितं, मुखं शुष्कतां गतम्। सा एकेन पादेन पुरो गच्छति स्म अपरेण च तिष्ठति स्म। क्रमेण साहसमवलम्ब्य सा अन्तःपुरद्वारं यावत् आगता। पौरजना वर्षवराश्च सर्व्वं एव मोदन्ते स्म। कोऽपि तां न ददर्श। पश्यन्नपि वा तां प्रति नावधानं दत्तवान्। परं तिलोत्तमामन्यत सर्व्वं एव तां लक्षयन्तीति। कथमपि समागता सा अन्तःपुरद्वारं यावत्,

तत्र द्वारपालाः सर्व्वे आनन्दोन्मत्ताः। कोऽपि निद्रां गतः, कोऽपि वा जागरितः। कोऽपि विचेतनः, कोऽपि वा अर्द्धचेतनः। केनापि सा न लक्षिता। केवलं कश्चिद्द्वारपालवेषी द्वारदेशे अतिष्ठत्। स तिलोत्तमां दृष्ट्वापृच्छत्—किं वर्त्तते अङ्गुरीयकं भवत्याः करे? तिलोत्तमा सभयं विमलादत्तमङ्गुरीयकं दर्शयामास। द्वारपालवेशी निपुणं तत् निरीक्ष्य स्वहस्तस्थमङ्गुरीयकं तिलोत्तमायै अदर्शयत्। पश्चादुवाच—आगच्छतु मया सार्द्धम्। नास्ति कापि चिन्ता। तिलोत्तमा चञ्चलचित्ता तेन सहागमत्। अन्तःपुरद्वारे द्वारपाला यथा शिथिलप्रयत्नाः, प्रायस्तथैव सर्व्वे रक्षिणः, विशेषेणाद्य निशायां द्वारं निषिद्धप्रवेशम्। कोऽपि किमपि न पप्रच्छ। रक्षी तिलोत्तमया सह नाना द्वाराणि, विविधानि चतुःशालानि नाना प्राङ्गनभूमीश्च समतिक्रम्य चलितः। अथ दुर्गप्रान्तस्थं तोरणमुपागत्य प्रोवाच—कुत्राधुना गमिष्यति भवती? आदिशतु, तत्रैव नेष्यामि। विस्मृतवती तिलोत्तमा विमलावचनम्। पूर्व्वं तावत् स्मृतिपथमागतो जगत्सिंहः। तस्या मनसि सञ्जातोऽभिलाषः—रक्षिणं सा कथयेत् यत्र वर्त्तते जगत्सिंहस्तत्र नीयतामिति। परं पूर्व्वशत्रुलज्जैव वैरं समजनयत्। मुखे वचनं तावत् बाधां गतम्। रक्षी पुनश्च पप्रच्छ—कुत्र नेष्यामि भवतीम्? तिलोत्तमा किमपि न वक्तुम् शशाक। सा तावद्विचेतनेव सञ्जाता। हृत्कम्पः समजनि। दर्शनशक्तिः श्रवणशक्तिश्च नाशं गते। स्वमुखनिर्गतमपि वचनं न शशाक निर्णेतुम्। रक्षिणः कर्णे अर्द्धस्फुटं जगत्सिंह इति शब्दः प्रविष्टः। स प्रोवाच—वर्त्तते जगत्सिंह इदानीं कारागृहनिरुद्धः। दुर्गमं तत्स्थानम्। परं त्वयि एवमादेशो वर्त्तते यद्भवत्या यत्रैव गन्तुमिष्यते तत्रैव नेष्यामीति। आगम्यताम्।

रक्षी पुनर्दुर्गमध्ये प्रविष्टः। किं करोति क्व वा गच्छतीति किञ्चिदपि अबुद्धा तिलोत्तमा यन्त्रपुत्तलिकावत् तमनुससार, रक्षी

कारागारद्वारमुपागम्य अपृच्छत्—न खलु प्रमादाच्छन्ना यन्त्र रक्षिण इव तत्रत्या रक्षिणो भजन्त शिथिलताम्। सर्व एव वर्त्तन्त अवहिताः स्वकर्म्मणि। कुतास्ते राजपुत्र इति पृष्टः कोपि अङ्गुलिनिर्देशेन दर्शयामास। रक्षी कारापालमपृच्छत्—अधुना सुप्तो जागरितो वा वन्दी? कारारक्षकः कक्षद्वारमुपगम्य प्रत्यागम्य च प्रोवाच—लब्धं तस्योत्तरम्। स जागरित एवास्ते। रक्षी कारापालमुवाच—'अपावृतं कुरु कक्षद्वारम्। रमणीयं दर्शनाय गमिष्यति।' विस्मितः कारापालः प्रोवाच—कथम्, नास्त्येवमादेशः। किं न ज्ञायते त्वया? स तदा दर्शयामास कारारक्षकाय ओसमानप्रदत्तं साङ्केतिकम् अङ्गुरीयकम्। कारापालः सपदि द्वारमुन्मोचयामास।

आसीत् राजपुत्रः कक्षमध्ये शयानः कस्मिंश्चित् साधारणे खट्टे। द्वारोद्घाटनशब्दश्रवणमात्रमेव कुतूहलात् द्वारं प्रति दत्तदृष्टिः समवर्त्तत। तिलोत्तमा देहलीं समुपागम्य विरता बभूव अग्रसरणात्। पदं न चलति। देहलीपार्श्वस्था सा द्वारमवलम्ब्य तस्थौ। रक्षी तिलोत्तमां गृहं प्रवेष्टुमनिच्छन्तीं दृष्ट्वा उवाच किमेतत्? कथं विलम्ब्यतेऽत्र भवत्या? तथापि तिलोत्तमायाः पदं न चचाल। पुनरपि रक्षी समभाषत न चेद् गम्यते प्रत्यागम्यताम्। नात्र शक्यते स्थातुम्। आसीत् तिलोत्तमा प्रत्यागमनोद्यता। तत्रापि पदं न सरति। किं कर्त्तव्यम्? रक्षी चञ्चलो बभूव। तिलोत्तमा चिन्तयन्ती अबोधपूर्वं पादमेकं पुरः ससार। सा कक्षमध्यं प्रविष्टा। कक्षमध्यकृत-प्रवेशायास्तस्या राजपुत्रदर्शनमात्रमेव लोपं गता गमनशक्तिः। पुनरपि द्वारपार्श्वे गृहभित्तिमवलम्ब्य अधोमुखी स्थिता। न तावत् राजपुत्रः पूर्वं परिज्ञातुं शशाक तिलोत्तमाम्। विस्मितोभवत् स स्त्रीजन-दर्शनेन। रमणीम् अवलम्बितभित्तिकां समीपमनागच्छन्तीं दृष्ट्वा स विस्मिततरः सञ्जातः। अथ शयनादुत्थाय द्वारसमीपमागतः निपुण-मालोक्य ताम् अभिज्ञातवान्।

निमिषमात्रं तयोर्नयने मिलिते। तिलोत्तमाया नेत्रे सपदि अधो नते। परं देहयष्टिरीषत् पुरतो राजपुत्रचरणतलपतनायेव अवनता। राजपुत्रः किञ्चित् पश्चात् प्रत्यावृत्य तस्थौ। तिलोत्तमायाः देहयष्टिश्च मत्तमुग्धा इव निस्तब्धं स्थिता। सहैव अश्रूयत् चणप्रस्फुटितं तस्या हृत्पिण्डम्। राजपुत्रोऽभाषत—किं वीरेन्द्रसिंहस्य दुहिता?

तिलोत्तमाया हृदये शल्यं विद्धम्। वीरेन्द्रसिंहस्य दुहितेति किमितदधुना सदृशं सम्बोधनम्? किमधुना विस्मृतं तिलोत्तमाया नामापि जगत्सिंहेन? उभावेव चणं नीरवं तस्थतुः। भूयोऽपि राजपुत्रः समभाषत—कथमत्रागता? कथमत्रागता? कीदृशः प्रश्नः? विघूर्णितं तिलोत्तमाया मस्तकम्। समन्तात् कक्षशयनप्रदीपप्राकारादीनि सर्व्वाण्येव विघूर्णितानि। सा अवलम्बनाय भित्तिकायां न्यस्य मस्तकं तस्थौ। राजपुत्रः सुचिरं प्रतिवचनप्रत्याशया स्थितः। को नाम जनः प्रदास्यति प्रत्युत्तरम्? प्रत्युत्तरसम्भावनमदृष्ट्वा स पुनरपि अभाषत प्राप्तं त्वया महत् कष्टम्। प्रत्यावृत्यतामधुना। विस्मर्यतां पूर्व्वा कथा।

गता तिलोत्तमाया भ्रान्तिः। सहसा वृन्तच्युता वल्लीव सा भूतलमधिगता।　　　　(क्रमशः)

## चन्द्रालोके।

लेखकः—धूर्जटीप्रसादकाव्यतीर्थः

### चतुर्थोऽङ्कः

युधि—(विचिन्त्य स्वगतम्) हन्त हन्त भोः किमिदानीं प्रतिविधातव्यम्

　　अयं भीमो यद्यद् वदति न मुधा क्षत्रियकुले
　　त्रिलोकीशो धाता स खलु भगवान् वेत्ति न च कः।

स बन्धुर्भ्रातायं सपदि विदधेऽहं किमधुना
द्विधा भिन्नं चित्तं प्रविशति वितर्कान्धतमसे ॥

भीमः—अपिचार्य्य ! दण्डिदेवोऽयमभ्यागतः। अतस्तदर्हना किमु भवतां न वाञ्छनीया शत्रुरपि यदि भवनमुपायाति तदा सोऽपि रक्षणीयो यत्नतस्तथाहि

एको हीनबलः सहायरहितोऽवन्तीश्वरो मानवो
लोकेशो भगवान् बली प्रतिभटा यस्यासते कोटिशः।
अस्मिन् वैरविधौ बलाबलमनुस्मृत्योभयोः पक्षयो-
र्मत्वा धर्म्ममवेक्ष्य सौरविभवं युद्धे मनो धीयताम्

युधि—(स्वगतम्) देव ! यदुपते ! भवत्पादपयोजसेवाधीनमानसा अपि यद्वयं भवता सह योद्धुमभियामस्तत् क्षमस्व भगवन् !

एकमेवाद्वितीयं यत् तद्विष्णोः परमं पदम्।
विचिन्त्य यत् करोम्यद्य न गोप्यं मच्चिकीर्षितम् ॥

(भीममालिङ्ग्य सहर्षं प्रकाशं) हन्त हन्त भोः विजितमिदानीं वत्स ! वृकोदर ! एहि परिष्वजस्व त्वमेवास्मत्कुले सार्थकजन्मा (सोत्साहं) तदधुना

निष्पिंषन् रिपुवीरकीटहृदयं दिग्देशकोणान्तर-
माकाशं प्रतिशब्दयन् त्रिजगतीं भीतिस्वनैर्मूर्च्छयन्।
भीमैर्घर्घरगर्ज्जनैर्लयमहाम्भोधिध्वनिं स्तम्भयन्
अस्मद्दुन्दुभिशङ्खझर्झररवो युद्धार्थमुज्जृम्भताम् ॥

भीमः—(सोच्छ्वासं) सर्व्वथा जितं जितमिदानीमस्माभिः प्रतिहतारिकटकार्णवोत्तुङ्गतरङ्गोच्छ्वासैः प्रार्थितलाभकृतार्थैः। तदिदानीं प्रतिजानीमहे (आकाशे लक्ष्यं बद्धा)

यावच्चन्द्रदिवाकरग्रहगणा भास्यन्ति भास्वद्दिशो
यावद्भिन्नगतिर्न वास्यति मरुत् कल्पान्तकालोदितः।

विश्वं दग्धुमना ज्वलच्छिखिशिखा यावच्च नोदेष्यति
तावन्नैव भविष्यति प्रतिहता सा नः प्रतिज्ञाऽचला ॥

अर्ज्जुन! कथमधुनापि तूष्णीमास्से?

मुक्तिस्तदा यदि मृतिः समराग्रभूमौ
तद्गौरवाय यशसे विजयोऽत्र चेन्नः!
तत् किं मुधासि विमना व्रज सव्यसाचिन्!
युद्धाङ्गने ; ध्वनतु ते धनुराततज्यम् ॥

अपरञ्च वैरं वा प्रणयश्च वा तस्मिन् विश्वात्मनि सर्व्वान्तःसाक्षिणि-परमेश्वरे सम्भवेदिति न लघुता लघुचेतसामस्माकं। यतः स हि

माता कस्य पिता स्वसा च दुहिता भ्राता सुतो बान्धवो
यो ब्रह्माण्डतलेऽजरामरनिराकारोऽपि मूर्त्तिन्धरः।
हन्तुं पापरतान् जगन्ति पवितुं पूर्णावतीर्णो हरिः
कर्म्मैवार्थयते चिराय सुहृदः के तस्य के वारयः ॥

कुन्ती—हा सुभद्दे! तुमं दानीं मे कुलक्खअआरिणी संवुत्तासि

भीमः—न किल क्षत्रवधूः स्नेहान्धतया लघुतया वा धर्म्ममवधीरयति इति तया तदाचरितम् अतोऽन्यथा नात्यहितं मन्तव्यं भगवत्या। तथाहि पश्यतु भवती

दिशो मुक्ता मेघैः कुसुमनिकरापीड़तरवो
वहन् स्वैरं वायुर्विहगनिकरोऽयं कलरुतः।
अयं भास्वान् भास्वानयमपि शशाङ्कः कुलपिता
प्रशंसन्ते ते नः समरविजयायोद्यतकराः ॥

(नेपथ्ये) विजयतां विजयतां सकलक्षत्रियकुलोद्वहः सानुजो भारतभूमण्डलाखण्डलः श्रीधर्म्मराजनन्दनो महाराजो युधिष्ठिरः।

(सर्व्वे विस्मयं नाटयन्ति)

प्रतिहारी—(प्रविश्य) जअदु जअदु भट्टा। एसो कोवि राअ-

कुमारओ विअ दिब्बाकिदी पुरिसो जअसद्दे ण तोरणदुआरि उवट्ठिदो

युधि—गच्छ, प्रवेशयैनम् ।

प्रती—जं भट्टा आणवेदि (प्रणम्य प्रस्थिता)

ततः प्रविशति कामः

कामः—विजयतां महाराजः

युधि—(निरीक्ष्य) अये मित्रतनयः कामदेवः ? वत्स ! स्वागतम् ।

कामः—आर्य्य ! अयोग्यमेतत् समुचितसमुदाचारस्य किमिति मां स्वागतप्रश्नेन क्लेशयति भवान् ?

युधिः—वत्स ! न जातु च्यवते कर्त्तव्यात् सुधियां धीरित्येवमनुष्ठितम् तदलं विकल्पेन । अपि नाम कुशलं तत्रभवतो भगवतो वासुदेवस्य प्रकृतीनाञ्च ?

कामः—राजन् ! कथं नामाकुशलम् ? तथाहि

क्रीड़ाकन्दुकवज्जगन्ति नियतं संगृह्य यो हेलया
सृष्ट्वाधो विनिपात्य खेलति चिरं त्रिगुणभिन्नो विभुः ।
हा हा पापविलासिनां सुकृतिनां त्राता नियन्ता भुवां
वांछाकल्पनिधिः कथं स भगवानस्वस्तिमान् वा भवेत् ।

तथापि स केनापि कारणेनोद्विजते नाम

युधि—किमिव ।

कामः—मित्रव्यपदेशिभिर्भवद्भिः सह युद्धार्थमभियास्यतस्तस्य किञ्चिदुद्वेगमात्रमुपजातम् ।

भीमः—कन्दर्प ! वयं मित्रव्यपदेशिन इति वदतस्तव सहस्रधा न विदीर्णं किमु रसनया ?

युधि—अहह ! धिक् एवंवादिनं त्वां कन्दर्प !

भीमः—अथ त्वमिह कथमागत इति ज्ञातुमिच्छामि ।

कामः—यथावन्तीराजो दण्डिदेवः सांस्त्रिभुवनं परिभ्रम्याश्रय

सलभमान इहोपागतस्तदेन समपयन्तु ; अन्यथा समवाय सज्जीभवन्तु भवन्तः।

भीमः—बाढ़म् ; यद्भगवानादिशति।

भगवद्दुन्दलाभार्थमस्माभियत् कृतं पुरा।
तदद्यापि स्मृतं सर्व्वं नाधुना विस्मृता वयम्॥

कामः—विजयस्व। (प्रस्थितः)

कुन्ती—(सखेदं) बच्छ! जुधिट्ठिर! किम्मेदं।

युधि—अस्मद्दुर्नयफलमेतत्।

कुन्ती—ता दानीं किं करणिज्जं।

भीमः—(सोत्साहं) मातस्तत्किं बहुना ; इदानीं हि

युष्मत्पुत्त्रगणः स्वधर्म्मनिरतः सर्व्वायुधैर्भूषितः
प्रोत्साहद्विगुणायितक्रमहतक्षौणीतलो वीर्य्यवान्।
युद्धार्थं कृतनिश्चयः समरभूतीर्थोदकं गाहते
दत्तां मूर्द्ध्नि शुभाशिषं पदरजश्चाभेद्यवर्म्मोपमम्॥

कुन्ती—(कृताञ्जलिः) भअवं सअलभूमण्डलप्पआसअ! दिआकर! सव्वणिआमअ धम्मराअ! त्तिहुवणजोवणेक्ककारण! समीरण! त्तिदिवाहिराअ! भअवं वासव! सुरलोअवेज्जा! अस्सिणा! कुरुभोजवंअजाद महापुरिसा! अम्मे वि जक्ख-रक्ख-गन्धव्व णागप्पहुदत्त! रक्खन्तु रक्खन्तु मे पुत्तआणं दुव्विसहसत्ताऽदिहिं देअ माणवसमरे हुदासणे पदङ्गा विअ। एदाणं सरीरे सत्तत्थणिअरा पदन्दो वि णिव्विज्जआ विफलीभअन्तु। एसो वो अञ्जली। अणुगेह्णन्तु मं हदभाअहेआं। पेक्खन्तु अ सअरुणदिट्ठिआए। णमो णमो सव्वाणं चरणकमलेसुं।

नेपथ्ये—विजयतां विजयतामुद्धृताशेषसापत्न्य कण्टकः सभ्रातृकः सफलप्रतिज्ञः श्रीमत्कौरवाधिराजो युधिष्ठिरः।

अपि च भो भोजराजनन्दिनि।

देवांशप्रभवाः सुतास्तव ततः किन्नाम सन्दूयसे
त्रैलोक्ये नहि कोऽपि जेतुमिह तानेतान् समर्थो रणे।
अन्तःसारविहीन शत्रुगहने दुर्द्दैवकीटाहते
सन्दीप्यन्तु भवत्-सुतानल महाज्ज्वाला समन्ताद्दिशाम्॥

(सर्व्वे सविस्मयमाकर्णयन्ति)

भीमः—मातः किंवा नाकर्णयति भवति। यदन्तरीक्षचारिणो देवा अप्यस्मत् संग्रामावतरणमनुसन्धन्ते नाम।

अर्ज्जुनः—आर्य्य! किञ्चिन्मे वक्तव्यमस्ति।

भीमः—उच्यतामवहितोऽस्मि।

अर्जुनः—अनन्तदेवानीकतरङ्गसङ्कुलेऽस्मिन् संग्राममहार्णवे कथं नाम वयं पञ्च भ्रातरः सञ्चरितुं समर्था भवेम अतो ये ये सहाया आत्मीयाश्च सन्ति ते नाम दूतमुखेन लिपिन्यासेन स्वयंगमनेन वात्मग्राह्याः करणीयाः।

युधि—सुष्ठु मन्त्रितं वत्सेन; तत्त्वमेवार्य्यस्थानवासिनो द्रौपद मात्स्य-मागध-वैदेह-कर्णाट-दाक्षिणात्यादीनामन्वयस्य पत्रादिप्रेषणेन नराधिपान् एवञ्च विज्ञाप्य

वीराः क्षत्रियपुङ्गवा विजयिनश्चन्द्रार्क वंशोज्ज्वलाः
शत्रूच्छूनशिरो-विपाटनपटुप्रोन्नीत कौक्षेयकाः॥
मत्वा मोक्षपदं यशश्च विजये संप्राप्तुमिच्छेत चेन्
मर्त्त्यामर्त्त्य महामृधे भवत नो यूयं सहाया इह॥

अर्जुनः—यथाज्ञापयत्यार्य्यः।

युधि—(विमृश्य) श्रीमान् सुयोधनो हि भारतस्याधुना सम्राट् इत्यतस्तत्साहायकमन्तरेणार्य्यावर्त्तनरपतयः कथमप्यत्र न सङ्गमिष्यन्ति नाम। तत्तावत् पूर्व्वमेव सुयोधनायैवं कथ्यतां स्वयंगमनेन तथाच

त्राणार्थं विपदो विपन्नजनुषां दुर्द्दैवपाकान्महा—
युद्धं संघटते समं भगवता कृष्णेण देवैश्च नः।

तद्विस्मृत्य चिरात्तामद्यमितो युद्धार्थमामन्त्रये
राजन्! भ्रातृधिया समेत्य सगण: साहाय्यमत्राचर ॥

अथ कुरुवृद्धाश्च भीष्मद्रोणप्रभृतयो महामतयो विज्ञापनीया अस्मद्विपत्पातम्। तदनुमत्या चार्य्यस्थानयाभिषु नरपतिषु सुयोधन-नाममुद्राङ्कितानि पूर्व्वोक्तानि पत्त्राणि प्रेरणीयानि; एवं नीतौ प्रयुक्तायां सर्व्व एव सुयोधनपक्षपातिन: स्वगौरवमस्मद्धीनवीर्य्यताञ्च मन्यमाना इह मिलिष्यन्त्येव।

भीम:—(साभ्यसूयम्) अहह! कथमिहापि नीचसेवामनु-मन्यामहे हा धिक्, कष्टं सर्व्वथा हतमस्माभि: कलङ्कमलीमसा।

अर्ज्जुन:—कष्टाय खलु सापत्नसाहाय्यप्रार्थना।

युधि—राज्यान्ध: स खलु सुयोधनोऽस्मासु यद्यदाचरितवान् तत् केवलं कर्णशकुनिप्रभृतिकूटकपटाचारिकर्णेजपपरिचालनया। यत्सत्यं

श्रीमान् भारतराजमस्तकमणि: सम्राट्, स मानी बली
भीष्मद्रोणमुखा महारथगणा: सैनाधिपत्ये स्थिता:।
गान्धारास्वरसिन्धुमद्रमगधाधीशा विधेया स्ततोऽ
स्माभि: सार्द्धमरित्वमेतदपि चेन्नीच: स नो कौरव: ॥

(क्रमश:)

## सन्देशकणिका:।

**वार्षिकोत्सव:।**—सुनिर्वृत्तमेतस्या: संस्कृतसाहित्यपरिषद: सप्तमवार्षिकोत्सवसभाविवेशनमस्यैव मासस्य चतुर्दशे दिवसे सायं तत्रभवतां महामहोपाध्याय C.I.E. पदभाजां श्रीयुक्तहरप्रसादशास्त्रि-पादानां नानाशास्त्रपारदृश्वनामाध्यक्ष्येण तथा दिगन्तागतपण्डितमहत्त-मानामसंख्यानामनुकम्पया सानुरागसुपस्थानेन सुप्रसिद्धे मनोमोहने रङ्गनिकेतने। तत्र प्रथमत: संस्कृतसाहित्यपरिषदो नियतमध्यक्षपद-मधिरूढ़ानां महामहोपाध्यायपदभाजां श्रीकालीप्रसन्नविद्यारत्न-महोदयानां प्रस्तावेन तथा राजकीयसंस्कृतकलाशालाध्यक्षाणां

श्रीमतामाशुतोषशास्त्रिपादानामनुमोदनेन तदानीन्तनसभायामध्यक्षपदवीमारूढेषु महामहोपाध्यायशास्त्रिपादेषु सङ्गीतसम्पादनपटिम्ना श्रीमता राधाचरणभट्टाचार्य्येण सुगीते सभासमुद्बोधनसङ्गीते परिषदो व्यतीतवर्षकृत्यं विज्ञापितवति परिषदन्यतरसम्पादके श्रीयुक्तपशुपतिनाथशास्त्रिमहाभागे परिषदन्यतमसहकारिसम्पादकेन श्रीयुक्तदीनबन्धुसाहित्यशास्त्रिणा निवेदितेषु भाविवर्षकार्य्यनिर्व्वाहकसदस्यनामसु प्रास्तावसरं सभापतिमहोदयेन निरावरणमकारि सेरपुरभूस्वामिनाम् एम् ए वि एल् श्रीयुक्तगोपालदासचतुर्धुरीणानां साहायकेन परिषदा सम्पादितं कविप्रवीण-नानाविधस्मृतिनिबन्धकार-वैशेषिकदर्शनगोभिलगृह्यसूत्रादिभाष्यकातन्त्रच्छन्दःप्रक्रियादिबहुलग्रन्थनिर्मातॄणां महामहोपाध्याय-स्वर्गत-चन्द्रकान्ततर्कालङ्कारमहाशयानां तैलचित्रं, सुकियाष्ट्रीटस्थितसुप्रसिद्धचित्रशिल्पिना श्रीयुक्तसुरेन्द्रनाथवाक्चिमहाशयेनाङ्कितं, * सर्वसामाजिकसमक्षम्। अथैतेषां प्राचीनमहर्षिकल्पानां गुणप्रकर्षमधिकृत्य प्रभुपादपदभाजः श्रीमन्तः अतुलकृष्णगोस्वामिपादाः श्रीमन्तः आशुतोषशास्त्रिपादाः काशीविश्वविद्यालयाध्यापकाः श्रीमन्तो हरिहरशास्त्रिपादास्तथा राजकीयसंस्कृतकलाशालाध्यापकाः श्रीमन्तः सितिकण्ठवाचस्पतिपादाः अन्ये च विद्वत्तमाः स्वमन्तःकरणं निरावरणं व्यदधुः। श्रीमतां हरिहरशास्त्रिणां तत्र पठितानि रमणीयश्लोकमयवचनानि श्रावणमासीयपत्रिकायामस्माभिः प्रकाशं नेष्यन्ते। अनन्तरं श्रीयुक्तकृष्णप्रसन्नतर्कवागीशेषु तथा श्रीयुक्तदुर्गाचरणसांख्यवेदान्ततीर्थेषु सभापतीनां कृतज्ञतामावेदितवत्सु अपरेषाञ्च बहुविषयलब्धवर्णानां सदस्यानां शुभागमनमभिनन्दितवत्सु सभाविच्छेदः समजनिष्ट। अथ प्रकंस्यमाने भासकृतमध्यमव्यायोगविशाखदत्तकृतमुद्राराक्षसरूपकयोरभिनये सभापतिप्रमुखेषु सदस्यवर्गेषु सभास्थानमपहाय सामाजिकपीठमाश्रितेषु सुमधुरनान्दीसङ्गीतप्रसङ्गेन प्रवृत्तो मध्यमव्यायोगस्य अभिनयः।

* तर्कालङ्कारपादान् प्रति गौरववृद्धया वाक्चि महाशयेन केवलमर्द्धं मूल्यं गृहीतम्।

नान्दीसङ्गीतात् प्रभृति भरतवाक्यपर्य्यन्तं सुसम्यादितेनाभिनयेन सुतरां परितोषिता: सामाजिका । ततः श्रीयुक्तमल्लिनीरञ्जनपण्डित-महोदयेन मध्यमश्रेणिकभूमिकारूढ़ाय श्रीमते नगेन्द्रनाथभट्टाचार्य्याय नगेन्द्रपदकं नाम किमपि रौप्यपदकं प्रदत्तम् । तच्च श्रीमत: कण्ठे सभापतिभि: श्रीयुक्तहरप्रसादशास्त्रिभि: समर्पितम् । अथ तौर्य्यत्रिकादि-समायोगानन्तरम् प्रवृत्तो मुद्राराक्षसनाटकाभिनय: । यद्यपि विशाख-दत्तकवितामहिमा नोपयुज्यते सविशेषमभिनयविधौ तथापि प्रयोग-नैपुण्ये न पारिषदानां कामं रसानुभूतिरनुकूलितेति दृढ़ं वक्तुमर्हाम: । साकल्येन वार्षिकोत्सववृत्तान्त: सर्वथा निरवद्यसंस्थान इत्यत्र तदानीन्तनसामाजिका एव प्रमाणम् । एवं सकलकृत्यावसानं रात्रे-स्तृतीयहोरायां प्रायेण जातमिति ।

रथयात्रा ।—श्रीश्रीरथयात्रोत्सव ऐषम: सौराषाढ़स्य त्रिंश-द्दिवसे तत्परदिवसे वा कर्त्तव्य इत्यर्थविरोधे कलिकाताया: पञ्चाङ्ग-प्रचारयितार: एकैकमतमवलम्बमाना: अन्योन्यवैगुण्यमुद्भावयन्त: स्वस्वमतं वाग्वैचित्र्याड़म्बरेण संरक्षितुं प्रयतमाना: साधारणानां शास्त्रापेक्षिणां मनसि महान्तं विक्षोभं जनयामासु: । तस्मिन् कार्य्य-सन्देहे कस्तावन्निर्णय इत्यधिकृत्य विचारचतुरेण विदुषैकेन 'रथयात्रा-भ्रान्तिनिरासो' नाम रचित: कश्चिन्निबन्धोऽस्माभि: प्राप्त: स्थानान्तरे प्रकाशितश्च । तस्य तावत् पण्डितानां निरपेक्षधियालोचनं सर्वथा-स्माभि: प्रार्थ्यते ।

आनन्दप्रकाश: ।—इदानीं संस्कृतसाहित्यरसिकानां कश्चि-न्नितरामानन्दकर: सन्देश: समुपस्थाप्यते यत् परिषद्विशिष्टसदस्या महामहोपाध्यायपदभाजो वाराणसेयराजकीयकलाशालाध्यक्षचरा: (Late Principal, Queen's College, Benares) झोपाह्वा: श्रीगङ्गानाथसूरिमहाभागा: सम्प्रति प्रयागविद्यापीठस्य कालिक: पुरोधा: (Offg. Vice-chancellor, Allahabad University) संवृत्त:

ब्राह्मणपण्डितानामयमेव ईदृक् प्रथमो गुणपुरस्कारो ब्रिटिशशासनकाले इति जानीमः।

श्रेष्ठिनः श्रेष्ठपदम्—परिषत्परमसहायको महाधनो महानुभावः श्रेष्ठी सार् ॐकारमल्लजेठियाख्यः सम्प्रति एण्ड्र युलसंज्ञकस्य यूरोपीयवणिक्समवायस्य आध्यक्ष्याधिकारे (managing director) नियुक्त इत्यस्मद्देशीयानां तादृशि समवाये अभूतपूर्वो नियोग इति भारतीयानां सुतरां मनोविनोदिनी वार्त्ता।

स्वर्यानम्।—परिषत्सदस्यवर्य्याः दानादिविविधसत्कार्यसूत्रस्तया स्वदेशीयानां तथा विदेशीयानामपि चित्तं सोपयोगमाकृष्टवन्तोऽन्वर्थराजपदभाजो दामोदरदासवर्म्माणः सम्प्रति स्वजनानिव परांश्च परःशतान् शोकविजृम्भितान् कृत्वा परलोकं गता इति सुतरां सीदन्तो वयं तदीयबान्धवेभ्यो हार्दिकीं समवेदनां विज्ञापयामः! तत्पुण्यबलाद् भगवत्प्रसादाच्च तत् पुत्रा अपि तदीयगुणमाधुर्येण तादृशयशोभिर्दीर्घायुषो विराजन्ताम्।

शोकवार्त्ता।—सुगृहीतनामधेयस्य उमेशचन्द्रगुप्तविद्यारत्नस्य परलोकप्रयाणमस्माकमतीव दुःखजनकम्। यद्यपि वेदादिषु सम्प्रदायसिद्धं पन्थानमपहाय नवीने कस्मिन्नपि कुटिलपथे भ्रान्तवानसौ तथापि वैदिकसाहित्येषु तदीयभूयोदर्शनं सुविदितमेव सर्वेषाम्। एवं सम्भावितवेदविज्ञानस्यापि अवैदिकी मतिरुदभूदिति द्वितीयं नो दुःखकारणम्।

विस्मयवार्त्ता।—उत्तरपाड़ाराजवंशीयस्य उदारकीर्त्तेरस्मद्हितैषिणः शिवनारायणमुखोपाध्यायस्य अदूरमतिक्रान्ते श्राद्धे ब्राह्मणपण्डितानां पर्य्याप्तं सम्मानना नाभूदिति नो विस्मयः। तस्य महात्मनो गुणाश्चापि सहैव तेन याता इति च नो दुःखहेतुरधिक इति शम्।

---

## परिषदो वार्षिको आयव्ययसंक्षेपलिपिः

**आयः**

| | |
|---|---|
| वृत्तिरूपेण संगृहीतम् | २२३८॥० |
| प्राबेशिकरूपेण प्राप्तम् | १०।≠० |
| पत्रिकाविज्ञापनलब्धम् | १२६) |
| सामयिकदानरूपेण प्राप्तम् | २६४३) |
| पुस्तकविक्रयलब्धम् | १८॥≠० |
| पत्रिकाप्रेषणव्ययार्थं लब्धम् | १३।० |
| पत्रिकामूल्यरूपेण प्राप्तम् | १६≠१५ |
| अभिनयलब्धम् | ५०१॥० |
| पुस्तकालये न्यस्तम् | १६।० |
| ऋणरूपेण गृहीतम् | ३४३॥० |
| कुसीदरूपेण प्राप्तम् | ५०) |
| पुस्तकप्रकाशार्थं लब्धम् | १५०) |
| सेभिंस्‌ब्याङ्कागाराद् गृहीतम् | २६०) |
| | ६४८०॥१५ |
| पूर्ववर्षस्य उद्वृत्तम् | १३५।≠ |
| १३२८ बङ्गाब्दीयचैत्रपर्यन्तं सेभिंस्‌ब्याङ्के स्थितम् | १२००॥≠१५ |
| Govt. Paper | १०००) |
| | ८८२६≠१० |
| | ६१०६≠५ |
| उद्वृत्तम् | २७२०/५ |

**व्ययः**

| | |
|---|---|
| गृहशुल्कम् | ४५६) |
| आलोकव्ययः | ८८॥≠५ |
| पत्रिकापत्रक्रयार्थम् | २८२।१० |
| पत्रिकाप्रेषणशुल्कम् | १२०(५ |
| पत्रिकामुद्रणव्ययः | ४७१॥१५ |
| पत्रिकाबन्धनव्ययः | ३४≠० |
| पत्रिकाकर्मचारिवेतनम् | २७०) |
| कर्मकारकाणां वेतनम् | ५०२॥≠० |
| लेखाद्युपकरणम् | ६२॥/१५ |
| गृहोपकरणनिर्व्वाहार्थम् | ३॥/१५ |
| पाथेयव्ययार्थम् | ५८≠१० |
| शुल्कपत्रक्रयार्थम् | ४४॥१५ |
| मुद्रणव्ययः | ३८४॥≠० |
| विविधेषु | ३५॥≠१५ |
| छात्राणां वृत्तिः | ११०) |
| ऋणपरिशोधः | ३४८॥० |
| देवपूजासु | १५) |
| पुस्तकालयन्यासात् प्रतिगृहीतम् | ६) |
| पुस्तकक्रयार्थम् | २५३॥/१० |
| संस्कारादिषु | ४।≠० |
| अभिनयार्थम् | ३२१॥/० |
| वार्षिकोत्सवेषु तथा षड् विशेषसभासु | १००(१० |
| अभिनयोपकरणक्रयार्थम् | २॥≠० |
| सारस्वतसमाजपरीक्षाव्ययः | २२) |
| विज्ञापनसंग्रहव्ययः | २३॥० |
| पुस्तकप्रकाशव्ययः | २२७।१० |
| राजस्वम् | ५।≠० |
| सेभिंस्‌ब्याङ्के दत्तम् | १५००) |
| व्ययसमष्टिः | ६१०६≠५ |

आयव्ययलिपिरचकः
श्रीवामाचरणकाव्यतीर्थः

आयव्ययलिपिपरीक्षकः
श्रीअवनीकान्तमित्रः
वि, एस्, सि ; वि, एल्

---




# ভারতবর্ষ মধ্যে সর্ব্বাপেক্ষা পুরাতন, বৃহৎ, অকৃত্রিম ও সুলভ আয়ুর্ব্বেদীয় ঔষধালয়

সুলভে অকৃত্রিম ঔষধ বিক্রয় শক্তি ঔষধালয়ের বিশেষত্ব

কারখানা—স্বামীবাগ রোড, ঢাকা; হেড আফিস - পটুয়াটুলী ষ্ট্রীট, ঢাকা। কলিকাতা হেড আফিস— ৫২।১ বিডন ষ্ট্রীট কলিকাতা।

দশন সংস্কার চূর্ণ—উৎকৃষ্ট দাঁতের মাজন, দাঁতের বিশেষ উপকারী, মূল্য ৵০ কৌটা।

খদির বটীকা—পানের পরিবর্ত্তে ব্যবহার্য্য উপকারী ও সৌগন্ধযুক্ত মূল্য ৵০ কৌটা।

বহরের ননী—পাঁচড়া ও ঘায়ের মহৌষধ, মূল্য ॥০ আনা।

শক্তি বা কর্ম্মযোগ এবং আয়ুর্ব্বেদীয় চিকিৎসা প্রণালী সম্বলিত ক্যাটলগ পত্র লিখিলে বিনামূল্যে পাইবেন। সকল ব্রাঞ্চেই সুদক্ষ কবিরাজ বিনামূল্যে ব্যবস্থা দিয়া থাকেন।

অধ্যক্ষ—শ্রীমথুরামোহন চক্রবর্ত্তী, বি, এ,

টেলিগ্রাম "শক্তি" ঢাকা।




গুণে অদ্বিতীয়, গন্ধে অতুলনীয়, শিরোরোগের মহৌষধ। এক শিশি ১৲ টাকা, ৩ শিশি ২॥০, ৬ শিশি ৫৲ টাকা, ১২ শিশি ৯॥০ টাকা, এক গ্রোস ১০৮৲ টাকা, ডাকমাশুল স্বতন্ত্র।

---




রক্তদুষ্টির মহৌষধ। শরীরের দুর্ব্বলতা দূর করিয়া কান্তি ও পুষ্টি বর্দ্ধনে অদ্বিতীয়। ১ শিশির মূল্য ১॥০ দেড় টাকা, ৩ শিশি ৩৸০ আনা। ৬ শিশি ৭॥০ সাড়ে সাত টাকা, [illegible]ন্ত্র।

সি কে সেন এণ্ড কোং লিমিটেড।

২৯নং কলুটোলা ষ্ট্রীট, কলিকাতা।

१८४५ शकीये श्रावणी | Reg. No. C. 1073. | ६ष्ठ वर्षस्य ४र्थ संख्या
August 1923. | Vol. VI. No. 4

ভারতে ভাতু ভারতী

সংস্কৃতসাহিত্যপরিষৎ
১৩৩০, ২০শে ভাদ্র

বিহিতসম্মানপুরঃসরনিবেদনম্—

মহাশয় আগামী ২৬শে ভাদ্র বুধবার অপরাহ্ণ সাড়ে পাঁচ ঘটিকার সময় পরিষদের বর্ত্তমান মাসের অধিবেশন হইবে। এই সভায় শিক্ষাবিভাগের অধ্যক্ষ মাননীয় শ্রীযুক্ত কর্ণেল্ মহোদয় শুভাগমন করিবেন। আপনার উপস্থিতি একান্ত প্রার্থনীয়। ইতি—

বশংবদ
শ্রীপশুপতিনাথ শাস্ত্রী
শ্রীগীষ্পতি রায়চৌধুরী
সম্পাদক।

কার্য্যাবলী—

১। "সংস্কৃত সাহিত্যে ধর্ম্মপ্রধানতা" নামক প্রবন্ধ পাঠ
( লেখক শ্রীচিন্তাহরণ চক্রবর্ত্তী বি, এ, )

২। অধ্যাপক শ্রীযুক্ত কালীপদ তর্কাচার্য্য কৃত 'অমরুকোঙ্কার' ও ভাসকৃত 'দূতঘটোৎকচ'—রূপকদ্বয়ের অভিনয়।



নালি- ...মান্দ: ...লিমা ...ম্।

Foreign price 7s. yearly including postage.

কেশরাশিকে কুঞ্চিত ও কোমল করিবার জন্যই

# কে-শ-র-ঞ্জ-ন-তৈ-ল

এই আসমুদ্র ভারতের সর্ব্বত্রই কেশরঞ্জনের শতমুখে সুখ্যাতি। নিত্য স্নানকালে কেশরঞ্জন মাথায় মাখিলে সমস্ত দিনটী চিত্ত প্রফুল্ল থাকে। কেশ-রঞ্জন নিত্য মাথায় মাখিলে মাথা ধরা, মাথা ঘোরা, অনিদ্রা, মন হু হু করা প্রভৃতি উপসর্গ বিদূরিত হয়। দেশের রাজা মহারাজা হইতে সামান্য গৃহস্থ গৃহেও কেশরঞ্জনের সমাদর। আপনিও ব্যবহার করুন। মূল্য প্রতিশিশি এক টাকা, ডাকব্যয় সাত আনা।




## স্নায়বিক দুর্ব্বলতার আশু প্রতিকার।

বলবর্দ্ধক, মেধাবর্দ্ধক ও স্মৃতিবর্দ্ধক মহৌষধ। আমাদের "সঞ্জীবন রসায়ন" স্না দুর্ব্বলতার জন্য যাহাদের উদ্যম-উৎসাহশক্তি-স্ফূর্ত্তি ও স্মৃতিশক্তি বিনষ্ট হইয়াছে, অ অগ্নিমান্দ্য প্রভৃতি প্রাণিক্ষয় উপদ্রব উপস্থিত হইয়াছে, তাঁহাদের পক্ষে সঞ্জীবন র অমৃতের ন্যায় উপকারী। বিশেষতঃ ইহাদ্বারা বমন, বমনেচ্ছা, উদ্গার, হিক্কা, আ (পেট ফাঁপা) ও পেট ভুটভাট করা প্রভৃতি পেটগরমের উপদ্রবসমূহ অচিরে নিবা হইয়া থাকে। এক কথায় বলিতে হইলে, অজীর্ণ অগ্নিমান্দ্য ও স্নায়বিক দুর্ব্বলতা নি জন্য এবং ছাত্রগণের মেধাবৃদ্ধি করিতে "সঞ্জীবন রসায়নের" ন্যায় অব্যর্থ ঔষধ বিরল। এক শিশির মূল্য ১৲ টাকা। মাশুলাদি ৶০ আনা।

পরিবর্ত্তিত **সচিত্র কবিরাজ-শিক্ষা।** পরিবর্দ্ধিত

### শ্রীযুক্ত নগেন্দ্রনাথ সেনগুপ্ত প্রণীত।

সমগ্র আয়ুর্ব্বেদ শাস্ত্রের সার সঙ্কলন। বড় বড় আটটী খণ্ডে সমগ্র পুস্তক বি অতি সরল ভাষায় লিখিত হওয়ায়, কেবল চিকিৎসকের নয়—সাধারণ গৃহস্থের প ইহা একখানি নিত্য-ব্যবহার্য্য গ্রন্থ। নাড়ী পরীক্ষা হইতে আরম্ভ করিয়া সমস্ত রো নিদান, চিকিৎসা-প্রণালী আয়ুর্ব্বেদীয় ঔষধ, তৈল, ও ঘৃতাদি-প্রস্তুত-বিধি, এবং বিষচিকি দীর্ঘজীবন-লাভের উপায়স্বরূপ স্বাস্থ্যকারক স্থানসমূহের পূর্ণবিবরণ, রোগীর পরিচ দ্বিতীয়খণ্ড মহর্ষিদের গৌরব স্বরূপ—সুশ্রুত-সংহিতা এই সংস্করণে সন্নিবেশিত হইয় মূল্য ২॥০ টাকা। ডাকমাশুল ও প্যাকিং ৸৹ আট আনা।

**কবিরাজ নগেন্দ্রনাথ সেন এণ্ড কোং, লিমিটেড্।**

১৮।১ ও ১৯ নং লোয়ার চিৎপুর রোড, কলিকাতা।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रविः।
भावांशोकैर्मनःपद्मं प्रकाशयतु धीमताम्॥

१८४५ शकीय-श्रावणी, ६ष्ठ वर्षसत्र-४र्थं संख्या


## राधिकाविरहः।

(पूर्वतोऽनुवृत्तः)

लेखकः—योगीन्द्रनाथविद्याचुञ्चुः।

कृष्णप्राप्तिर्मरणमिति यन्मानवैरुच्यतेऽत्र
तन्नैवैतन्मम बहुमतं गौरवार्थं न सा स्यात्!
सायुज्यं यत् कथयति सुधीर्मुक्तिभेदं हि शास्त्रे
तेनैवाहं न भवितुमलं युज्यमाना स्वता किम्॥ ३३
मदीयात्मा मुक्तो यदि भवति युक्तो हरिपदे
ततः किन्नो लब्धं, जगति परमस्मात् किमधिकम्।
अरण्यं संसेव्यं मुनिभिरधिगन्तुं यदनघं
पदाब्जं सेवित्वा पवनसलिलं लब्धशरदः॥ ३४
विना ज्ञानं मुक्तिर्न भवति कदाचित् खलु नृणां
व्रतैर्यज्ञैर्दानैः कठिनतपसा पूतवपुषाम्।
अतः सा दुष्प्रापा कथमपि न लभ्या महिलया
परं त्वेका भक्तिर्यदि नयति मां शान्तिनिलयम्॥ ३५
भक्तिश्चेन्मे मुरारेश्चरणकमलयोः स्यात्तदाहं तमाले
देहस्यान्ते दिगीशैः सुरनरदनुजैश्चिन्तिते तं लभेय।
नारीजातिः प्रकृत्या विषयरससुखास्वादसंसक्तचित्ता
मूढ़ा पापप्रवृत्तिः क्वचिदपि मनसा साधुचिन्तां करोति॥ ३६

कालिन्दीसलिलं सुशीतलमये तुण्डे निधेहि ध्रुवं
कृष्णस्पृष्टतया तदङ्गरुचिरश्यामं पवित्रं तथा ।
कण्ठाधः कलिते मृतापि सुभगे जीवामि तस्मिन् क्षणं
तन्मूर्त्तिं परमां निधाय हृदये पश्येयमालि प्रियम् ॥ ३७

शीघ्रं शीघ्रं समुपनय मच्चित्रितां तस्य मूर्त्तिं
वर्षाश्योदासितरुचिधरां बर्हिपिच्छेन्द्रचापां ।
पीतक्षौमावृतकटितटां वेणुहस्तां त्रिभङ्गां
दृष्ट्वा चैनां नयनयुगलं मुद्रितं संविधास्ये ॥ ३८

पद्मासने हृदि निधाय विचित्रकान्ति-
मारण्यमाल्यपरिशोभितकण्ठदेशम् ।
इन्दीवरद्युतिजुषा नयनद्वयेन
कान्तं विलोक्य भवितास्मि विलुप्ततापा ॥ ३९

श्रूयतां सखि ममान्तिमवाक्यं सारिकां कनकपिञ्जरबद्धाम् ।
मुञ्च यातु गहनं हरिनाम्ना कुर्व्वती घनपथं सुधयाक्तम् ॥ ४०

आस्ते च हेतुरपरः सखि सा विहङ्गी
वन्यप्रदेशमुपगम्य पतङ्गजुष्टम् ।
दीक्षां ददातु महता हरिमन्त्रकेण
स्वात्मीयबन्धुनिवहाय तथातिशुद्धा ॥ ४१

प्रियसखि पश्यसि किमिदं जातं लक्षय शमनं सविधायातम् ।
परभृतकूजितमशनैः पातो जीवनमरुणो जलधिं यातः ॥ ४२

मलयसमीरणभुजगश्वासो दहति वपुर्मम न च मे नाशः ।
अन्तिमकृत्यं सखि मम कार्य्यं कुरु तत् सज्जितमिन्धनमार्य्यम् ॥ ४३

मा हर चन्दनमपि च रसालमुपनय सत्वरमिष्टतमालम् ।
पश्यतु भुवनं हरिमतिमरणमङ्कय हृदि मे श्रीहरिचरणम् ॥ ४४

गाय च गुणगणमतिपृथुकण्ठमानय लघु लघु तमिह सुकान्तम् ।
श्रवसि विशतु मम नवमधुधारा यान्तु विलयमिह विरहविकाराः ॥ ४५

वद कृष्णकथामुपकर्णबिलं ललिते त्वरितं लिख मे हृदये ।
सुरशैवलिनीतटमृत्तिकया हरिनाम परं भवसिन्धुतरम् ॥ ४६

गतजीवमिदं सखि भूतमयं दह मा दहनैरिति मे विनतिः ।
सह कृष्णशिलाशकलेन गुणैर्विनियम्य जहीहि गभीरजले ॥ ४७

अथ सखी समदुःखसुखा तदा विसृजती नयनाम्बुततिं शुचा ।
अशिशिरायतनिश्वसितैः शनैरकथयद् विरहाधिगतामिमाम् ॥ ४८

सखि मृतावपि ते हृदयं यदि स्मृतिपथाच्चलितं न भवेत्तदा ।
निरवधिर्विरहानलयातना वरमिहास्ति समागमकल्पना ॥ ४९

अपरतश्च सखि स्मरणेऽपि हरे रनुभविष्यसि चेतसि निर्वृतताम् ।
जगदिदं वितथं विफलं मनुजाः चणिकभोगकृते दधतीह तनुम् ॥ ५०

मृत्युस्तवैव करयोर्नहि चापरेषां
कुर्य्या यदैव मनसा भवितासि सिद्धा ।
तत् तिष्ठ धीरहृदया चणमत्र याव-
न्निभर्तृस्य तं पुनरिहैव समागता स्याम् ॥ ५१

मा गच्छेस्त्वं प्रणयविमुखं धूर्त्तराजं कठोरं
काचित् तस्मिन् नहि सदयता प्रेमसारल्यमालि ।
किं नः प्रेम्णां किमु न गुरुता सारवत्तापि काचित्
यस्त्वं भूयः प्रणतिसहितां धारयस्येव याच्ञाम् ॥

यत्नान्तरं प्रियसखि त्यज मत्प्रियार्थं
यद् यत् दिशामि कुरु तत् परिमृज्य वाष्पम् ।
तत् चम्यतां यदवदं भवतीं प्रमादात्
प्राग् बाल्यसौख्यमनुचिन्त्य जगाद राधा ॥ ५३

अन्त्येष्टिकृत्यमयि मे विधिवद् यथोक्तं
निर्व्वाह्य यूयमिह तत्सविधं व्रजेत !
शृण्वन् स मे गतिमिमां करुणाम्बुपातं
कुर्य्यान्नवा, निजदृशा परिलोकितास्य ॥ ५४

मोघां नाड़ीं द्रुततरगतिं स्पन्दनञ्चातिमात्रं
दृष्ट्वाप्येवं वचसि जड़तां मृत्युचिह्नं यदन्यत्।
आलीभिर्मे हरिहरिकथां कुर्व्वतीभिः शरीरं
स्कन्धे कृत्वा जनपदपथे कीर्त्यतां कीर्त्तनायम्॥ ५५
सौगन्धाढ्यैः कुसुमपटलैर्दामभिः पीतवस्त्रै
र्लाक्षारागैर्मलयजरसैरञ्चितां भूषिताञ्च।
एतां मूर्त्तिं तपनदुहितुर्वारिभिः स्नापयित्वा
तीरे गर्भे तमसि गहने रक्ष वाले तमाले॥ ५६

राधिकोक्तिमपहायैव कार्य्यज्ञा सा सखी कृष्णसकाशमागम्य तमेवमुक्तवती

अन्त्यां दशामुपगता सुचिरं प्रिया ते
नाथ त्वया न विदितं म्रियते त्वदर्थम्।
अद्यापि जीवति न वा श्वसती च नासौ
त्वं निर्व्विकारहृदयः स्वपिषीति वाच्यः॥ ५७
यद्दर्शितं तु भवता भुवनेऽत्र नाथ
लोकोत्तरं निरुपमं भविता न तादृक्।
भूतञ्च विस्मयकरं तव कार्य्यजातम्
किं वर्ण्यते नहि तु ते गुण एक एव॥ ५८
अन्त्यं यदीच्छसि विलोकनमम्बुजाक्ष्या
स्वच्छोन्मेहि निभृतं नवकुञ्जमध्यं।
द्रष्टासि तां कमलिनीं कृदशोषशीर्णाम्
अम्भोजिनीमिव सितेन्दुकलां द्वितीयाम्॥ ५९
शेषावस्थां प्रणयिविरहात् प्रापितायान्तु तस्याम्
आहूयालीर्मलिनवदनाः शोकसिन्धौ निमग्नाः।
यद् यत् कृत्यं मरणसमये तत्त्वतस्तद् वदन्त्यां
नारीरूपं व्रजपतिरसौ धारयन्नाजगाम॥ ६०

एवं दृष्ट्वावस्थां मृदुमधुरवाचा गुणनिधि-
रपृच्छत् पार्श्वस्थाः स च कपटनारीतनुधरः।
सखी कस्मादेषा सपदि जलहीनेव नलिनी
परीतापं धत्ते जनयति च दुःखं व्रजभुवाम्॥ ६१
यस्मान्नक्तं सरसि नलिनी क्लिश्यमाना विशुष्का
चाक्रीयं यन्नु कुमुदिनी खिन्नचित्ताऽप्रसन्ना।
सख्यास्त्वीदृग् भवति हि दशा हेतुना तादृशेन
नो जानीमः क इह भुवने त्रातुमस्याः समर्थः॥ ६२
दिवारात्रं कोष्णं श्वसिति सरला दीर्घमायाति खेदं
धरित्रीं बाष्पौघैः सृजति सरसां वीतनिद्रा रजन्याम्।
प्रलापो[illegible]विक्लतिश्रान्तकाक्लिष्टजीवा
तदेत्थं [illegible]र्वचनचतुरा राधिकाया वयस्याः॥ ६३
वृद्धं वियो[illegible] हृदयेश्वरस्य
सम्पीड्यते कमलिनी मृदुलस्वभावा।
सम्पृच्छ्यते स कतमो हृदयन्तु योऽसौ
हृत्वा ययौ सुचिरमेवमसाववादीत्॥ ६४
काचित् सखीनामवदद् यथार्थं को वा समर्थस्त्वधिकर्त्तुमेनाम्।
विना श्रियः श्रीपतिना हृदब्जमर्कं तरो नो नलिनीप्रियः स्यात्॥ ६५
गोपेश्वरस्य विरहाद् हृदयेश्वरस्य
कष्टां दशामुपगतैव सखी मदीया।
अद्यैव वागमिदिने भविता सखीयं
लुप्ता चिराय विषमामयदाहदुःस्था॥ ६६
ततः प्रकुर्व्वन् परिवर्त्तितं मुखं छलाबलारूपधरः स माधवः।
निशम्य राधाप्रणयन्तु ताः सखीरुवाच वैमत्यविरुद्धभाषया॥ ६७
हा धिक् कष्टं हतमतिरहं शृण्वती वो वचांसि
साक्षात् पद्मा कनकनलिनीभूतलस्थाचिराभा।

सेयं राधा जलदसदृशश्यामलं निर्गुणं तत्
नन्दापत्यं हृदयदयितं कान्तमिच्छत्यबाधम् ॥ ६८

चौर्य्यं क्रौर्य्यं करुणरहितं निन्द्यकर्म्मप्रसक्ति
हिंसावृत्तिः परगृहरतिर्धर्म्महीनप्रवृत्तिः ।
नो गाम्भीर्य्यं प्रणयिसुलभं सौकुमार्य्यं च धैर्य्यम्
एवम्भूते गुणवति जने तावकं प्रेमजातम् ॥ ६९

श्रुत्वा निन्दां विगतविरहव्याधितापा क्षणं सा
प्रोत्तिष्ठन्ती विकृतनयनज्योतिरेनां जगाद ।
का त्वं वामे वसतिरधुना कुत्र ते का च जातिः
कस्ते भर्त्ता किमिति विधवानूढ़ताद्यापि वा ते ॥ ७०

अहं ममैव सर्व्वेषां दा नो वासस्य निर्णयः ।
कौलीन्यं नहि मे जातिः स्वातन्त्र्यं सर्व्वचारिता ॥ ७१

त्रिषु स्थानेषु मे सत्तानूढ़यापि समुच्यते ।
न मे कर्त्ता न मे भर्त्ता मय्येव भर्त्तृ-कर्त्तृता ॥ ७२

एवं वाक्कौशलैः कृष्णो धृतनारीतनुस्तदा ।
स्वारूप्यं कथयामास राधिकां प्राणवल्लभाम् ॥ ७३

एवमुक्तवति गोपवल्लभे साधुशीलहृदया व्रजेश्वरी ।
तत्त्वतोऽवगतकृष्णभारतीसंवृतात्मरसना जगाद ताम् ॥ ७४

यदुयस्तूक्तं हरिविषयकं श्यामलत्वञ्च चौर्य्यं
वृत्तिर्जातिर्गुणविरहिता शाठ्यलाम्पट्यधार्ष्ट्यम् ।
तत्तत् सर्वं भवतु सततं विद्यमानं हि तस्मिन्
तत्राप्यस्मिन् जगति स हि मे जीवनं प्राणकान्तः ॥ ७५

कृष्णः सम्यक् किमिति चपले ज्ञायते किं स्वरूपं
तत्स्वारूप्यं तदितर इहाख्यातुमीशो न चास्ते ।

इत्युक्त्वा साभवदतितरां मानसिन्धौ निमग्ना

तूष्णीम्भूता वनतवदना जानती गुरुभारम् ॥ ७६

इति श्रीयोगीन्द्रनाथविद्याचुञ्चुकृतं षट्सप्ततिश्लोकात्मकं राधिका-विरहाख्यं काव्यं सम्पूर्णम्। प्रकाशितञ्च श्रीहरिपदभारतीशर्म्मणा।

पत्रम्

संस्कृतसाहित्यपरिषत्पत्रिकासम्पादकमहोदय !

यथाविहितसम्मानप्रदर्शनपूर्व्वकमिदमधः प्रस्तूयते मया सादर-मवधारयन्तु भवन्तः—

भट्टपल्लयां वाशिष्ठे वंशे सुकवियोगीन्द्रनाथविद्याचुञ्चुरजायत। स च काव्यव्याकरणालंकारादिषु समधिकव्युत्पन्नोऽपि गार्हस्थ्यसुलभ-प्रत्यवायहेतोरध्यापनाकार्य्ये विरत आसीत्। किन्त्वनर्घ्यमिमं कालं स कदापि वृथा न निनाय। यथावकाशं काव्यरचनायां स्वजीवन-मुत्ससर्ज्ज। तत्फलमिव हि 'नवरत्न' नाम काव्यं, यत्प्रकाशनाय एष मेऽद्य महान् यत्नो भवत्सम्पादितपत्रिकायाम् ब्राह्मणोचितसहज-दारिद्र्यादमुद्रितस्य तस्य काव्यस्य विद्योदयाभिधमासिकपत्रिकायाम् अंशविशेषः प्राक् प्रकाशितश्च।

एवमतीते काले कालेनाह्वानमागतं तत्कवेः। ममापि च तत्-समकालमेवाकारणं कृतं मुमूर्षुणा तेन विद्याचुञ्चुना। समर्प्य च मद्धस्ते तत्काव्यमेवमेवमुक्तं यदिदं मे कृतिर्नवरत्नं त्वया सर्व्वथा सयत्नं रक्षणीयं प्रकाशयितव्यञ्च कस्यांचित् संस्कृतपत्रिकायां। पुस्तक-मेतज्जानीहि ममाजीवनश्रमप्रसूतमिति।

साम्प्रतं तस्यैव स्वर्गगतमहात्मनः पितृव्यस्य तत्काव्यं प्रकाशयितुं व्याकुलीभूय भवदन्तिकमद्योपस्थितोऽस्मि। मय्यपि तस्मिन् कवौ सानुकम्पः प्रकाश्य काव्यं नवरत्नं भवत्परिचालितपत्रिकायां क्रमशो मामनृणीकरोतु भवान् पितृव्यसकाशादिति।

श्रीहरिपदभारतीशर्म्मणा।

# जीवात्मा विभुः परिच्छिन्नो वा ?

लेखकः—श्रीवेदानन्दतीर्थ ।

आत्मास्तित्वे प्रायः सर्व एवास्तिकनास्तिकदर्शनकारा ऐकमत्यमातिष्ठन्ते, इत्यत्र नास्ति कश्चिदपि वचनावकाशः। एतदन्यद् यत् कश्चिद् क्षणिक इति, अन्यश्च नित्य इति अभ्युपैति। कश्चित्तं विभुमाचष्टे, अपरस्तु परिच्छिन्नमेव तं पर्य्येति। स्वस्वमतोपोद्वलकानि वचनानि सर्वैरुपस्थाप्यन्ते, किं तत्र तत्त्वमिति जिज्ञासमानः कृतव्युत्पत्तिरपि सन्देहमापद्यते, का कथा वराकस्याकृतशास्त्रपरिशीलनस्य। अथ न वयं तत्तद्दर्शनमतानुयायिनस्य तानि खण्डयितुं मण्डयितुं वोद्युक्ताः। वयं तु वेदैकशरणाः, भगवतो मनोः "धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः" (मनु २अ०) इति आदेशं शिरसा धृत्वा अत्र विषयेऽपि भगवन्तं वेदमेव शरणं व्रजामः। तत्र भगवत्यथर्ववेद आम्नातमस्ति—

अव्यचसश्च व्यचसश्च बिलं विष्यामि मायया
ताभ्यामुद्धृत्य वेदमथ कर्म्माणि कृण्महे।

अथर्व० का० १९।सू०६८।म०१।

अत्र सायणभाष्यम्—(अव्यचसः) अव्याप्तस्य परिच्छिन्नस्य जीवात्मनः (व्यचसः) व्याप्तस्य परमात्मनः (च) (बिलम्) उपलब्धिस्थानम् हृदयम् (मायया) अज्ञानेन (विष्यामि) विमुक्तं विरहितं करोमि। हृदये अज्ञानावृते कर्तव्याकर्तव्यविभागो न भवति। अतः कार्याकार्यविभागैकपरिपन्थिनं मूढभावमपसारयामीत्यर्थः। (ताभ्याम्) जीवपरमात्मभ्याम् (वेदम्) चिकीर्षितकर्मविषयज्ञानम् (उद्धृत्य) सम्पाद्य, (अथ) अनन्तरम् (कर्म्माणि) नित्यनैमित्तिककाम्यानि (कृण्महे) कुर्महे

चिकीर्षितकर्मणः स्वरूपं तत्साधनकलापं तदङ्गकलापं तत्फलं तत्-कर्मप्रतिपादकमन्त्रब्राह्मणयोरर्थं च विदित्वा कर्मारब्धव्यम् इत्युक्तं भवति।

अत्र स्पष्टमेव श्रीमता सायणेन—अव्यचसः इति व्याकुर्वता "परिच्छिन्नस्य जीवात्मनः" इत्यभिहितम्। यद्यपि कस्यचिदर्थस्य निर्धारणे एकमपि वेदवाक्यमलं, तथापि विद्वद्वर्गविचारणाय अन्यदपि-प्रमाणं पुरस्करोमि। तथाहि

बालादेकमणीयस्कमुतैकं नेव दृश्यते
ततः परीष्वजीयसी देवता सा मम प्रिया।

अथर्व १०का ८सू २५म।

अस्य मन्त्रस्य सायणभाष्यं नोपलभ्यते (शङ्करपांडुरंगपण्डित-सम्पादिते सभाष्येऽथर्ववेदग्रन्थे यदत्र भाष्यं नास्तीति सुधियस्तदव-लोकनेनैव ज्ञातुमर्हन्ति)। अतः तन्मन्त्रदेवतानुसारेण (देवता-शब्देनात्र मन्त्रप्रतिपाद्योऽर्थो गृह्यते, यथाचाह तत्रभवान् श्रीमान् सायणाचार्यः तैत्तिरीयसंहिताभाष्योपोद्घाते "मन्त्रपदव्याख्यानादेव तत्-प्रतिपाद्यार्थरूपा देवता विज्ञायते" ? इति) अस्य व्याख्यानं कर्तव्यम्। अथर्ववेदीयबृहत्सर्वानुक्रमण्यामस्य मन्त्रस्य अध्यात्मदेवताकत्व-मभिहितम् (तथाहि श्रीराजगोपालशास्त्रिसंपादिताथर्ववेदीय-बृहत्-सर्वानुक्रमण्यां १११तमं पृष्ठमवलोक्यम्)। तथाच पूर्वार्द्धस्यायमर्थः संपद्यते—(बालात्) क्लेशात् (एकम्) जीवात्मा (अणीयस्कम्) अणुतरः (उत) अपि (एकम्) परमात्मा (न) न (इव) एव (दृश्यते) बहिरिन्द्रिया-दिभिर्न विलोक्यते। अस्यैव संवादि वचनं श्वेताश्वतरोपनिषद्यपि अस्ति। यथा—

"बालाग्रशतभागस्य शतधाकल्पितस्य च।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते॥" इति—

प्रकारान्तरेण इदमुपनिषद्वाक्यं पूर्वोद्धृतस्य बालादेकमिति संहिता-

मन्त्रस्य व्याख्यानमेव प्रतिभासि। एभ्यः मन्त्रोपनिषत्प्रमाणेभ्यस्तु जीवात्मनः परिच्छिन्नत्वमेव निष्पन्नं भवति। दिवं गतैः महामहोपाध्यायराखालदासन्यायरत्नमहाशयैरपि जीवस्याणुत्वमेव प्रत्यपादि इति शम्।

---

# लीला।

लेखकः—श्रीभवभूतिविद्यारत्नः।

नगरं गत्वा यद्यप्यादौ तत्रत्यचित्ताकर्षकदृश्यावलीदर्शनेन विच्छेदविधुरमिकलजीवनं कथमपि समाश्वासयम्, तथापि पुनः पुनस्तदवलोकनकातरोऽन्योन्यविकर्षकमात्मचिन्ताबहुलं नागरजीवनं क्रमेण समभ्यस्तोदारग्राम्यजीवितस्यात्मनः सर्व्वथा-प्रीतिकरं मन्यमान आशैशवादध्ययनानुरागितया समधिककालं पाठकर्मण्येव चित्तं न्यवेशयम्। अध्यापका ममैतादृशीं पाठानुरक्तिमवलोक्य सर्व्व एव मयि नितरामस्निह्यन्। तथापि वर्षागमनप्रतीक्षकचातक इव भवनगमनावसरप्रदायिनं ग्रीष्मावकाशं सौत्सुक्यमपेक्षमाणः कालेनाप्रवं स्वकरगतं तदवकाशसम्भोगभोग्यं, यदा खलु चिरपोषितमातुलपदलीलावदनकमलदिदृक्षां सम्पूरयितुकामः परमव्यग्रतयैवालयाभिमुखमागच्छम्।

गृहं प्रत्यावृत्य बहुकालात् परं मातुलपादयोस्तं स्नेहमयमङ्कं नगरप्रवासकृतविच्छेदेनाभिनवीकृतमधिगम्य परमतृप्तिमुपागतोऽपि द्वित्रदिवसेष्वतीतेषु चिरवाञ्छितं लीलादर्शनमनवाप्य किमपि तस्या अत्याहितं भवेदिति सञ्जातशङ्को रहसि व्यथितहृदयो मातुलानीं तत्कथामपृच्छम्। ईषद्भ्रूकुटीपूर्व्वकं मातुलान्यवादीत् "किमेव ते प्रयोजनं लीलाविषयेणे"ति। चिरादेव लीलया सह सम्मिलन-

पक्षपातिन्या मातुलान्यास्तत्कथाप्रसङ्गे नैवमश्रुतपूर्व्वं भ्रूकुट्यारचनमवलोक्याहं तदवाप्तिविषयकं किमपि दुर्निमित्तमाशङ्कमानस्तत्परं संशयाकुलचित्तो न पुनस्तद्विषयोत्थापनं समीचीनममन्ये लीलया सार्द्धन्तु यथा रहसि साक्षात्कारो भवेत्तथा केवलमयते।

चत्वारो दिवसा मृषैव गताः। एवमतिसूक्ष्मदृष्ट्या लीलादर्शनावसरं प्रतीक्षमाणस्य, यदा हि पञ्चमदिवसे मध्याह्ने वातायनरन्ध्रपथेनैकाकिनीं लीलां कतिपयप्रक्षाल्यवस्त्रसमेतां सरोऽभिमुखं गच्छन्तीमवलोक्यायमेव लीलादर्शनस्योत्कृष्टः खल्ववसर इति विचिन्तयन्नतिधीरपदं तामन्वसरम्। "लीले, लीले, मम हृदयासनाधिष्ठातृदेवते! कथं नालोकयसि निर्दये चिराद् गृहसमायातं तव सुशीलकुमारम्। प्रायेण सप्ताहः समतीतो गृहागतस्य मे तव दर्शनव्याजमन्विष्यतः, कथमयि न दत्तं सकृदपि दर्शनम्? किं विस्मृतस्त्वया चिरायैष हतभाग्यः शैशवसखः? किं निःशेषं विलोपितं त्वदीयं मयि तत् क्रतुत्थं प्रेम मम नगरवासजनितेनादर्शनेने"ति सावेगमभिहिता सा प्रोन्मत्तेनेव मया, किमपि न कथयन्ती केवलं मदभिमुखं वदनकमलं परावर्त्त्याविरलाश्रुवर्षैरवनीतलमवाकिरत्। "कथं लीले, मुञ्चसि नयनासारान् अविरलधारान् सममेव परिप्लावयती भूतलं मम हृदयतलञ्च? किमप्यत्याहितं किमु घटितमावयोः सुखमिलनान्तरायभूत"मिति साकूतं पूर्व्वत एव मातुलानीव्यवहारात् संशयाकुलचित्तेन मया पुनः पुनः पृष्टा साब्रोचत्—"समुन्मूलय सखे हृदयक्षेत्रात् तच्चिरवाञ्छितं मिलनवासनाबीजम्। आवयोरेतत् सुखमिलनं तव मातुलान्या मम जनन्याश्चाभिमतमपि न खल्विष्यते अज्ञातकुलशीलजनस्य दुहित्रा मया सह तव परिणयमनभिलषता ते मातुलपादेन, अकुलीनस्य तनयेन त्वया सह मम चोद्वाहमनिच्छता कौलिन्याभिमानवता मे जनकपादेन। आर्य्यौ ते कथं वा स्वस्वामिनोः प्रभवेताम्? वारेऽस्मिन् महानगरीतो गृहं समायातेन त्वया यत्

मद्दर्शनं न लब्धं, जानीहि तदावयोर्मिलनविघ्नभूतयोरार्य्यपादयोरेव निदारुणमस्मत्परिणयप्रतिषेधप्रयासम्। ताभ्यामन्योन्यं परामृश्यैतन्निर्द्धारितं यदुभयोः परिणयो यदा कदापि न सम्भविष्यति, तदैतस्मिन् तरुणे वयसि परस्परसहवासेन यदि तत् समाकर्षणं क्रमेणाच्छेद्यं भवेत्, तदितः प्रभृति तीक्ष्णदृष्टिः खलु पातयितव्या उभयोर्मिलनमार्गे" इति। तव मातुलानी मम जननी च ताभ्यामेवं सनिर्बन्धं प्रत्यादिष्टे सदैव सतर्के वर्त्तेते आवयोर्मिलनपथमवरोद्धुम्। मा वर्त्तिष्ठाश्चिरं त्वं सविधे मे, यत आर्य्यजनैरेतन्नाभिप्रेतं, दैवजनेनापि वाञ्छितम्! गच्छ सखे! स्वगेहं, परिहर च मत्परिग्रहाभिलाषं यथाबाल्यात् त्वया समर्पिता मे स्नेहदृष्टिः, मदनुरोधात् मदर्थं नैव कर्त्तव्यः कदाचिन्मातुलजनविरोधः। नियतहितरतैः पूज्यजनैर्हि यद् विवेचितं तत् खल्वाज्ञानयोरावयोर्बुद्धेरगोचरोऽपि स्यात्।"

इत्युक्त्वा सा वाष्पभाराक्रान्तनयना नतवदनावतस्थे। मयापि विचूर्णितचिरसंपोषिताशेनाश्रुसिक्तवदनेन—"लीले, लीले, मम हृदयानन्दप्रियसखि, यदि त्वं न भवेर्मदीया कथमेतद्धारयामि शून्यजीवितम्! हा हन्त! एतावद्दारुणमेव लिखितमावयोरदृष्टं विधिहतकेन! कथं वा तेन कारितमेतन्मिलनं, कथं वा समानीत एष विच्छेदः? अहह! न हि शक्नोमि सोढुमेतद्धृदयमर्म्मच्छेदिकां वेदनाम्। वद लीले किं चिरायैवापसारयिष्यते तव हृदयासनाज्जनोऽयमथवा शैशवप्रणयकथां विचिन्त्य किं सादरं स तव रक्षणीय" इति सोद्वेगोच्छ्वासमभिहिता सा "न हि कदाप्यपसारणीयस्त्वं मम दुर्भगहृदयादि"ति स्वल्पवचनमात्रं कथयित्वा पुनरविरलगलन्नयननीरप्रवाहैरभिषिक्तकपोला सञ्जाता। ततो "विलम्बे कृते चेत् जननी मामन्विष्यन्ती स्वयमेवात्रागच्छेत्, तत् क्षमस्व सखे हतभाग्यामेनां अनिच्छयापि ते सुखसङ्गं परिहर्त्तुमुद्यताम्"—इत्येतन्मात्रं कातरकातरमुक्त्वा वात्याहतकोमललतिकेव भग्नहृदया सा स्ववदनपरावर्त्तनेन मुहुर्मामव-

लोकयन्ती धोरचरणं भवनाभिमुखं गता। अहमपि कृत्स्नं विश्वं निरवलम्बमिव पश्यन् कोमलमर्म्मान् भिन्नं कठोरसमाज मनस्यसकृद् धिक् कुर्व्वन् परम-निर्व्वेदेन दोलितमस्तकः कम्पितशरीरः शिथिलित-चरणस्तत्स्थानात्तदैवापासरम् ।

गृहे प्रत्यावृत्तो दुश्चिन्तामग्नस्तां रजनीं कथमपि यापयित्वात्र-लीलाविरहितजीवनं न पुनराकाङ्क्षन् प्रातर्मातुलपादमुपगम्या-ब्रवम्—"तात, अत्र पञ्चकालस्थितोऽहं परिपूर्णगृहागमनकामन इदानीं नगरं प्रतिगन्तुमिच्छामि। यतस्तत्र सहपाठिसमेतस्य मे यः खलु सुमहान् पाठावसरो वर्त्तते, अत्रैकाकिनो न हि स सम्भवति। तत् समादिशतु मां नगरगमनाये"ति। मातुलोऽपि पाठानुरागिणो मम वचनस्य समीचीनत्वमवगम्य बहुदिवसेभ्यः परं प्राप्तं मामितावत् सत्वरं परित्यक्तुं मनसा सस्यगनभिलषन्नपि केवलं मत्कल्याणेच्छु-रश्रौषीत् मम नगरगमनप्रस्तावम्। मातुलानी च प्रस्तावमेतं समाकर्ण्य विविधकातरवचनैर्मां नगरगमनाद् विरमयितुं यतमानापि मातुलपादेनात्रावस्थितौ मम पाठप्रत्यूहं प्रबोधिता कष्टेन मां व्यसर्ज्जयत् ।

(क्रमशः)

---

## जातिबाधकविचारः ।

(पूर्वतोऽनुवृत्तः)

लेखकः—श्रीकालीपदतर्काचार्य्यः ।

अथाव्यापकत्वस्य द्वितीयः कल्पो विविच्यते। स च स्वसमानाधि-करणभेदप्रतियोगितावच्छेदकत्वरूपः। तत्र स्वसामानाधिकरण्यघटकी-भूतं स्वाधिकरणत्वं समवायेनैव विवक्षणीयम्, अन्यथा पूर्व्वकल्पवत्

दोषापत्तेः, भेदे तन्निरूपितं वृत्तित्वमपि विशेषणताविशेषसम्बन्धेन तद्दोषवारणार्थमेव निवेशनीयम् ।

अत्र भेदपदं प्रतियोगितायां भेदत्वनिरूपितप्रतियोगितालाभाय, तेन अभावाधिकरणकाभावस्य अधिकरणस्वरूपत्वमते घटादिवृत्ति-पटादिभेदानां पृथिवीत्ववत्प्रतियोगिकाभावाधिकरणीभूतानां पटादि-भेदस्वरूपतया तन्निरूपितप्रतियोगितायाः पृथिवीत्ववन्निष्ठाया अवच्छेदकत्वस्य पृथिवीत्वे सत्त्वेन अव्यापकत्वदलनिवेशेऽपि न व्यभिचार-तादवस्थ्यम् । अथ तथापि घटादिवृत्तिपटादिभेदानां पृथिवीत्वादि-मद्भेदस्वरूपत्वस्यापि निरुक्तयुक्त्या सिद्धेः "लशुनसेवनादपि न शान्तो व्याधि"रिति न्यायकटाक्षपातो दुरतिक्रमः, इति चेन्न स्वसमानाधिकरण-भेदप्रतियोगितेत्यस्य स्वाधिकरणनिरूपितवृत्तितावच्छेदकभेदत्व-निरूपितप्रतियोगितेत्यर्थलाभात् । तथाहि-पृथिवीत्ववन्निष्ठा या प्रति-योगिता तस्याः पृथिवीत्ववद्भेदत्वरूपविशिष्टानुयोगितानिरूपितत्वस्य अनुभवादिसिद्धतया घटादिवृत्तितानवच्छेदकत्वेन पृथिवीत्वादौ न तादृशप्रतियोगितावच्छेदकत्वम्, घटादिवृत्तितावच्छेदकपटादिभेदत्व-रूपानुयोगितानिरूपितपटादिनिष्ठप्रतियोगिताया अवच्छेदकत्वस्य पटत्वादावेव सत्त्वात्, नच पृथिवीत्ववद्भेदप्रतियोगितायाः पृथिवीत्वा-वच्छिन्नायाः पटभेदप्रतियोगितायाश्च पटत्वावच्छिन्नाया भेदत्वमात्र एव निरूपकत्वसत्त्वेन भेदत्वस्य घटवृत्तितावच्छेदकत्वात् निरुक्तनिवेशि-कृतेऽपि न तद्दोषपरीहार इति वाच्यं, भेदनिरूपितप्रतियोगितामात्रस्यैव भेदत्वनिरूपितत्वस्येव विशिष्टभेदत्वनिरूपितत्वस्यापि घटभेदप्रति-योगिता घटभेदत्वावच्छिन्ननिरूपिता इत्यादि सर्वजनीनानुभवेन विषयीकरणात् पृथिवीत्ववद्भेदप्रतियोगिताया भेदत्वमात्रे एव पृथिवी-त्वावच्छिन्नप्रतियोगिताकभेदत्वेनापि निरूपितत्वस्य सुतरामभ्युपगमात् । अव्यापकत्वघटकप्रतियोगितायां स्वाधिकरणनिरूपितवृत्तितानवच्छेद-कानुयोगित्वानिरूपितत्वस्य निवेशेन तद्वारणात् । तथाहि पृथिवीत्व-

वद्भेदस्य घटवृत्तिपटादिभेदस्वरूपत्वमतेऽपि घटवृत्तितानवच्छेदकत्वस्य पृथिवीत्ववद्भेदत्वे सत्त्वेन पृथिवीत्वनिष्ठायाः पृथिवीत्वनिष्ठावच्छेदकतानिरूपिकायाः प्रतियोगितायाः पृथिवीत्ववद्भेदत्वेनापि निरूपितत्वात् पटादिभेदस्य च पटादिभेदत्वेनैव रूपेण घटादिवृत्तितया घटवृत्तितानवच्छेदकानुयोगित्वानिरूपितत्वासम्भवात् न क्षतिः ।

अथ प्रतियोगितावच्छेदकत्वं सम्बन्धसामान्येन वा किञ्चित्सम्बन्धेन वा सम्बन्धविशेषेण वा निवेशनीयम् ? तत्र नाद्यः, सम्बन्धसामान्येन भेदप्रतियोगिताया एवासिद्धेः, संयोगरूपोभयादिसम्बन्धेन कुत्रापि कस्यचिदसत्त्वेन तद्विघटनात् । यदि येन केनचिदेकेन सम्बन्धेन तत्, तथापि घटत्वाद्यधिकरणे विषयित्वादिसम्बन्धेन पृथिवीत्ववतो भेदस्य स्वरूपेणैव वर्त्तमानतया पृथिवीत्वे घटादिवृत्तिभेदप्रतियोगितावच्छेदकत्वस्य अक्षतत्वेन व्यभिचारो दुर्निवारः । अन्त्ये कतमेन सम्बन्धविशेषेण तद्वक्तव्यम् ? यदि समवायसम्बन्धेन तदा शरीरत्वोपिचात्वादौ पृथिवीत्वचाक्षुषत्वाद्यधिकरणवृत्तिभेदप्रतियोगितानिरूपितसमवायसम्बन्धावच्छिन्नावच्छेदकतायाः स्वमते असम्भवात् शरीरत्वोपिचात्वादौ साङ्कर्य्येण जातित्वबाधसाधने स्वरूपासिद्धिः । यदि च विशेषणताविशेषसम्बन्धेन तादृशावच्छेदकत्वम् अभ्युपेयते तथापि भूतत्वेन मूर्त्तत्वस्य मूर्त्तत्वेन च भूतत्वस्य सुचिरसिद्धं साङ्कर्य्यं व्याहन्येत । भूतत्वमूर्त्तत्वयोर्जातित्वानङ्गीकर्त्तृनयेऽपि प्रथमस्य वहिरिन्द्रियग्राह्यविशेषगुणरूपताया द्वितीयस्य च अवच्छिन्नपरिमाणरूपताया एव स्वीकारेण समवायसम्बन्धावच्छिन्नवृत्तितालाभात् तयोः कथमपि विशेषणताविशेषसम्बन्धावच्छिन्नभेदप्रतियोगितावच्छेदकत्वस्यासम्भवात् । परन्तु दृश्यते तत्र तत्र प्राचीनग्रन्थे भूतत्वमूर्त्तत्वयोः परस्परसाङ्कर्य्येण उभयोरेव जातित्वबाधव्यवस्था । न च वहिरिन्द्रियग्राह्यविशेषगुणवत्त्वमित्यस्य वहिरिन्द्रियग्राह्यविशेषगुणाधिकरणत्वं अवच्छिन्नपरिमाणवत्त्वमित्यस्य च अवच्छिन्नपरिमाणाधिकरणत्वम्

अर्थः, तावतैव अधिकरणत्वयोः स्वरूपेणैव वृत्तितया शक्यते निरुक्तदोषो निराकर्त्तुमिति वाच्यं व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकाभावग्रन्थे यत्समानाधिकरणाः साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकाः यावन्तोऽभावाः प्रतियोगिसमानाधिकरणास्तत्त्वमिति लक्षणे यावत्पदव्यावृत्तिप्रदर्शनावसरे "अतएव भूतत्वमूर्त्तत्वोभयवान् मूर्त्तत्वादित्यादौ द्वित्वावच्छिन्नाभावस्य प्रतियोगिसामानाधिकरण्येऽपि भूतत्वमनोऽन्यत्वाद्यभावस्य अतथात्वान्नातिप्रसङ्ग" इति शिरोमणिवचनव्याख्यानमधिकृत्य "भूतत्वमात्मभिन्नत्वे सति विशेषगुणवत्त्वं तच्च न व्यापकतायाः प्रतियोगिवैयधिकरण्याघटितत्वकल्पे भूतत्वमूर्त्तत्वोभयस्य व्यापकं तादृशोभयवति घटादावुत्पत्तिक्षणावच्छेदेन विशेषगुणत्वावच्छिन्नाभावसत्त्वादत उक्तं मनोऽन्यत्वेति" इति जगदीशग्रन्थासङ्गतिः। अव्याप्यवृत्तिपदार्थनिरूपितस्यापि अधिकरणत्वस्य व्याप्यवृत्तितया अन्यथा तत्समन्वयासम्भवाच्च। भूतत्वमूर्त्तत्वयोः गुणस्वरूपतयैव उपपत्तौ लक्षणाद्यनुरोधेन गुणाधिकरणत्वस्वरूपताकल्पनस्य सुतरामन्याय्यत्वाच्च। तदत्र समवायस्वरूपान्यतरसम्बन्धेनैव तादृशावच्छेदकता विशेष्येति। तेन शरीरत्वापेक्षात्वादौ पृथिवीत्वचाक्षुषत्वादिसङ्कीर्णधर्म्मे विशेषणताविशेषसम्बन्धेन प्रतियोगितावच्छेदकत्वमादाय मूर्त्तत्वभूतत्वादौ च सर्व्वमतसिद्धसमवायसम्बन्धावच्छिन्नवृत्तितावति समवायसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकतामादाय नानुपपत्तिशङ्कापि। पृथिवीत्वादौ च घटादिवृत्तिभेदीयप्रतियोगितानिरूपितान्यतरसम्बन्धावच्छिन्नावच्छेदकताया असत्त्वेन घटत्वादिनिरूपितसाङ्कर्य्यस्य न व्यभिचारः।

(क्रमशः)

---

# काशीप्रशस्तिः *

लेखकः—श्रीहरिहरशास्त्री ।

माङ्गल्यानि दिशन्तु वः पशुपतेर्नेत्रेन्दुकान्तिच्छटाः
प्रालेयाद्रिभुवः सरोजवदनं स्मेरं दधत्यस्थिरम् ।
यास्वेवापतितास्तु भीषणतरा संसारवारांनिधे-
र्दुःखोत्तुङ्गतरङ्गरङ्गविधयः शान्तिं भजन्तेतराम् ॥
निर्व्यापारतडिल्लतामिव घनप्रत्यग्रधाराधरो
राधां मीलितलोचनां हृदि दधन्मुग्धो हरिः पातु वः ।
श्वासं यो मृदु मुञ्चति प्रियतमावक्षःक्षमाशङ्कया
गाढं वेधभिया च जातपुलकेनाङ्गेन नालिङ्गति ॥
आध्यक्ष्येण मनीषिकाशिनृपतेः साहित्यसम्मेलनं
कल्याणाय यदद्य संस्कृतगिरां काश्यामनुष्ठीयते ।
कार्य्यं तदनु सर्व्वथा समुचितं यस्मादभूदेकदा
पूतं तीर्थमिदं समस्तविदुषां पाण्डित्यलीलागृहम् ॥
अत्रैव त्रिपुरारिराजनगरे शिष्या विजिज्ञासवः
शश्वत् प्रापुरजातशत्रुनृपतेस्तां ब्रह्मविद्यां पराम् ।
अस्मिन्नेव महर्षिणा कति कति ग्रन्थाः समुद्भाविताः
कारुण्याज्जगदुद्दिधीर्षुमनसा द्वैपायनेन स्वयं ॥
एतत् क्षेत्रसमीप एव मृगदावेत्याख्य पूतस्थले
लोके नूतन 'धर्म्मचक्र'मसृजद् बुद्धोऽपि शौद्धोदनिः ।

---

* काशीहिन्दुविश्वविद्यालये समाहूते निखिलभारतवर्षीय-संस्कृतसाहित्यसम्मेलनस्याधिवेशने पठिता, संस्कृतसाहित्यपरिषदा प्रचारिता च ।

सिद्धान्तस्य च कौमुदीमतितरां शुभ्रामिह व्यातनोत्
श्रीभट्टोजिकलानिधिर्विंशदयत्यद्यापि यैतद्दिशः ।
अत्रैवाप्ययदीक्षितेन रचितं सिद्धान्तलेशादिकं
नागेशोऽपि लिलेख 'शेखर'मुखग्रन्थान् स्वतन्त्रानिह ॥
सम्राजा शतवर्षपूर्व्वमिह यो विद्यालयः स्थापित
स्तत्र न्यायगिरश्चिराय बहुशो विद्यार्थिनोऽध्यापयन् ।
वैदुष्यं प्रकटीचकार किमपि श्रीचन्द्रनारायणो
यस्याद्यापि यशः शशाङ्ककिरणै र्देशोऽयमुल्लासितः ॥
आसीदाश्रमपुण्यभूरिह विशुद्धानन्द सन्न्यासिनो
यस्मात् शश्वदधीयते स्म विदुषामग्रेसरैः सादरम् ।
काश्मीरक्षितिरक्षिणोऽपि मुकुटालङ्काररत्नैरद्युतिः
श्वेतिम्ना च युयोज पूजिततमं यत्पादपीठं मुहुः ॥
वङ्गं शून्यमिव प्रणीय नितरां स प्रेमचन्द्रः कृती
पुण्यारण्यमिदं चकार यशसां ज्योत्स्नाभिराप्लावितम् ।
टीका यस्य च नैषधीयचरितग्रन्थादि गूढार्थकं
बालस्यापि विधाय बोधविषयं वर्त्तेत सर्व्वोपरि ॥
शास्त्रो बाल इहैव कालमनयद् बालोऽपि दिक्पालवद्
यस्य व्याकरणे समर्ज्ज विदुषां चक्रं किमप्यद्भुतम् ।
शास्त्रे ज्योतिषि बापुदेवपदभागासीच्च विद्वत्तमः
श्वेतद्वीपनिवासिनोऽपि सुधियो यद् विद्यया मोहिताः ॥
अत्रैवाद्वयवादखण्डनपरग्रन्थः समुद्भावितः
साक्षादक्षपदावतारविदुषा राखालदासेन च ।
सद्युक्त्या श्रुतिजातनूतनतमव्याख्यानमुत्पश्यतां
यत्रत्यं खलु कोऽपि विस्मयरसो जागर्त्ति विद्यावताम् ॥
कालस्तस्य सहोदरोऽपि महसा मध्याह्नभास्वानिव
श्रीताराचरणोऽत्र काशिनृपतेरासीत् सभापण्डितः ।

अद्यत्वेऽपि 'विहार'भूमिवलयो योऽयं नरैर्वीक्षितो
नूनं तत्तदतीतगौरवमयं चिह्नं च नो निह्नुते ॥
गीतोऽभूद्‌ भुवि भक्तपार्षदगणैर्यः पार्श्वनाथाख्यया
नित्यं सादरमर्हणीयचरणो यश्चार्हतानां मतेः ।
मूर्त्तिर्यस्य महार्घमन्दिरचयेष्वद्यापि विद्योतते
सोऽसौ तीर्थकरोऽश्वसेननृपतेरत्रैव लेभे जनुः ॥
एतस्यां पुरि शङ्करः स भगवान् शिष्याय शुश्रूषवे
द्वैतध्वान्तमपास्य भाष्यमदिशद्‌ वेदान्तसिद्धान्तजम् ।
चैतन्यश्च पुनः स्वशास्त्रनिपुणः सन्यासिनोऽद्वैतिनो-
निर्ज्जित्य प्रथयाम्बभूव समयं यः प्रेमभक्तिप्लुतः ॥
श्रीवाचस्पतिमिश्रनामकसुधीरत्रैव विद्यामहा-
मौठे षड्‌विधदर्शनानि नितरामव्याकुलं व्याकरोत् ।
वङ्गीयो मधुसूदनोऽपि नगरीमध्यास्य मेध्यामिमां
विश्वाणो यतिधर्म्ममाचरितवानद्वैतसिद्ध्यादिकम् ॥
"गौड़े नन्दनवासिनाम्नि सुजनैर्वन्द्ये वरेन्द्र्यां कुले
यः श्रीभट्टदिवाकरस्य तनयः कुल्लूकभट्टोऽभवत् ।
तेनाप्युत्तरवाहिजह्नुतनयातीरे समं पण्डितै
रत्रैव ग्रथिता हिताय विदुषां मन्वर्थमुक्तावली ॥"
स्थाने 'सङ्कटमोचने' स तुलसीदासोऽपि भक्ताग्रणीः
स्वेष्टं देवमतर्पयच्चिरमिह ध्यानैकतानव्रतः ।
पुण्यां रामकथां जगौ च कविताकुञ्जैकपुंस्कोकिलो
यामास्वाद्य बुधाः सुधामपि मुधा जानन्ति भूमण्डले ॥
दिल्लीनाथशहाजहानसदसः सम्मानभारं जहत्
श्री'गङ्गालहरी'स्तुतिं विरचयन् भक्त्याप्रपूर्णेक्षणः ।
अत्र स्वर्गतरङ्गिणीलहरिकालीलाभिराक्षालितः
साक्षान्मोक्षपदं जगाम स जगन्नाथः कवीनां गुरुः ॥

शास्त्रार्थे नवधर्म्मनायकदयानन्दं च यो योऽवृधत्
व्यातेने ननु दिग्वधूमुखतटे हासायदातं यशः ॥
अस्मिन्नेव शिरोमणीतिपदभाक् कैलासचन्द्रः सुधी
राज्ञः संस्कृतपाठसद्मनि बहून् विद्यार्थिनोऽध्यापयत् ।
यस्तर्कादिसमस्तशास्त्रनिवहे यातोऽपि निष्णाततां
पुष्णाति स्म कदापि लेशमपि नो गर्व्वस्य सर्व्वप्रियः ॥
जातं व्याकरणं चिराय नितरां प्रायो निरालम्वनं
वेदान्तो रत जीवनान्तमगमत् सांख्यञ्च शोच्यां दशाम् ।
मीमांसा निजमांसलत्वमजहाद् यस्मिंस्तु मोघं गते
सोऽप्याचार्यमिह स्थितः शिवकुमाराख्यः सतामग्रणीः ॥
श्रीदामोदरशास्त्रिनामकसुधीः शास्त्री च गङ्गाधरः
सुब्रह्मण्यसुधाकरौ च वसुधालङ्कारभारश्रियः ।
उड्डाखेव यशस्त्विषा दिशमिमां निर्व्वाणमासादिताः
प्राग्भैरित्थमनेकशस्त्रिरमयं देशोऽभवद् भूषितः ॥
कालेऽस्मिन्नपि मालवीयकलिना शौक्ल्यभूरिश्रमं
प्रारब्धो नगरोपकण्ठवलये यो विश्वविद्यालयः ।
तत्रापि प्रतिभाति संस्कृतगिरां प्राधान्यमन्याहतं
नेतृत्वं भुवतर्कभूषणमनीषिभ्यां गृहीतं यतः ॥

---

# इराणीयानां प्राचीनसाहित्यम् ।

लेखक:—श्रीवसन्तकुमारचट्टोपाध्याय एम, ए, ।

एकदा प्रागैतिहासिके युगे कस्मिंश्चिद्देशे वेदमन्त्राणां द्रष्टार ऋषयस्तेषां पूर्वजा वा इराणीयानाम् असुरोपासकानां पूर्वजैरेकत्र न्यवसन्निति मतमाधुनिकानां प्रत्नतत्त्वविदां भाषातत्त्वविदां च। उत्तरकाले धर्मविषयक: कश्चिद् मतभेद एव तेषां परस्परं विवादे हेतुरासीत्। कश्च स मतभेद आसीत् तदधुनाऽपि सम्यङ् न निर्द्धारितम्। आधिभौतिकानां विषयानां भोगे प्रमुदिता अभवन्निराणीया भारतीयास्तु आध्यात्मिकवादिन आसन्निति प्रत्नविदामनेकेषामेव मतम्। प्रयुक्तोऽस्ति वेदमन्त्रेषु 'असुर' शब्दो विशेषणत्वेन वरुणदेवतायाः। तत्र बलवत्त्वमेवास्य शब्दस्यार्थ:। स च शब्दोऽ'हुर' इति परिवर्तितो देवतावाची जात: इराणीयानाम्। 'बल' वाचिनोऽ'सु'-शब्दात् मत्वर्थीयस्य 'र'-कारस्य योगेन निष्पन्न एव स:। [असु + र]। परन्तूत्तरकाले विस्मृतिं गतैषा व्युत्पत्तिरस्मद्देशे। तत: शब्दस्यास्याद्यस्याकारस्य नञर्थतां परिकल्प्य देवतावाची 'सुर' शब्द: कल्पितोऽस्मद्देशे विपरीतार्थक:। परस्परं विरोधस्य हेतो: अस्माकं 'देव'-शब्दो दैत्यवाची जात इराणीभाषायाम् 'अहुर'-शब्द देवता-वाची 'दएव'-शब्दश्च दैत्यवाची।

वेदमन्त्राणां द्रष्टार इव इराणीया अपि सोम-पायिन आसन्। तेषां भाषायां सोम शब्दस्य 'हओम' इति रूपम्। असौ 'हओमो' देव इति तैरिराणीयैरर्च्यते। भारतीयेष्विव तेष्वपि चत्वारो वर्णा:,— 'आथ्रवो' (=ब्राह्मण:), 'रथएश्त्रो' (=क्षत्रिय:), 'वास्त्रो' (=कृषिव्यवसायी) 'हूइतयो' (=शूद्र:) इति। एषां आद्या: त्रय: द्विजा उपनयनसंस्कृताश्च। अस्माकं शूद्रस्येव तेषां हूइतयस्य नास्ति कोऽपि संस्कार:। इराणीयानामुपनयनमपि सप्तमादारभ्य पञ्चदशवर्ष मध्ये

अनुष्ठेयन् । एषां बालिका अपि उपनयनसंस्कारार्हाः । यज्ञसूत्रमेषां पशु-लोम-मयं 'कुश्ति' इति ख्यातं कटिदेशे धार्य्यते मेखला इव मृत्युकालपर्य्यन्तं नरैर्नारीभिश्च ।

अस्माकमिव तेषामपि धरित्री 'हप्तो-कर्षरी' (=सप्त-द्वीपा) । एषां सप्त 'कर्षराणां अवस्थानान्यपि प्रत्नतत्त्वविदां चिन्ताया विषय एव । केन्द्रभूतः सर्वेषां कर्षराणां 'ख्वनिरथः' 'हप्तथो कर्षरी' सप्तमो द्वीपो वा । कर्षरेऽस्मिन् 'हरबरेजैति' इति पर्व्वतोऽस्ति मेरुरिव । अत्रैव देशे 'ऐर्यनोवएजो' नाम प्रत्नौकसः अवस्थितिः । पूर्वस्यामस्य देशस्य 'सवही' देशः, पश्चिमस्याम् 'अरेजही' । द्वावेव देशौ प्रायश एकत्र उल्लिख्येते द्विवचनेन । 'सवही' शब्दस्यार्थः 'आलोकमयोदेशः', तथाच 'अरेजही' शब्देन तमसो देश इति बुध्यते । पूर्वस्यां सूर्य्यस्योदय इति तत्र स्थितस्य देशस्य 'आलोकमय' इति संज्ञा सुसंगता एव । परन्तु पश्चिमदेशस्य तमोमयत्वं कष्टकल्पितमेव । अथवा पूर्वजानां वासभूमिरिति पूर्वदेशस्य आलोकमयत्वं कल्पितं गौरवाधिक्यात् परिचितत्वाच्च । तथा अज्ञातपूर्वत्वाच्च जाता पश्चिमदेशस्य तमोमयत्व-कल्पना इति पूर्वदेशात् पश्चिमायामिराणीयानां पर्यटनं सूच्यते । एवां दक्षिणदेशयोर्नाम 'फ्रादत्फ्सु' (=प्रादत्-पसुः) 'वीदत्फ्सु' (=दृष्ट-पशुः) च । एतयोर्नाम्नोः पशुभूयस्त्वं सूच्यते दक्षिणदेशस्य । उत्तरस्यामप्येषां द्वौ देशौ 'वौरुवरेष्ति' इति पर्व्वतभूयस्त्वं सूचयतः । भारतीयानामार्य्याणां पर्यटनभूमिरन्त्यस्थितः रावणस्य देशइव पश्चिमस्यामेषां 'माज्ना' इति ख्याता राक्षसभूमिः ।

अस्माकं पितर इव एतेऽपि इराणीयाः कृषिव्यवसायिनः पशुपालने रताश्चासन् । एषामपि गोदेवता ('गेउश्-उर्वान्' = गोः आत्मा) पूजा-भाजनम् । पृथिवी अपि एषां 'गो' शब्देन द्योत्यते । अति यत्नतः रक्ष्यते पवित्रता एभिः पृथिवीदेवतायाः जलदेवताया अग्निदेवतायाश्च ।

यमो वैवस्वतो यमी वैवस्वती च यथा अस्माकमादिमौ नारी नरश्च

आस्ताम्, एषामपि तथैव 'यिमो विवङ्हत्' (=यमो वैवस्वतः) आदिमः पुरुष आसीत्। राजा चाप्यासीदसौ 'यिमो' जीवितकाले। मृत्योः परं तु स एव परलोकगतानामिराणीयानां राजा जातः। यमोऽपि अस्माकं प्रेतलोकस्य राजा।

एषां 'वेरेथ्रघ्नो' (=वृत्रघ्नः) 'अभि' (=अहि) नाम्नः कस्यचित् दैत्यस्य संहारेण अनावृष्टिमपाहरत्। अस्माकं विद्युद्देवताऽपांनपात् इराणीयानामपि उपास्यदेवता। वरुण-मित्र-प्रभृति बहूनाम् आर्य-देवानां पूजां विदधति भारतीया इव इराणीयाः। अग्नेरुपासना प्राधान्येनैव उल्लेख्या। अग्निप्रणेतार 'आथ्रवानो' (=अथर्वाणः) एव तेषां पुरोहिता ब्राह्मणाः। 'इन्द्रो'—'नाओङ्हइथ्यो' (=नासत्य) प्रभृतयः बहवो वैदिकदेवाः इराणीयैः दैत्यत्वे परिणताः। एतत्-सर्वमेव भारतीयैरिराणीयानां विवादस्य फलम्।

एषां शास्त्रग्रन्थाः 'आवेस्ता' इति शब्देन संज्ञिताः। वेदशब्दस्येव आवेस्ताशब्दस्यापि ज्ञानमेवार्थः, 'विद्'-धातोर्निष्पन्नः। भाषा चापि एषां ग्रन्थानाम् वेदमन्त्राणां भाषया लक्षणैर्युक्ता। निबन्धान्तरेणाऽस्या भाषाया आलोचना कार्या। अधुनातनाः पाश्चात्यपण्डिताः दुर्बोधानां वेदमन्त्राणां व्याख्यानाय आवेस्तासाहित्यस्य भाषाया उपयोगितागौरवं प्रत्यपादयन्। दुर्बोधस्य आवेस्तामन्त्रस्यापि व्याख्यानं छान्दसी-भाषायास्तुलनया क्रियते। अतो वेदाध्ययनेच्छुभिः सर्वैरेव जनै रावेस्तासाहित्यस्य आलोचना कार्या।

---

# श्रान्तः पान्थः ।

लेखकः—श्रीयोगीन्द्रनाथविद्याभूषणः ।

रात्रिर्घोरा नवजलधरो ध्वान्तराशिप्रवर्षी
विद्युद्दीप्तिर्भवति यदि वा किन्तु सा भीतिदात्री ।
लोकः सर्व्वस्तिमिरजलधौ मज्जतीव क्रमेण
श्रान्तः पान्थस्खलति सततं भीतभीतो विषण्णः ॥ १
आस्ते तस्य स्वजननिचयः किन्त्वसौ दूरवर्त्ती
पन्थास्तावत् कियदवधिकः कुत्र वा दुःखशेषः ।
तच्चिन्तेतुं मनसि विकलो लक्ष्यहीनोऽतिखिन्नः
पान्थस्तूर्णं सरति सरणौ दुर्ब्बलो जातदैन्यः ॥ २
वन्यो जन्तुः प्रतिपदमहो गर्ज्जति त्रासवर्द्धी
धावन् पान्थः चलपदयुगः कण्टकाकीर्णमार्गे ।
दूरे दृष्टि र्न चलति मनागन्धकारः सुतीव्रः
सर्व्वा चेष्टा भवति विफला यत्र दैवं विरुद्धम् ॥ ३
झञ्झावायुः प्रवहति हठात् वारिवर्षा प्रवृत्ता
गर्ज्जं गर्ज्जं जलदनिकरो दुर्निरीक्ष्यः समन्तात् ।
आशापाशैर्निगड़ितमतिर्यांति पान्थस्तथापि
प्राणत्राणे न खलु विरता प्राणिशक्तिः कदाचित् ॥ ४
सिक्तं वस्त्रं परिहितमहो कम्पते खिन्नगात्रं
श्रोत्रं रुद्धं जलदसलिलैश्चक्षुषिश्चापि नेत्रम् ।
शैत्याधिक्यादवशमधुना सर्व्वमङ्गं क्रमेण
क्लान्तः पादस्खलितमलसश्चित्तमुद्वेगपूर्णम् ॥ ५
आशा यासौ श्मशनसदने प्रज्ज्वलत्यापि जन्तोः
पथ्यं दातुं रचयति धियं शोकसन्तेच शान्तिम् ।

वार्द्धक्येऽपि प्रतिदिनमसौ वर्द्धते दुस्त्यजा या
सैका पान्थं नयति सरणीं हन्त भो: सर्व्वमोहक्॥ ६
देव्यादत्तं न सुलभमतो दूरदेशं समेत:
स्वल्पं किञ्चिद्धनमधिगतो दीर्घकालश्रमेण।
गेहं यास्यन् विरचितमति: प्राप्तबाधोऽतिभीत:
स्वेष्टं देवं स्मरति सततं तद्गतेनात्मना स:॥ ७
तस्मिन्काले नवजलधरक्रोड़विद्युत्प्रकाशो
भक्ताह्वानश्रवणविधुरो देवदेवोऽभ्युपेत:।
क्रोड़े कृत्वा पथिकमनयत् तस्य गेहं सुदूरं
स्वप्नप्रायं तदखिलमभूदस्य चित्ते तदानीम्॥ ८
दुःखं जन्तो: प्रभवति यदा सर्व्वतस्तीव्रवीर्य्यं
यत्न: सर्व्वो मनुजविहितो व्यर्थतामेति तत्र।
ऐशी शक्तिस्तदपनयने केवलं सिद्धकामा
गर्व्व: खर्व्वो न भवति परं मानवीयो विचित्रम्॥ ९

---

## चन्द्रालोके

### चतुर्थोऽङ्क:।

लेखक:—श्रीधूर्जटिप्रसादकाव्यतीर्थ:।

तथाहि तेषामस्माकञ्चान्योन्यविग्रहे त एवास्माकं वयमेव तेषां प्रतिद्वन्द्विन:; अन्यथा ते पितृव्यसुता: परमसुहृद:।

अर्जुन:—साधु साधु सम्यङ् नीतिरालोचिता भवता

या क्षात्रव्रतनिष्ठनीतितटिनी संसारमर्व्वान्तरे
प्रोन्मूल्योद्धतभूपतीन् विनयिन: संस्थाप्य चाङ्के स्वके।

स्वच्छं शान्तिजलं प्रदाय नितरां नित्यं वहन्ती स्थिता ;
यस्यैषा कृतिनः स एव कुशली धन्यः स एको भुवाम् ॥

कुन्ती—वच्छ ! दुदेव इदएण प्पओदिदा पदङ्गा विअ हुदासनं तुम्हेवि तं वासुदेअं अहिजाध त्ति इध किं फलं हुविस्सदि त्ति परिचिन्दअन्तीए दिढ़णिगहिदं वि चित्तं सन्देहदोलाचञ्चलं होदि ता अहिजाणादो किअन्दि दिणाइं विरम अहं दुवारआपदिं अनुनीअ जधा लोअक्खअकरं समरं बिणा सन्धी होदि तधा करेमि ।

युधि—मातः ! यावद्भीष्मद्रोणविदुरप्रमुखा महामतयो नागच्छन्ति तावदेव किञ्चिद्विलम्ब्यताम् ।

कुन्ती—जं दे रोअदि ।

प्रतीहारी—(प्रविश्य) देइ ! मज्झमपण्डवजाआ भअवदी सुभद्दा देइ गुरुअणसमक्खागमणलज्जिदा पासवट्टिणि प्पकोट्ठे अपेक्खदित्ति सुनिअ देइ प्पमाणं ।

कुन्ती—भद्दे ! मग्गं दंसेहि ।

प्रती—इदो इदो महादेइ ।

(इति प्रतीहार्य्या समं कुन्ती प्रस्थिता)

युधि—वत्स ! अर्जुन ! यथाकर्त्तव्यमनुष्ठीयताम् ।

अर्जुनः—यथाज्ञापयत्यार्य्यः ।

युधि—वत्स ! भीमसेन ! एहि ; सामरिकविषये मन्त्रयामहे ।

(सर्व्वे निष्क्रान्ताः)

इति चतुर्थोऽङ्कः समाप्तः ।

---

# कालिदासस्य कुशलानुयोगस्य ।

लेखकः—सं-कामधेनुसम्पादकः श्रीकेएरामलिङ्गशास्त्री ।

यदा खलु भुवनपरित्राणपरायणे क्षत्रवर्गेऽवतीर्णः प्रजारञ्जनलब्धवर्णः, गाधिपुत्त्रो विश्वामित्रः किल चतुरङ्गबलालङ्कृतः प्रविवेश प्रतपसां वरिष्ठस्य वशिष्ठस्य आश्रमम्, ननु तदैव वशिनामग्रणीरथर्वनिधिस्तपोनिधिः सकलानामपि कामितकल्पनाय सर्वदा स्वाश्रमे दूरीकृतश्रमे शालमानायाः शबलाया नाम कामधेन्वाः प्रभावोपनतेन अपरिमितेन उपशाह्येण साकं प्रत्युद्गस्य पार्थिवेन्द्रं, महता समारोहेण उपचचार च "अपि कुशलम् ?" इति । अनुयुयोज च कुशलम् इति नेदं तिरोहितं नाम रामायणपारायणपरायणानां विचक्षणानाम् ॥ श्रीमन्मधुसूदनसरस्वतीभिः कृते श्रीशिवमहिम्नःस्तोत्रव्याख्याने "त्रयी-सांख्यम्" इति स्तोत्रीये शास्त्रप्रस्थाने धर्मशास्त्रतया परिगणिते श्रीमत्त्र्यम्बकशास्त्रिभिश्च हायनत्रिशत्याः पूर्वं तञ्जापुरी(Tanjore)-राजस्थानपण्डितसचिवैः कृते "धर्माकूतव्याख्याने सप्तकाण्डाणां समोपन्यासात्मके "न केवलं श्रीमद्रामायणं सीतारामयोश्चरित्रकथनाय प्रवृत्तम्, किं तर्हि धर्मशास्त्ररहस्यप्रबोधनाय" इति प्रतिघट्टम् आदितआन्तं सनिदर्शनं प्रख्यापिते इतिहासद्वितयमध्ये आदिकाव्ये श्रीमद्रामायणे—"ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम् ।" इति स्मृत्या अनामयप्रश्ने विश्वामित्राय कर्त्तव्ये, विप्राय प्रयोज्यम्—

"कच्चित्ते कुशलं राजन् ! कच्चिद्धर्मेण रञ्जयन् ।
प्रजाः पालयसे राजन् ! राजवृत्तेन धार्मिक ! ॥७ ॥
... ... ...
कच्चिद् बलेषु कोशेषु मित्रेषु च परन्तप !
कुशलं ते नरव्याघ्र ! पुत्रपौत्रे तथाऽनघ ! ॥८ ॥ इतीदं

कुशलानुयोगवर्णनं कथं घटताम् ? इति विमर्शकाः केचित् प्रतिपद्यन्ते —इत्थं तत्तत्परिजिहीर्षया मनाग् विविच्यते —यद्यपि इदं कुशलानुयोजनं धर्मशास्त्राननुगुणमिव प्रतिभाति, तथापि आदिकवेरभिसन्धौ अभ्युह्यमाने सुसङ्गतमेवेदमिति मनीषा विचारकाणाम् उदियादिति मन्यामहे। कथम् ? भाविताभाविकालज्ञ आदिकविः किल—भगवतः कौशिकस्य किल भाविनीं ब्रह्मर्षिरूपिणीं कल्याणपरम्परां प्रणिधानेन उपज्ञाय श्रीमद्वशिष्ठवचने ब्राह्मणाय प्रयोज्यं कुशलप्रश्नं निबबन्ध इति। अथवा, राजा किल नास्मदादिवत् केवलहस्तपदादिशाली शालीनः कश्चित् पृथग्जनः, किं तर्हि ? दिगीशांशशेवधिः प्रजापरिपालनविनयाधान-भरण-शिक्षणादिभिरतिशयितैः कृत्यजातैः समस्तजानपदमातापितृप्रतिनिधिः "क्षत्रियस्य परो धर्मः प्रजानां परिपालनम्" इति निरूपितलक्षणात्मकस्य तपोयोगस्य अहर्दिवं निर्वर्तयिता 'कालो वा कारणं राज्ञो राजा वा कालकारणम् ? इति ते संशयो मा भूद् राजा कालस्य कारणम्॥' इति वर्णितरीत्या कालचक्रप्रेरकः कर्तुम् अकर्तुम् अन्यथाकर्तुञ्च शक्तः शान्तः सर्वभोग्ये आश्रमे तपस्यन् महर्षिकल्पः कल्पपादपः खलु! किं च महर्षयो हि संशितव्रताः सदा ब्रह्मध्यानाधन्याः आनन्दरूपास्तिष्ठन्ति। राजर्षयस्तु प्रजावनपरायणाः—

भानुः सकृद्युक्ततुरङ्ग एव रात्रिन्दिवं गन्धवहः प्रयाति।
शेषः सदैवाहितभूमिभारः षष्ठांशवृत्तेरपि धर्म्म एषः।

इत्युक्तविधया लोकतन्त्राधिकारस्य अविश्रमत्वात्

'अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन्।
अयशो महदाप्नोति नरकं चाधिगच्छति।' इतीदृशमनुस्मृत्यनुसारेण प्रजानां धर्माधर्मातिरेके तदीयषष्ठांशस्य स्वस्मिन् संक्रमणेन स्वाभ्युदयक्षययोरुत्पादात्, आरण्यकानां तपस्विनां तपश्चर्याप्रत्यूहापोहनेन अक्षय्यस्य तपःषड्भागस्य च सम्पादनेन स्वसाम्राज्याभिवृद्ध्यर्थम्

"लोकाः समस्ताः सुखिनो भवन्तु" इति अनेनैव उद्देशेन प्रजारक्षणाय मत्वा रात्रिन्दिवं जागर्ति ; तथा च एते नृपतयः ऋषिभ्यो नातीव विभिद्यन्त इति मत्वैव भगवान् वसिष्ठो विश्वस्य मित्राय भूपतये कुशलप्रश्नं व्याजहार—इत्युपपद्यते, तथैव च कविसार्वभौमः कालिदासः—अभिज्ञानशकुन्तले द्वितीयेऽङ्के वैतालिकवचनोपन्यासमुखेन प्रस्तौति

"अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये
रक्षायोगादयमपि तपः प्रत्यहं सञ्चिनोति ।
अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः
पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः ॥ इति

एतदाशयानुगुण्येनैव महर्षिर्वसिष्टो राजर्षिं दिलीपं राज्ये कुशलम् अनुयुयोजेति रघुवंशे प्रथमसर्गे कवितल्लजोऽयम्—

तमातिथ्यक्रियाशान्तरथक्षोभपरिश्रमम् ।
पप्रच्छ कुशलं राज्ये राज्याश्रममुनिं मुनिः ।

इति पद्यं स्वयमपि निबन्धेत्यभ्यूहितुं शक्यते, यतः स्वाश्रमे अष्टाङ्गयोगान् अनुतिष्ठति वशिष्ठः राजर्षिर्दिलीपभूपोऽपि आस्थानमण्डपाश्रमस्थः सप्ताङ्गराज्यपरिरक्षणरूपं तपश्चरति अत उभावपि इमौ कयाचित् प्रणाल्या मुनिस्वरूपावेव ।

श्रीमल्लिनाथमखीन्द्रस्य "संजीवनी"व्याख्यायाम् तत्र 'ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम् । वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ।' इति मनुवचने सत्यपि तस्य राज्ञो महानुभावत्वाद् ब्राह्मणोचितः कुशलप्रश्न एव कृत इत्यनुसन्धेयम् । अत एवोक्तं "राज्याश्रममुनिं मुनिः ........" इति इत्यनुपपत्तिं परिहरति । अपि च "अष्टानां लोकपालानां मात्राभिर्निर्मितो नृपः । इन्द्रस्यार्कस्य वायोश्च यमस्य वरुणस्य च । चन्द्रस्याग्नेः पृथिव्याश्च तेजो वृत्तं नृपश्चरेत् ॥" इत्यादिस्मृत्यवगमितं राज्ञो महानुभावत्वं—'शशाम

वृष्ट्यापि विना दवाग्निरासीद् विशेषा फलपुष्पवृद्धिः। ऊनं न सत्त्वेष्वधिको बबाधे तस्मिन् वनं गोप्तरि गाहमाने ॥' इत्यादिवर्णनापर्यालोचनेन निश्चप्रचमेव। किं च राजा इति शब्दस्य राजते इति व्युत्पत्त्या "राजृदीप्तौ" इति दीप्त्यर्थकाद् धातोर्न निष्पन्नः, किं तर्हि? रञ्जयतीति राजा इति रञ्ज रागे इति रञ्जनार्थाद् धातोरेवेति महाकविरयमभिप्रैतीति निर्णीयते—तथाहि "यथा प्रह्लादनाच्चन्द्रः प्रतापात् तपनो यथा। तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात् ॥" "राजा प्रजापालनलब्धवर्णः परन्तपो नाम यथार्थनामा।" इत्यादि सूक्तिसमालोचनात्; तथा च —'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते परम्।' इति भगवदुपदेशेन प्रजापरिपालनात्मकस्वधर्माचरणस्य विशिष्टज्ञानवत्त्वरूपपरसिद्धिप्रापकत्वाद् राजर्षेरपि ब्रह्मर्षित्वं सिध्यत्येवेति न काचिदनुपपत्तिश्चिन्तनीया। अन्यच्च

"किमत्र चित्रं यदि कामसूर्भूर्वृत्ते स्थितस्याधिपतेः प्रजानाम्।
अचिन्तनीयस्तु तव प्रभावो मनीषितं द्यौरपि येन दुग्धा ॥ २३ ॥

इति रघुवंशपञ्चमसर्गस्थकौत्सकृतरघुमहाराजराजधानीसंप्रवृत्तकनकवर्षाभिनन्दनवचनपरिशीलनेन च सद्वृत्तस्य नृपस्य ब्रह्मर्षित्वादिसदृशी ईप्सितसिद्धिरनन्तरजन्मनि अवश्यं भाविनी इति सेयं तादृशे नरेशे अनभिव्यक्तस्वरूपा उज्ज्वलरूपेण केवलमुन्नेया चकास्तीति च निश्चीयते; तस्यैतस्य इदमेव लिङ्गं यत् विप्राय प्रयोज्यं कुशलानुयोजनं नाम क्षत्रियस्येति सर्वं समञ्जसम्। सर्वथापितु श्रीकालिदासः श्रीमद्रामायणमाद्रियते इति निरूपितं भवतीति शम्।

---

## प्रसूनवाटिका—गुलिस्ताँ ।

लेखकः—श्रीरामस्वामी ।

५ आख्यानम्—अग्लमग् समाख्यस्य नृपतेः पान्थसद्मनि सेनानीतनयमेकमलक्षयम्—यः खल्वतिप्रशस्तया शेमुषीसम्पदा समलङ्कृत आसीत्। बाल्यात् प्रभृति च तस्याभ्युदयलक्षणं निटलफलके प्रकटमभूत्।

धीषणागौरवात्तस्य मूर्द्धदेशमधिष्ठिता।
द्योतते स्म समुत्कर्षतारका च भृशोज्ज्वला।

किं बहुना! बाह्याभ्यन्तरसौन्दर्य्यगरिम्णा स क्षमापतेर्लोचनगोचरे समादरणीयतामवाप। यदुक्तमभियुक्तैः

आढ्यता खलु गुणप्रकर्षजा, नैव तु द्रविणजा बुधैर्मता
प्रौढ़ता च मतिपाकजाऽऽदृता, नैव वर्षसमवायजा पुनः॥ इति

सहचरास्तस्य प्रतिष्ठया मात्सर्य्यमावहन्तस्तस्मिन्नलीकमेकमपराधमारोप्य हननाय तस्य समुदयुञ्जत।

किं निहन्याद्रिपुर्मन्दः सुहृदि प्रेमसम्मते?

भूभृदपृच्छत्—तेषां त्वया वैरस्य किं नु कारणम्? इति। स प्रत्यवदत् देवस्य सम्पच्छायायां विश्रान्तः—अखण्डत्तं तां साम्राज्यं तस्य—सर्वानेव समतोषयम्। परं दुर्हृदस्ते न प्रीयन्तेऽन्तराऽपायं मद्विभवस्य *—शं नो भवतु समं विभूत्या देवस्य इति।

शक्नोमि यन्मनः-पीड़ां न दग्धुं कस्यचित् क्वचित्।
किं कुर्यां वैरिणोऽसौ यत् स्वयं क्लेशपराहतः।
म्रियस्वाङ्ग रिपो! तत् त्वं मुच्यसे वैरदुःखतः।
यतोऽस्मात् खलु लब्धव्या निष्कृति र्न मृतिं विना।
कामयन्ते सनिर्बन्धं दुर्भगाः किल सन्ततम्।
मर्य्यादैश्वर्य्ययोर्भ्रंशं सुभगानां दुरत्ययम्।

---

* उक्तं हि भारविणा—गुणाज्र्जनोच्छ्रायविरुद्धबुद्धयः प्रकृत्यमित्रा हि सतामसाधवः इति।

लोचने जतुकायास्ते नावलोकयतो दिवा।
दीधितेर्दीननाथस्य को दोषः स्यात्तदा वद।
तथ्यं पृच्छसि चेदेवं नयनानां सहस्रकम्।
अन्धभूतं वरं काणात् सहस्रकिरणादिह॥

६ आख्यानम्—एवमुपाख्यायते यत् पारसीकपार्थिवानां कश्चित् "प्रकृतीनां" धनोपरि "करमुपप्लवस्य" प्रसारयामास, समारभत चैतावत् ताः समुत्पीड़यितुम्, यदधिवासिनस्तस्योपद्रवसन्तत्या विमनसः समन्तात् विकीर्णा अध्वगत्वमङ्गीचक्रुः। ततः सञ्जाते प्रजानाशमल्पीयस्त्वे करो राज्यस्य न्यूनतामध्यगच्छत्, कोषश्च रिक्तप्रायो बभूव। रन्ध्रमासाद्य द्विषन्तोऽपि लुब्धन्तो बलमाविश्चक्रुः।

समीहते यो व्यसने सहायकं वदान्यतां सोऽधिकरोतु सम्पदि।
असत्कृतो दासजनोऽप्ययाति वै, सुसत्कृतो याति परोऽपि दासताम्।

कदाचित् तस्य परिषदि "शाहनामा" † संज्ञिते ग्रन्थे जहहाक ‡ नामधेयस्य राज्यभ्रंशं फिरेदुन् संज्ञकस्य च राज्याधिगममधिकृत्य विवरणमधीयते स्म। अमात्यो नृपतिरपृच्छत् "कश्चिदिदमवगन्तुं प्रभवति कथं नाम राज्यं फिरेदुनस्य करतलगतमभूत्—यः किल राज्य-धन-जन-गौरवाणां नैकस्यापि प्रागधिकर्त्ता बभूव।" इति? नरपतिरवदत् "यथा श्रुतं त्वया, जनसङ्घ एकः पक्षपातितया तं परिवृत्य साहाय्येनाप्याययत, राज्यञ्चैवमाससाद इति। अमात्योऽवोचत्—राजन्! जनसमवायसाध्यमेव चेद्राज्याधिगमनिदानमवबुध्यसे कथं तत् त्वया

---

† शाहनामा—फिरदौसीनामकेन फारसीकविना विरचितं पारसीकनृपाणामितिहासवर्णनपरं महाकाव्यम्।

‡ जहहाक्—अयमतीव प्रजापीड़क आसीत्। ईश्वरकोपात् तस्यांसमध्ये व्रतमजायत यत्र किल कश्चिदुरगः समुत्पेदे,—नृणां मस्तिष्कमेव यस्य खाद्यमित्यामनन्ति। फिरेदुननामाख्यः कश्चिद्वीरस्तं सिंहासनादवरोप्य निजघान। दशदोषवत्वात् तस्येयं संज्ञा समजनि। ते दोषा स्वेते—(१) कुरूपत्वम् (२) खर्वत्वम् (३) उपद्रवित्वम् (४) मिथ्यावादित्वम् (५) कापुरुषत्वम् (६) धर्मप्रत्ययराहित्यम् (७) अतिभोजित्वम् (८) निर्लज्जत्वम् (९) मूढ़त्वम् (१०) कटुभाषित्वञ्चेति।

लोकपरिपीड़नव्रतमाचर्य्यते । राज्यशासनस्य तु नाभिप्रायस्तो विद्यत इति प्रतिभातीति ।

एतच्छ्रेयो बलं यत्त्वं पालयेः प्राणवत् सदा ।
प्राधान्यं भूपतिर्विन्देद् यतो बलनिमित्ततः ॥

राजोवाच—चमूनां प्रजानाञ्च पक्षपातित्वे किं खलु बीजम् ? इति । अमात्यः प्रत्यवोचत्—'राज्ञामौदार्य्यमावश्यकम्, यतस्ताः पक्षं भजेरन् । कारुण्यमपि तेषां सप्रयोजनम्—यतस्तास्तत् सम्प्रदायेया निर्भयास्तिष्ठेयुः । भवतस्तु नैकतरदपि वर्त्तत इति ।

उपद्रवो नृपः कुर्य्यान्न राज्यमनपायकम् ।
क्षमः स्यात् पालकत्वस्य न हिंसावृत्तिको वृकः ।
प्रजोपप्लवसङ्कल्पं यो विदध्यान्नराधिपः ।
स्वराज्यभित्तिमूलं स निखनेदैवमोहितः ॥

हितोपदिष्टममात्यस्य सुभाषितं तद्राज्ञस्तस्य प्रतिकूलवृत्तेर्नाभिमतमभवत् । स हि वदनं तस्मात् परावर्त्य तं कारागारं प्रैरिरत् । अथ नातिगते बहुतिथे काले नृपतेः पितृव्यपुत्रो विरोधाय परिकरमाबध्य पृतनां समाजहार, चकार च मतिं पितुर्विषयाधिकारे । प्रजाः खलु या भूभृतस्तस्योपद्रवेण दुःखातिरेकाद्दुर्दशामापन्नाः सर्वास्तास्तस्य सापत्न्यमालम्ब्य साहायकं विदधिरे, यावद्राज्यमस्याधिकारात् प्रच्युतं तमामिम्रियुः ।

दीनेऽधीने जने भूपः पीड़नं यः समाचरेत् ।
सुहृदस्तस्य जायन्ते विपत्तौ प्रतिपक्षिणः ।
कुरु मैत्रीं प्रजावर्गे वैरिभ्यस्तिष्ठ निर्भयः ।
प्रजाः सेनापदं दध्युर्नृपतेर्न्यायवर्त्तिनः ।
स्वायत्तानां नृणां धत्स्व मा विषादं कथञ्चन ।
कालप्रकोपाद् विषमाद् विभीहि दुरतिक्रमात् ॥

# दुर्गेशनन्दिनी

श्री........

## चतुर्दश: परिच्छेद: ।

### मोह: ।

आनमितदेहो जगत्सिंहो ददर्श स्पन्दहीनां तिलोत्तमाम् ।

वसनाञ्चलव्यजनेनापि तस्यां संज्ञालक्षणमदृष्ट्वा स रक्षिणमाजुहाव। तिलोत्तमाया: सहचरो रक्षी तमुपागत: । जगत्सिंहस्तमुवाच—रूहसेयं मोहं गता । सहचरीमस्या: शुश्रूषणार्थमाकारय ।

रक्षी प्रत्युवाच—अहमेवागतोऽनया सह ।

विस्मयं गतो राजपुत्र: समुवाच—त्वमेव ?

रक्षी प्रत्यभाषत—नान्या कापि समागता ।

जगत्सिंह—तदा कस्तावदुपायो भविष्यति ? समाहूय कामपि पौरदासीम् ।

रक्षी प्रचलित: । राजपुत्र: पुनरपि तमाहूय प्रोवाच—श्रूयताम् तावत् । अन्यस्यां कस्यामपि समाहूतायां भविष्यति विघ्नोत्पत्ति: । का वाद्य रजन्यां विहाय उत्सवमस्या: साहायकं कर्त्तुमागमिष्यति ? रक्षी प्रोवाच—तदपि सत्यम् । अन्यस्य कस्यापि वा जनस्य दास्यन्ति रक्षिण: कारागृहप्रवेशानुमतिम् ? न खलु उत्सवे अन्यं कमपि जनं कारागृहमानेतुम् ।

राजपुत्र: समभाषत—तदा किं नाम कर्त्तव्यम् ? वर्त्तते तावत् एक एव उपाय: । सपदि त्वम् दासीजनेन उपस्थापय एतां वार्त्तां नवाबनन्दिनीसमीपे ।

रक्षी द्रुतं तदभिमुखमचलित: । राजपुत्रस्तु यथाशक्ति शुश्रूषते स्म तिलोत्तमाम् । क: कथयिष्यति किं तदा राजपुत्रेण मनसि आलोचितम् ? को वा वक्ष्यति आसीत् तस्य नयनमश्रुपूर्णं न वेति ?

राजपुत्र एकाकी कारागृहे तिलोत्तमामन्तरेण परमुद्वेगं समुपगत: । यदि तावदायेषासकाशं न गच्छति एष वृत्तान्त:, यदि वा न विधातुं शक्यते तया कश्चिदुपाय:, तदा किं भविष्यति ? सञ्जातस्तिलोत्तमाया: क्रमश: स्वल्पचेत[illegible]: । तदैव अपाहृतेन

द्वारपथेन आलोकितं जगत्सिंहेन—रक्षिणा सार्द्धं रमणीयुगल-मागच्छतीति। एका अवगुण्ठनवती। दूरादेव तस्या उन्नतां देह-यष्टिं, सङ्गीतमधुरं पदविन्यासं, लावण्यमयीञ्च ग्रीवाभङ्गिं दृष्ट्वा विज्ञातं तेन—दास्या सह स्वयमायेषा आगच्छतीति। सहैव तया आशापि समागच्छतीव।

रक्षिणा समागतयोस्तयोः कारागारद्वारम्, कारापालः पप्रच्छ रक्षिणं तम्—किं न निषेद्धव्यमेतयोरपि आगमनमत्र ?

रक्षी प्रोवाच—त्वमेव प्रभवसि। न ज्ञायते मया!

द्वारपालः प्रोवाच—साधु। एवमुक्त्वा निषिद्धस्तेन तयोः कक्षा-भ्यन्तरप्रवेशः। तच्छ्रुत्वा आयेषा मोचयित्वा वदनावगुण्ठनं सम-भाषत—"कारापाल, देहि नः प्रवेशम्। एतेन यदि स्यात् तव कश्चि-दनिष्टपातस्तदा स्थापयितव्यो मयि दोषभारः।" नाभिज्ञाता आयेषा कारापालेन परमनुचरी अनुचरैर्ददौ तस्याः परिचयम्। कारापालो विस्मितस्तामभिवाद्य प्राञ्जलिरुवाच—क्षम्यतां तावत् दासजनस्य अपराधः। न तावत् निषिद्धं कुत्रापि गमनम् अत्रभवत्याः।

प्रविष्टा आयेषा कारागाराभ्यन्तरम्। नैसर्गिकस्मेरमुखत्वात् अकृतहासापि सा हसन्तीव प्रतिभाति स्म। सञ्जाता च कारागृहस्य कापि शोभा। तदा न प्रतीतं केनापि कारागारमेतदिति।

आयेषा समभिवाद्य राजपुत्रं समुवाच—किं वृत्तम, राजपुत्र! किमुत्तरं करिष्यति राजकुमारः? उत्तरमदत्त्वैव सोऽङ्गुलिनिर्देशेन दर्शयामास भूतलशयितां तिलोत्तमाम्।

आयेषा निरीक्ष्य तिलोत्तमां पप्रच्छ—का एषा?

राजपुत्रः सलज्जमुवाच—दुहिता वीरेन्द्रसिंहस्य।

आयेषा तिलोत्तमामङ्के आदाय निषण्णा बभूव। अन्येन केनापि अत्र सङ्कोचो विकल्पो वा कृतो भवेत्। परमायेषा सपदि एव तामुत्सङ्गे कृतवती।

यदैव क्रियते आयेषया तदैव मधुरायते स्म। सा सर्व्वमेव कार्य्यजातं सुमधुरं सम्पादयति।

तिलोत्तमामुत्सङ्गे क्षत्वा उपविष्टायां तस्यां, जगत्सिंहेन दास्या च उभाभ्यामेव अमन्यत—मधुरदर्शनमेतत् दृश्यमिति। आयेषा ततः पाययामास तिलोत्तमां दासीहस्तानीतं सशर्करं पयो गोलावगन्धि जलञ्च सिषेच तच्छरीरे। दासी च व्यजनरता अतिष्ठत्। पूर्व्वमेव जातश्चेतनसञ्चारस्तिलोत्तमायाः। अधुना तु आयेषाकृतशुश्रूषया सर्व्वथा सञ्जाता तस्याश्चेतना।

समन्तान्निरीक्षमाणायास्तस्याः स्मृतिपथमागतं पूर्व्वं वृत्तम्। तत्क्षणमेव सा कक्षमध्यात् निष्क्रमितुमुद्यता बभूव। परं तस्यां निशायां शारीरिकेण तथा मानसिकेन श्रमेण अवसादं गतं तस्याः शरीरम्। अतः सा चलितुं न शशाक। पूर्व्ववृत्तान्तस्मरणमात्रमेव विघूर्णितं मस्तकम्। सा चोपविष्टा। आयेषा तस्याः करं धृत्वा ऽभाषत—भगिनि, कथं त्वया उद्विज्यते? त्वमधुनातीव दुर्व्वला। आगच्छ विश्रान्तये मद्गृहम्। पश्चाद् यदैव तेऽभिलाषो भविष्यति तदैव तवाभिलषिते देशे त्वां प्रेषयिष्यामि।

तिलोत्तमया न दत्तं किमपि प्रतिवचनम्। आयेषा रक्षिणः सर्व्वमेव श्रुतवती। अतस्तिलोत्तमायाः मनोगतं संशयमाशङ्क्य समभाषत। "कथं मयि न क्रियते विश्वासः? सत्यमहं तव शत्रु-कन्या। परमत्रत्य न मन्यस्व मामविश्वसनीयाम्। मत्तः किञ्चिदपि न गमिष्यति प्रकाशताम्। अवसितमात्रायामेव रजन्यां यत्रैव गन्तुमिच्छति तत्रैव प्रेरयिष्यामि दासीजनेन। कोऽपि किमपि न प्रकाशयिष्यति।

वचनमेतदायेषा तथा मधुरस्वरेण समभाषत यथा न जातस्तिलोत्तमायास्तत्र अविश्वासावसरः। विशेषतश्च अधुना सा चलितुमपि न शक्नोति, न वा जगत्सिंहसमीपे उपवेशनमपि—साधु मन्यते। अतः

सा तथैव सम्मतिं ददौ। आयेषा प्रोवाच—न त्वं शक्ष्यसि चलितुम्। आगच्छ अस्या एव दास्याः शरीरे दत्तावलम्बा।

तिलोत्तमा दास्याः स्कन्धे हस्तं समर्प्य तदवलम्बना शनैरचलत्। राजपुत्रोपि आपृच्छमानायाः आयेषाया मुखं प्रति किमपि वक्तुकाम इव दत्तदृष्टिरवर्त्तत। आयेषापि ज्ञाततदभिप्राया दासीं समुवाच समुपस्थाप्य एनां मम शयनागारे भूयोप्यागच्छ मां नेतुम्।

दासी तिलोत्तमामादाय गता।

जगत्सिंहो मनसि आलोचयामास—एतदेव आवयोः पश्चिमं दर्शनम्। ततः स दीर्घं निश्वस्य तूष्णीं तस्थौ। यावत् तिलोत्तमा द्वारपथेन दृश्यते तावत् तां प्रति दत्तदृष्टिरवतस्थे। तिलोत्तमापि चिन्तयामास—एतदेव मे शेषं दर्शनम्। यावत् जगत्सिंहस्य दर्शनपथे स्थिता तावत् सा पश्चाद्दृष्टिं न व्यापारयामास। यदा सा प्रत्यावृत्य ददर्श तदा जगत्सिंहो नैव दृश्यते।

अङ्गुरीयकहस्तो रक्षी तिलोत्तमासकाशमागत्य बभाषे—गच्छाम्यहम् अधुना। तिलोत्तमा किमपि न प्रत्यभाषत।

दासी अभाषत—तदा प्रदीयतां भवत्याः हस्तस्थम् साङ्केतिकम् अङ्गुरीयकम्।

तिलोत्तमा अङ्गुरीयकमादाय रक्षिणे समर्पयामास रक्षी तामापृच्छ्य गतः।

## समालोचनम्

**श्रीदुर्गाहोमादिपद्धतिः—** कश्मीरमण्डलान्तर्गत-मुजफराबादनिवासिना रावलपिण्डीस्थश्रीमोतीनाथसंस्कृतपाठशालामुख्याध्यापकेन पण्डितरामचन्द्रशास्त्रिणा प्रणीता, मुरादाबादस्थ-सनातनधर्म-यन्त्रालये मुद्रिता, रावलपिण्डीनगरात् ग्रन्थकारेण प्रकाशिता। अस्मिन् ग्रन्थे दुर्गासप्तशत्या मन्त्रविभागः प्रयोगश्च सप्रमाणो ग्रन्थकारेण चारुतरं निबध्यते। अत्र सामान्यपरिभाषा, विशेषपरिभाषा, प्रयोगप्रकरणम्, एतत् परिच्छेदत्रयं वर्त्तते। तत्र च सामान्यपरिभाषायां

सर्व्वसाधारणस्नान--सन्ध्या--शिखाबन्धन--देशाचार-मालासंस्कार-कुण्ड-स्थण्डिलविचारादिका बहवो विषयाः सप्रमाणाः प्रतिपादिताः विशेषपरिभाषायां दुर्गापाठवाचनक्रम—शापोद्धारोत्कीलन—कवचादिश्लोकसंख्यासम्पुटपल्लवादिनियम—यन्त्रप्रकार—काम्यप्रयोग—शतचण्डीविधान—नवरात्रविधान—कवचाहुतिनिर्णय—सम्पुटितहोममन्त्रसंख्यानिर्णय—चण्डीस्तवमन्त्रविभागादिकं वर्त्तते। प्रयोगप्रकरणे चण्डीपूजा सविस्तरा, होमप्रयोगः, दुर्गामहावलिः, अभिषेकः, कुमारीपूजा, नवरात्रप्रयोगः शतचण्डीप्रयोग इत्यादिका बहवो विषया विद्यन्ते। सप्तशतीयन्त्रमन्त्रविभागे मतभेदाः सन्ति एतद्ग्रन्थोक्तमन्त्रविभागप्रणाली तु समीचीनतया प्रतिभाति। ग्रन्थोऽयं तद्रसरसिकानां अतीवोपयोगीति मन्यामहे।

८ श्रीश्रीकालीपूजापद्धतिः— विद्याविनोदोपाधिकश्रीहरिशचन्द्रभट्टाचार्य्येण सम्पादिता प्रकाशिता च। मूल्यमानकद्वयमात्रम्। प्रचरितासु मुद्रितकालीपूजापद्धतिषु प्रायः सर्वा एव भ्रमबहुला असङ्गतिसमाकुलाश्च। एतस्मिन् कार्य्यसन्देहे कस्यचित् विशुद्धस्य हि पुस्तकस्यापेक्षा विशेषेण वर्त्तते, अनुभूयते च सम्यक् तद्रसरसिकैः। अस्मिन् विषये विद्याविनोदमहाशयस्य प्रयत्नः प्रशंसनीयः। प्रयोगाश्च सर्व्वत्र प्रमाणसनाथा वर्त्तन्ते। पुस्तकेऽस्मिन् केचित् मुद्राकरप्रमादाः परिलक्षिताः। लक्षिताश्च केचिद् भ्रमाः सम्यगालोचनाभावात् सम्पादकस्य। तथापि पुस्तिकेयं प्रचरितासु सर्व्वासु एव प्रायेणोत्कर्षेण विद्यते।

टिक् भुल—त्रिशूलाख्यवङ्गभाषामयपत्रादुद्धृतकथाविशेषात्मकं पुस्तकम्। मूल्यमानकपञ्चकम्। कथायामत्र पाश्चात्यभावाबद्धानुरागाणां पाश्चात्यवेशभाषानुकरणशीलानाम् आधुनिकानां सम्प्रतिदूषकता कथासुखेन प्रकटीकृता। आशास्महे कथामेतां पठन्तो वैदेशिकभावविमुग्धचेतसोऽपि भारतीयरीतिषु आदरातिरेकं पुष्णन्तस्त एवोररीकरिष्यन्तीति।

## सन्देशकणिका:

विदितमस्तु पारिषदानां यन्निखिलभारतीयसंस्कृतमहासम्मेलनस्य ऐषमोऽधिवेशनं श्रीविश्वेशपुर्य्यां विश्वविद्यानिकेतने श्रीमतां काशीनरेशवर्य्याणामाध्यक्ष्येण श्रावणमासे शुक्लपक्षे दशम्येकादशीतिथ्योर्नियतीकृतम् श्रीमन्मदनमोहनमालवीयवर्याणां प्रयत्नेन। तत्र च महामहोपाध्यायपदभाजः श्रीमत्प्रमथनाथभट्टाचार्य्यतर्कभूषणमहोदयाः स्वागतसमितेः सभापतिपदमलंकुर्वाणा वर्त्तन्ते। चिरन्तनशिक्षाकेन्द्रीभूता खलु वाराणसी अखिलानां भारतीयविबुधानां संहत्या अस्मिन् सरस्वतीमहायज्ञे संशोभमाना विराजतामिति आशास्महे।

निखिलभारतसंस्कृतमहासम्मेलनस्य मन्त्रिमुख्यैः सादरमामन्त्रिताः परिषत्पक्षीयाः सम्प्रति वाराणसीं प्रस्थिताः। यथा च लक्षितो अग्रवण(Agra)सम्मेलने विदुषामाग्रहातिशयः संस्कृतनाट्यप्रयोगदर्शने, यथा चेदानीं परिदृश्यते वाराणसेयसम्मेलनाधिकृतानां परमौत्सुक्यमत्र वस्तुनि, मन्यते तेन, नैव शक्नुयुः प्रत्यागन्तुं भरतशास्त्रविदः परिषत्सदस्या अपरितोष्य तत्रगतान् विबुधजनान् स्वकीयकलाप्रयोगेणेति।

सौरश्रावणस्य सप्तविंशदिवसे रविवासरे श्रीमदाशुतोषविद्याभूषणपादानामाध्यक्ष्येण परिषद एतन्मासिकमधिवेशनं सुसम्पन्नम्। तत्र च सम्पन्ने खलु पारिषदानां यथाविहिते कर्मजाते श्रीमत्परिषच्छात्रवृन्दैः परिषदाचार्य्यपदभाजः कवेः श्रीमत्कालीपदतर्काचार्य्यमहाशयस्य कृतेः अस्मत्पत्रिकासु प्रकाशितपूर्व्वस्य समन्तकोद्धारव्यायोगस्य रङ्गे प्रयोगेण सुष्ठोवावर्जितानि समागतानां सामाजिकानां मनांसि। तदनन्तरञ्च अशेषगुणाधाराः श्रीमन्मतिलालवर्म्माणः परिषच्छात्रेभ्यः सदक्षिणं गीतादानं व्यदधुः। एवंविधैर्दानादि सत्कार्य्यैः सफलो भवतु तेषां धनसञ्चय इति सुतरां प्रार्थ्यत इति शम्।




## ভারতবর্ষমধ্যে সর্ব্বাপেক্ষা বৃহৎ, অকৃত্রিম ও সুলভ

# আয়ুর্ব্বেদীয় ঔষধালয়

হেড আফিস--পটুয়াটুলী ষ্ট্রীট, ঢাকা। কারখানা--স্বামীবাগ রোড, ঢাকা

কলিকাতা হেড আফিস—৫২।১ বিডন ষ্ট্রীট। টেলি :— "শক্তি" ঢাকা।

প্রত্যেক শাখাতেই সুদক্ষ কবিরাজ নিযুক্ত আছেন ; তাঁহারা বিনামূল্যে ব্যবস্থা দেন।

ভারত-রাষ্ট্রীয় মহাসভার সভাপতি

## দেশবন্ধু চিত্তরঞ্জন দাশ মহাশয় বলেন :—

ঢাকা শক্তি ঔষধালয়ের কারখানার কার্য্যকলাপে আমি পরম প্রীত হইয়াছি, পরিচালনা কার্য্য বিশেষ নিপুণভাবে, সুশৃঙ্খল ও সুব্যবস্থার সহিত নির্ব্বাহিত হয়, পরিদর্শন-প্রণালী যেরূপভাবে সম্পাদিত হইতেছে তাহা হইতে উৎকৃষ্টতর প্রণালী কল্পনায়ও আনা যায় না।

(স্বাক্ষর) সি, আর, দাশ।

| | | | |
|---|---|---|---|
| দশনসংস্কার চূর্ণ | ৶০ কৌটা। | ম্যালেরিয়া ও সর্ব্ববিধ জ্বরের কুলান্তক— | |
| দাদমার | ৶০ কৌটা। | জ্বরান্তক যোগ | ॥০ সপ্তাহ |
| বৃহৎ খদির বটিকা | ৶০ কৌটা। | অমৃতারিষ্ট | ৸০ শিশি |
| ১ ডজন ১৸০ আনা, ৩ ডজন ৪।০ আনা। | | কলেরান্তক | ।০ কৌটা |

শক্তি বা কর্ম্মযোগ এবং আয়ুর্ব্বেদীয় চিকিৎসা-প্রণালী সম্বলিত ক্যাটালগ পত্র লিখিলে বিনামূল্যে পাইবেন।

# জবাকুসুম তৈল

গুণে অদ্বিতীয়, গন্ধে অতুলনীয়, শিরোরোগের মহৌষধ
এক শিশি ১৲ টাকা, ৩ শিশি ২॥০, ৬ শিশি ৫৲ টাকা, ১
শিশি ৯॥০ টাকা, এক গ্রোস ১০৮৲ টাকা, ডাকমাশুল স্বতন্ত্র

---

# সুবর্ণ কষায়

রক্তদুষ্টির মহৌষধ। শরীরের দুর্ব্বলতা দূর করিয়া কান্তি ও পুষ্টি বর্দ্ধনে অদ্বিতীয়। ১ শিশির মূল্য ১॥০ দেড় টাকা, ৩ শিশি ৩৸০ আনা। ৬ শিশি ৭॥০ সাড়ে সাত টাকা, ডাকমাশুল স্বতন্ত্র।

**সি কে সেন এণ্ড কোং লিমিটেড।**

২৯নং কলুটোলা ষ্ট্রীট, কলিকাতা।

८४५ शकीये भाद्रे
September 1923.

Reg. No. C. 1073.

६ष्ठ वर्षस्य ५म संख्या
Vol. VI. No. 5




संस्कृतसाहित्यपरिषदो मासिकं मुखपत्रम्।

सम्पादकौ— महामहोपाध्यायश्रीदुर्गाचरणसांख्यवेदान्ततीर्थः
श्रीकालीपदतर्काचार्य्यश्च

सहकारिसम्पादकः — श्रीजानकीनाथसाहित्यशास्त्री।



...खण्डमूल्यं ।० चतुराणकम्। [ वार्षिकमूल्यं ३) रूप्यकत्रयम्।
Foreign price 7s. yearly including postage.

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः ।
भाषालोकैर्जनान्धं प्रकाशयतु धीमताम् ॥

१८४५ शकीय-भाद्रे, ६ष्ठ-वर्षस्य ५म-संख्या


## ऋतुविलसितम्

लेखकः—श्रीरामशर्म्मा द्विवेदः

### ग्रीष्मविलासः

अहोरात्रप्रतिष्ठाय जगल्लोचनचक्षुषे ।
ऋत्वङ्गायात्मवाताय नमः संवत्सरात्मने ॥

उत्तप्तयन् भूमितलं प्रचण्डैर्मार्तण्डमुक्तैः किरणैः करालः ।
ग्रीष्मस्य भीष्मो(ऽ)व(नि)नदाहशीलः प्राप्तोऽन्तको रुष्ट इवैष कालः ॥ १
शनैः परिम्लानमुखी वसन्तलक्ष्मीरगादन्तमलं विलस्य ।
म्लानं प्रसूनैर्महता गुणेन सन्तर्प्य लोकं मृदुसौरभेण ॥ २
तारुण्यमर्कं भजति प्रकृष्टं तारुण्यमासादि सहस्रमर्कैः ।
विजृम्भितं पुष्पितमम्बुलेशं विनैव सम्यक् फलितं समृद्धम् ॥ ३
म्लानत्वमायत्सु महीरुहेषु प्रतप्यमानासु वनस्थलीषु ।
म्लानाः पलाशा न भवन्ति नूनं दैवेनुकूले (वत) वद कोऽपवातः ॥ ४
तापाच्छुशुष्कन्नमवेक्ष्य हृद्यं वल्ल्या तनीवल्लितया न मुक्तः ।
अशोषि पूर्वं तरुतस्तु सत्यः प्रियान् विपन्नानपि न त्यजन्ति ॥ ५
वाते वसन्ते परितप्यतेऽद्य भानोर्निदाघेन शुचं प्रपद्य ।
नाल्पं [illegible] सह या नितान्तमपेतरम्यत्वगुणप्रकर्षम् ॥ ६

यथा यथोच्चैरयति रविः खं तथा तथा मार्दवमुज्जहाति ।
करांश्च दण्डानिव राट् प्रजासु प्रतापवान् पातयते न सद्यान् ॥ ७
उद्भावितोऽन्तः प्रभवः प्रकर्षाद्वह्निः परार्थेष्वखिलेषु भानोः ।
धर्मेण सन्नप्रभवाप्य भूरि तीव्रेण मर्माणि भिनत्ति जन्तोः ॥ ८
समीक्षमाणस्य मृगानुपान्ते पोप्लूयमानानक्षताक्रमस्य ।
पञ्चास्यता का हरिणान्तकस्य सिंहस्य मातङ्गविधूननस्य ॥ ९
ये शीतकाले व्यदधुः सखित्वं तानीन देहस्य घना हि बाला ।
तैः शात्रवं ग्रीष्मसखैरिवेष्टं भल्लस्य तापं प्रतिपादयद्भिः ॥ १०
अखर्वगर्वं भुवि विश्रुतायाः कस्तूरिकाया निरपास्य भानोः ।
खरैः करैस्तप्ततनुर्नु वातप्रमीदिशाङ्कामधुना म्लिनाति ॥ ११
कृशीभवन्तो घृणिभिर्निदग्धा मूर्च्छच्छरीरा विकलं भ्रमन्तः ।
ग्रस्तप्रमत्ता हरिणा इवाद्य न क्वापि विश्रामलवं लभन्ते ॥ १२
दोधूयमानैश्च विकीर्यमाणैर्ज्वालैः करालैरुपलप्यमानाः ।
भूम्यो न भूम्योनयनोत्सवानां लोकस्य सन्त्यद्य निरस्तसत्त्वाः ॥ १३
पान्थः पिपासाकुलितः कुमार्गं यान्वारि वारीति निरारटीति ।
उष्णांशुपादैरुपहन्यमानस्तातप्यते पादतले धरायाम् ॥ १४
अ(व्य)रीरहः किं वनितागृहं त्वं मद्राज्यकाले पथिक प्रचण्डः ।
इतीव दण्डेन महातपेन करोति खिन्नं बहुलं निदाघः ॥ १५
नाराशयाः सान्द्रतराः पलाशा निराश्रयाणामिह भीष्मकाले ।
एके शरण्याः शरणान्यभूवन् प्रायेण प्राणानवतां कथञ्चित् ॥ १६
निदाघतप्ता मदनोपतप्ता विशीर्णवलाः शुष्कजलाः प्रतन्वः ।
स्त्रियो नियुक्ता इव वीतभूषा न साम्प्रतं कान्तियुता न नद्यः ॥ १७
वावायमानोऽग्निसखः समीरः संघर्षयन्वन्यतरून् समेतान् ।
उत्पादने बीजमभूद्दवाग्नेरन्तर्हिताग्नीन् परिशुष्कशाखान् ॥ १८
चमूरवो मुक्तरवोऽपि कण्ठीरवः सरावो वयसां समूहः ।
तूर्णं चमर्यो विकलाश्च खड्गा अङ्गानि शीघ्रं विदिशं सरन्ति ॥ १९

प्रचण्डताङ्गीक्रियते वनानि भस्मावशेषाणि चिकीर्षितायाः ।
दानेन सख्यानुदवस्य वृक्षांश्चोच्चिप्यमाणेन समेधितेन ॥ २०
भ्रश्यन्ति मुक्ताशनि-घोरनादं स्कन्धास्तरूणां परिदह्यमानाः ।
ज्वाला रमन्ते विदिशः सधूम्रा दोधुच्यमाणा वत लेढुकामाः ॥ २१
वज्राहतानामिव वारिदाङ्गज्वालाहतानामिव मूर्द्धभूताः ।
दावाहतानामिह पर्वतानां पतन्ति कूटाः कृतभीमरावाः ॥ २२
आलिह्य भूर्भूमिरुहः पशून्वीन् विस्तीर्णभस्मास्फुटधूम्रकेशाः ।
क्रीड़ामिवाहो कुरुते प्रदीप्तज्वालावपुर्दीह(व)मिषाद्विदाघः ॥ २३
रात्रिर्वराकी दिवसैः कृतैर्यैः कृत्तेव पोषाय तनोर्निजायाः ।
श्वासानिलोष्णाञ्जहती कथञ्चित् परैति खिन्ना मग्नकान्तरायाः ॥ २४
तनूनि वासांसि घनातपन्ते पलाशमम्बुन्यपि कृत्रिमाणि ।
हिमानि लोके व्यजनानि रामाः सेव्यन्त एतानि कृतादराणि ॥ २५
समुद्यतस्येव नृपस्य तिग्मरश्मेरिहास्तं सकलोऽपि लोकः ।
सुधांशुरश्मिश्रयणं चिकीर्षुरुत्तप्तखिन्नो हृदयेन वष्टि ॥ २६
सम्यक्तयाऽप्यस्तमिते दिनेशे खल्वाटमूर्धा सलिलं स्थलञ्च ।
अत्याजि तापेन चिराय नैव रामाविहीनास्तु नहि क्षणाय ॥ २७
सायन्तनः शीतलमन्दगामी मल्लीसुगन्धिः पवनो जनस्य ।
छिनत्ति तापं नितरां वयस्यः शिवो(सुखो)पचारेण यथातुरस्य ॥ २८
दधत् सुधापूरमिवेन्दुरत्र सम्प्लावयंश्चन्द्रिकया धरित्रीम् ।
चकोरकाणामिव देहभाजां नेत्रोत्सवं मोदकरः करोति ॥ २९
आसिच्य नीरैर्भवनानि लोका धरागतं तापमपास्य शय्याः ।
विद्याद्‌वापाक्षतसर्वतापा अध्यासते सूक्तिनिषिक्तचित्ताः ॥ ३०
ज्योत्स्नाविताने परितो वितानां प्रसूनतानां सितवस्त्रतानाम् ।
शय्यां श्रयन्ते सुदिताननाभिः सतान्तन्त्वन्तां मुदिता युवानः ॥ ३१
इह प्रसूनव्यजनानि हाराः प्रसूनमुक्ताफलगुम्फिताश्च ।
जनस्य हस्तं हृदयं वयस्या इवातिमोदेन चिरं वृणन्ति ॥ ३२

सचन्दनद्रावसुगन्धिशीतं वचः प्रियायाः स्मरतापमत्र ।
निदाघतापं मनसश्च तापं श्रमं शरीरस्य च हन्ति सद्यः ॥ ३३
पुरार्जितैः पुण्यचयैः समृद्धा निषेवितानामिव योगभाजाम् ।
निःश्वासमात्रा क्षणवद्व्रजन्ति प्रभूतमोदा इह यामवत्यः ॥ ३४

अथ घनवनतापैरागता वोढ्‌ वर्षाः
कृतकृतिरयमुग्रो देववद्भूतिकारी ।
गुरुरिव गुरुतेजास्तापयित्वा शिवाय
व्रजति विहततापो सानुतुष्टो निदाघः ॥ ३५

इत्थं विलस्य भुवि भूसुगिवोग्रधामा
संचोभ्य वारिधिमपि प्रतिकृष्य मेघान् ।
बीजं श्रिया विभवताङ्गवतां शिवाय
भूयोऽपि भर्ग इव यान्सुकृती निदाघः ॥ ३६

इति श्रीलक्ष्मीनारायणपरनाम-श्रीरामशर्म्मद्विवेदिविरचित ऋतुविलासाभिधानकाव्ये प्रथमो ग्रीष्मविलासो नाम सर्गः पर्य्यवसितः ॥

---

## षष्टि-तन्त्र-शास्त्र-परिचयः *

( लेखकः—श्रीसदानन्दभादुड़ी M. A. )

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

अधुनातन-प्रचारस्य साङ्ख्यकारिकाग्रन्थस्य खलु—

"सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य ।
आख्यायिकाविरहिताः परवादविवर्जिताश्चापि ॥"—

---

* परिषदोमासिकेऽधिवेशने पठितोऽयं प्रबन्धः ।

इत्येवान्तिमा कारिका। इह तावदुपलभ्यते यत् साङ्ख्यशास्त्र-प्रणेतृस्य बीजभूत आसीत् कोऽपि ग्रन्थः षष्टितन्त्राख्यः। तत्र "गार्बे" (Garbe)—इत्यभिधानैः शर्मण्यदेशीयैः पण्डितप्रवरैरेवमुच्यते—पुरा षष्टितन्त्राख्यमेकं स्वतन्त्रं शास्त्रमासीत् यत्र स्थितं षष्टिसङ्ख्यकानां तत्त्वानां विवरणम्। एतस्मादेव विषयात् सङ्कलय्य क्वचिदर्व्वाचीनयुगे शास्त्रान्तरं साङ्ख्यशास्त्राभिधं कल्पितमभूदिति। एतन्मतं अस्मद्देशीयेभ्य आचार्य्यवर्य्येभ्यो न रोचते। तेषां खलु मते षष्टिसङ्ख्यक-तत्त्व-संग्राहकं श्रीमत्कपिलप्रवर्त्तितं मूलीभूतं साङ्ख्यदर्शनमेव षष्टितन्त्रा-परनामकम्। तत्त्वकौमुद्यां श्रीमद्वाचस्पतिमिश्रचरणैः समुद्धृते राजवार्त्तिकपाठेऽप्येषैव षष्टितन्त्रसम्बन्धिनी पर्य्यालोचना।

षष्टितन्त्राख्ये शास्त्रे संगृहीतानि तत्त्वानि कानि किंलक्षणानि वेत्यत्र बहुविधा विप्रतिपत्तिरुपलभ्यते। तत्र राजवार्त्तिककारा एवमाहुः—पञ्चाशत् साङ्ख्यशास्त्रीया भावास्तथा च दश तत्त्वानि "वस्तु" "ऐक्यं" "प्रकृतेरर्थवत्प्रवृत्तिकत्वं" "पुरुषविलक्षणत्वं" पुरुषार्थ-साधकत्वं च, किञ्च पुरुषाणामानन्त्यं परस्परभिन्नत्वं प्रकृतिसंयोग-वियोगौ चेतीमानि षष्टिसङ्ख्यकानि भवन्ति। अयं च राजवार्त्तिक-कृतामभिमतस्तत्त्वविभाग-प्रकारः प्राचीनतरयुगे श्रीमत्परमार्थपादै-र्विरचितायां साङ्ख्यकारिकाव्याख्यायामुपलक्ष्यते। एतादृशस्य विभाग-प्रकारस्य साङ्कर्य्यादिदोषकलुषितत्वं पर्य्यालोच्य नारायणतीर्थाभिधानेन केनचिदर्व्वाचीनेन साङ्ख्याचार्य्येण स्वकृतायां साङ्ख्यकारिकाटीकायां षष्टितन्त्रशास्त्रीयपदार्थानां निर्द्देशोऽन्यथा सम्पादितः। एतस्य तावन्मते लक्षितपूर्व्वाः पञ्चाशद्भावास्तथा च पुरुषः प्रकृतिर्बुद्धिरहङ्कारो गुणत्रयं तन्मात्राणीन्द्रियाणि स्थूलभूतानीति च दश पदार्थाः षष्टिसङ्ख्यका भवन्ति। इयमपि विभागप्रक्रिया बहुदोषविद्धेति स्फुटमेव।

किञ्च, षष्टितन्त्रशास्त्रस्योल्लेख आर्हतग्रन्थेष्वप्युपलब्धि-विषयता-मायाति। तत्र अनुयोगद्वारसूत्रे "काविलम्" इति "सट्ठितन्तम्"

इति च शास्त्रयुगलस्य परस्परभिन्नतया निर्देशो दृश्यते। औपपातिकसूत्रेऽपि "कविला" इति "साङ्खजोगी" इति च द्विविधाः शास्त्रकारा उदाहृताः। इह तावदौपपातिकसूत्रव्याख्याता अभयदेवः "कविला" इत्यस्य निरीश्वरसाङ्ख्यमतवादिन इति "साङ्खजोगी" इत्यस्य च सेश्वरसाङ्ख्यमतानुसारीत्येवम्विधमर्थविशेषमङ्गीकरोति। एतस्य तावन्मते सेश्वरं योगदर्शनं सेश्वरसाङ्ख्यदर्शनात् सर्वथा विलक्षणम्। सेश्वरं यत् साङ्ख्यदर्शनं तदेव श्रीमद्भागवतादिषु कपिलदेवहूतिसंवादादिप्रस्तावे लब्धप्रसरमभूत्।

किञ्च एतस्य षष्टितन्त्रशास्त्रप्रतिपादितस्य सेश्वरसाङ्ख्यदर्शनस्य परिचयः पाञ्चरात्रसम्प्रदायप्रवर्त्तितायामहिर्बुध्न्यसंहितायां विस्तरतया विवृतो विद्यते। अस्याः संहिताया द्वादशेऽध्याये वेदशास्त्रं योगशास्त्रं पाशुपतशास्त्रं सात्वतशास्त्रं साङ्ख्यशास्त्रमिति च शास्त्रपञ्चकं वर्णितमास्ते। एतेषां शास्त्राणां विस्तरतया विवरणविशेषा अपि तत्रोपलभ्यन्ते। तत्र साङ्ख्यशास्त्रं तन्त्रत्वेन वर्णितं, तन्त्रसरणीमनुसृत्य विषया विभागश उपनिबद्धाः, विषयाश्च षष्टिसङ्ख्यकास्तत्र दर्शिताः। एतेष्वष्टाविंशतिः प्रकृतिसंज्ञकाः द्वात्रिंशच्च विकृतिसंज्ञकाः। तत्र प्रकृतिषु, प्रसिद्धानां साङ्ख्यीयतत्त्वानां पञ्चविंशतिसङ्ख्यकानां, तथा पदार्थान्तराणां चान्तर्भावः। विकृतिषु तु तेषामेव विकाराणामन्तर्भावो ये तावत् निर्विकारेऽप्यात्मनुत्पद्यन्ते सृष्टयादिक्रियासंसर्गवशात्। ब्रह्म पुरुषः शक्तिरिति च तत्त्वत्रयं तत्र मौलिकतया व्याख्यातम्।

किञ्च तस्यामेवाहिर्बुध्न्यसंहितायां प्रकरणान्तरे षष्टिसहस्रश्लोकात्मकस्य षष्टितन्त्राख्यस्य शास्त्रविशेषस्य साङ्ख्यदर्शनमूलभूतस्य रचयिता पञ्चशिखनामा कोऽपि प्रसिद्धः। इयं हि सांहितिकी प्रसिद्धिर्नाधुनिकानां श्रद्धाभाजनतां भजते। एषां मते साङ्ख्यकारिका-ग्रन्थे साङ्ख्यसम्प्रदायवर्णनायामितस्याः प्रमादबहुलायाः प्रसिद्धेर्मूलमस्ति

सन्धेयम्। तत्र हि साङ्ख्याचार्य्याणां तृतीयत्वेन साङ्ख्यशास्त्रस्य प्रचारयितृत्वेन च पञ्चशिखाचार्य्यो वर्णितः।

बालरामाख्यः साङ्ख्यव्याख्याता वार्षगण्यं नाम कमपि षष्टितन्त्र-शास्त्रस्य रचयितृत्वेन वर्णितवान्। एतन्मतस्य द्रढ़यितृ प्रमाणमपि न दुर्लभम्। तत्र योगदर्शनभाष्ये (६।१३) श्रीमद्व्यासपादैः कश्चिन्नि-बन्धांशः समुद्धृतो यो हि मिश्रचरणैर्भामतीटीकायां वार्षगण्यकर्तृकत्वेन स्पष्टतया निर्दिष्टः। वार्षगण्यीयात् षष्टितन्त्रात् स निबन्धांशः संगृहीत इति भामतीकारस्य मतं सुतरां स्फुटमेव। किञ्च चीनदेशे ये साङ्ख्य-ग्रन्थाः समाविष्कृतास्तेष्वेकस्मिन् वार्षगण्यविरचितस्य साङ्ख्यशास्त्रस्य संस्कारकतया कश्चिदाचार्य्य उल्लिखितः। अयं विन्ध्यवासः साङ्ख्य-कारिकारचयितेश्वरकृष्ण एवेत्यत्र पण्डितप्रवरैरितिहासकैराधुनिकै-र्बहुविधानि प्रमाणानि प्रकटीकृतानि।

सर्व्वमेतत् पर्य्यालोचयतामनुमितिरियं सुलभा सम्पद्यते। अहि-र्बुध्न्यसंहितायां या षष्टितन्त्रपदार्थविवृतिरुपलभ्यते तत इदमेव गम्यते [illegible]त् षष्टितन्त्राख्यं शास्त्रं सेश्वरस्य साङ्ख्यदर्शनस्यैव मूलीभूतमासीत् [illegible] तु निरीश्वरस्य कापिलमतस्य। तत्र सौगतमतं जीवजगदस्तित्व-निरासकं प्रसृमरं परीक्ष्य तन्निरोधसौकर्य्याय तादृशमेव निरीश्वर-मास्तिकदर्शनं वेदमूलकं किमपि कल्पितमभूत्। ततः षष्टितन्त्र-दर्शनादीश्वरकल्पनामपास्येदं नवीनं मतं जातं बौद्धवादनिरोधकम्। एवमेवेश्वरनिराकरणेन यत् प्राचीनस्य सेश्वरसाङ्ख्यदर्शनस्य पुनः सम्पादनं जातं तदेवास्य संस्कार इत्युक्तम्। अयं हि संस्कारः श्रीमदीश्वरकृष्णेनैव साङ्ख्यकारिकाग्रन्थे सम्पादितः। नवीनानां रीतिमनुसृत्य स्फुटतरीकृतोऽयं सम्बन्धः षष्टितन्त्रसाङ्ख्यकारिका ग्रन्थयोरिति शम्।

---

# उपासना

लेखकः—श्रीशरत्कमलभट्टाचार्य्यः।

का नाम उपासनेति प्रथमत आलोचनीयम्। "उप" समीपे "आस्यते" उपविश्यते यया सोपासनेति यौगिकार्थ उपासनाशब्दस्य। तथाच मानवैर्य्यया क्रियया भगवत्सन्निधिर्लभ्यते सा क्रियैवोपासनेति निर्गलितार्थः। भगवत्सन्निधिलाभ एव मानवजीवनस्यामृतमय-मुद्देश्यमामनन्ति मुनयः। तदुक्तं भगवता याज्ञवल्क्येन—

"अयन्तु परमो धर्म्मो यद् योगेनात्मदर्शनम्॥"

भगवत्सन्निधिलाभ इति परमपुरुषार्थस्यापवर्गस्य नामान्तरम्। अत एव सार्ष्टिसालोक्यसारूप्येति मुक्तेर्भेदमाहुः पूर्व्वाचार्य्याः। ततश्च मुक्तिप्रापिका या क्रिया सा उपासनेति फलितम्॥

का नाम मुक्तिर्या उपासनया लभ्यते कथञ्चा सा परमपुरुषार्थः? अत्राहुः सांख्याः—

"अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः।"

आध्यात्मिकमाधिभौतिकमाधिदैविकञ्चेति त्रिविधं दुःखम्। आध्यात्मिकमपि द्विविधं शारीरं मानसञ्च। शारीरं वातपित्तश्लेष्मणां वैषम्यनिमित्तम्। मानसं कामक्रोधलोभमोहभयेर्ष्याविषादविषय-विशेषादर्शननिबन्धनम्। सर्व्वञ्चैतदान्तरोपायसाध्यत्वादाध्यात्मिकं दुःखम्। बाह्योपायसाध्यञ्च दुःखं द्वेधा आधिभौतिकमाधिदैविकञ्च। तत्र आधिभौतिकं मानुषपशुपक्षिसरीसृपस्थावरनिमित्तम्, आधिदैविकं यक्षराक्षसविनायकग्रहाद्यावेशनिबन्धनम्। *

* सांख्यतत्त्वकौमुदी।

तदेतद्दुःखत्रयस्यात्यन्तनिवृत्तिः पुनरावृत्त्यभाव (?) एवात्यन्तपुरुषार्थो मुक्तिरिति कीर्त्त्यते। जगतीतलेऽस्मिन्नेतादृशः कोऽपि न दृश्यते यस्तावन्न पीड्यते पूर्व्वोक्तैर्दुःखजातैः। दुःखजातं गुणविपरिणामः, अतो गुणबद्धा जीवाः कथं नाम प्रभुवन्ति तदतिवर्त्तितुम्? तदेतदुक्तम् भगवता

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः॥

दृश्यते जीवानां सर्व्वदैव तत्तद्दुःखपरिहाणाय नानाविध उपायः। तेन निवर्त्तते दुःखं किन्तु पुनरावर्त्तते इति तु महद्दुःखम्। तदुक्तमाचार्य्यैः

"दृष्टे सापार्थो चेन्नैकान्तात्यन्ततोऽभावा"दिति॥

दुःखैरापीड्यमानैर्ज्जीवैस्तत्परिहाराय यत्साधनमवलम्ब्यते तदपि दुःखमेव, दुःखमेकं परिहातुमपरं दुःखमापद्यत इति नावबुध्यते भ्रान्तिविजृम्भितलोचनतया। तदेतत् सुष्ठु पवर्णितं न्यायभाष्ये वात्स्यायनैः—"अयं खलु सुखसम्वेदने व्यवस्थितः सुखं परमपुरुषार्थं मन्यते न सुखादन्यन्निःश्रेयसमस्ति, सुखे प्राप्ते चरितार्थः कृतकरणीयो भवति। मिथ्यासङ्कल्पात् सुखे तत्साधनेषु च विषयेषु संरज्यते, संयुक्तः सुखाय घटते, घटमानस्यास्य जन्मजराव्याधिप्रायणानिष्टसंयोगेष्टवियोगप्रार्थितानुपपत्तिनिमित्तमनेकविधं यावद्दुःखमुत्पद्यते, तं दुःखविकल्पं "सुख"मित्यभिमन्यते, सुखाङ्गभूतं दुःखं न दुःखमनापाद्य शक्यं सुखमवाप्तुं, तादर्थ्यात् "सुखमेवेद"मिति सुखोपहतप्रज्ञो जायस्व म्रियस्व सञ्चरेति संसारं नातिवर्त्तते" इति। वर्णितवान् भगवान् गर्गश्च दुःखखिन्नानां जीवानामनुरूपामाक्षेपोक्तिम्—

"यातायातेन क्लान्तोऽस्मि दीर्घसंसारवर्त्मनि।
त्वद्दासदासदासानां दासत्वं देहि मे प्रभो॥"

साम्प्रतं सूपपन्नं दुःखस्वरूपम्। उपपन्नञ्च लौकिकेनोपायेन नापयाति

दुःखजातमिति। यावन्मुक्तिर्नायास्यति तावन्न यास्यत्येव दुःखजातम्। तदुक्तं भगवदक्षपादचरणैः

"तदभावश्चापवर्गः"—इति।

व्याख्यातवन्तश्च वार्त्तिककाराः (उद्योतकराचार्य्याः) "तस्य शरीरादेरुपलब्धिकारणस्य अभावोऽपवर्गः—इति। यस्मात् सर्व्वं दुःखबीजं दुःखञ्चापवर्गे विच्छिद्यते तस्मात् सर्व्वदुःखेन विमुक्तिरपवर्गः इति॥ भगवती श्रुतिरपि बहुधैतदेव प्रतिपादितवती तत् सुधीभिरनुसन्धेयम्। एषा हि मुक्तिस्तत्त्वज्ञानसाध्येति सिद्धान्तः। तथाचात्र बृहदारण्यकश्रुतिः—

"आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः"।

स्वपत्नीमुपदिदेश मैत्रेयीं ब्रह्मविद् भगवान् याज्ञवल्क्यः "आत्मा साक्षात्कर्त्तव्य" इति। कथमात्मनः साक्षात्कारः उपपद्यते अत्र हेतुमाह "श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति। "श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः। मत्वा च सततं ध्येय एते दर्शनहेतवः"। स्मृतिरियं पूर्व्वोक्तां श्रुतिं व्याख्यातवती। आचार्य्यपादैरप्युदयनैर्न्यायचर्च्चेयमीशस्य मननव्यपदेशभाक्। उपासनैव क्रियते श्रवणानन्तरागता" (१) "आगमेनानुमानेन ध्यानाभ्यासरसेन च। त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तम" (२) मित्युपक्रम्य "इत्येवं श्रुतिनीतिसंप्लवजलैर्भूयोभिराक्षालिते, येषां नास्पदमादधासि हृदये ते शैलसाराशयाः। किन्तु प्रस्तुतविप्रतीपविषयोऽप्युच्चैर्भवच्चिन्तकाः कालेे कारुणिक त्वयैव कृपया ते तारणीया नराः"। इत्युपसंहरद्भिरेष एव सिद्धान्तो बहुधा विस्तारितो दृढ़ीकृतश्च न्यायकुसुमाञ्जलिग्रन्थे। भगवती श्वेताश्वतरश्रुतिरपि

"यदा चर्म्मवदाकाशं वेष्टयिष्यन्ति मानवाः।
तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति॥"

इत्यनेन परमात्मतत्त्वसाक्षात्कारं विना मुक्तिर्न सम्भवत्येवेति प्रति-

पादितवती। ततश्च श्रवणमनननिदिध्यासनरूपा त्रिधा श्रौत्युपासनेति फलितम्। तथाहि परमात्मस्वरूपमादौ श्रुतितोऽवगन्तव्यम्, ततो यद्रूपेण श्रवणं तद्रूपेणैव मननं यद्रूपेण मननं तद्रूपेणैव निदिध्यासितव्यम्। निदिध्यासनात् परमात्मसाक्षात्कार उपपद्यते तादृशेनात्मसाक्षात्कारेण त्रिविधदुःखात्यन्तनिवृत्त्यात्मकपरमपुरुषार्थापरनामापवर्गः साधकं सादरमालिङ्गति। एवञ्चोपपन्नमिदं मुक्तिप्रापिका क्रियैवोपासनेति, भगवत्सन्निधिलाभोऽपवर्ग इत्यप्युपपन्नम्।

---

## किं भवभूत्युपज्ञं सीता-रामयोः पुनर्मिलनम्?

लेखकः—श्रीसुरेन्द्रनाथमजुमदारशास्त्री एम, ए

सुविदितमेव एतत् संस्कृतसाहित्यरसिकानां यत् महामुनिश्रीवाल्मीकिविरचिते रामायणे अश्वमेधयज्ञान्ते सीतादेव्याः पातालप्रवेश एव वर्णितः, न तु सीतारामयोः पुनर्मिलनम्। भवभूतिप्रणीते उत्तररामचरिते तु तयोर्मिलनं वर्णितम्। एष चात्र सहृदयानां सिद्धान्तो यत् संस्कृते वियोगान्तं नाटकं न दृश्यते, अतो भवभूतिः वियोगान्तमपि वस्तु अन्यथाकृत्य मिलनान्तत्वेन वर्णितवान्।

यद्यप्येवमेव सिद्धान्तितं सहृदयैस्तथापि किं भवभूत्युपज्ञं सीतारामयोः पुनर्मिलनं न वेति आलोचनीयम्। यतः प्राचीनसंस्कृतसाहित्येषु कुत्रापि मिलनान्तं रामचरितं दृश्यते चेत्, अपसिद्धान्त एव एषः। एतदर्थं मया गवेषितम्, प्राप्तं च मिलनान्तम् रामचरितम्।

सुप्रसिद्धे कथासरित्सागरे (अलंकारवती-लम्बके) कौशाम्बीश्वरस्य वासवदत्ता-जानेरुदयनस्य पुत्रं नरवाहनदत्तम् अलंकारवतीनाम्न्याः

विद्याधर्या विरहं सोढ़ुमसमर्थं ज्ञात्वा अलंकारवत्या माता काञ्चनप्रभा तस्य आश्वसनार्थं रामचरितं वर्णितवती। इदं रामचरितं मिलनान्तम्। अस्य च आर्षात् रामायणात् उत्तरकाण्ड-वर्णितवस्तुनि बहु पार्थक्यम् च वर्त्तते। सहृदयानां मुदे चात्र लिख्यते सोऽंशः "किमिकरात्रिविश्लेषे ह्यधैर्यं युवयोरिदम्॥ (युवयोः= अलंकारवतीनरवाहनदत्तयोः)

अनिश्चितावधिं धीराः सहन्ते विरहं चिरम्।
श्रूयतां रामभद्रस्य सीतादेव्यास्तथा कथा॥ ५८
.......................................
अथावृत्तस्य वनतः शासतो भरतार्पितम्।
तस्य राज्यमयोध्यायां सीता गर्भमधत्त सा॥ ६५
तावच्चात्र प्रजाचेष्टां ज्ञातुमल्पपरिच्छदः।
स्वैरं परिभ्रमन्नेकं सोऽपश्यत् पुरुषं प्रभुः॥ ६६
हस्ते गृहीत्वा गृहिणी निरस्यन्तं निजाद्गृहात्।
परस्येयं गृहमगादिति दोषानुकीर्त्तनात्॥ ६७
रक्षोगृहोषिता सीता रामदेवेन नोज्झिता।
अयमभ्यधिको यो मामुज्झति ज्ञातिवेश्मगाम्॥ ६८
इति तद्गृहिणीं तां च ब्रुवतीं तं निजं पतिम्।
रामो राजा स शुश्राव खिन्नश्चाभ्यन्तरं ययौ॥ ६९
लोकापवादभीतश्च सीतां तत्याज तां वने।
सहते विरहक्लेशं यशस्वी नायशः पुनः॥ ७०
सा च गर्भालसा दैवाद्वाल्मीकेः प्रापदाश्रयम्।
तेनर्षिणा समाश्वास्य तत्रैव ग्राहिता स्थितिम्॥ ७१
नूनं सीता सदोषेयं त्यक्ता भर्त्रान्यथा कथम्।
तदेतद्दर्शनान्नित्यं पापं संक्रामतीह नः॥ ७२
वाल्मीकिः कृपया चैतां निर्वासयति नाश्रमात्।
एतद्दर्शनजं पापं तपसा च व्यपोहति॥ ७३

तदेत यावद्गच्छामो द्वितीयं कञ्चिदाश्रमम् ।
इति संमन्त्रयामासुस्तत्रान्ये मुनयस्तदा ॥ ७४
तद्बुद्ध्वा तान् स वाल्मीकिरब्रवीन्नात्र संशयः ।
शुद्धैषा प्रणिधानेन मया दृष्टा द्विजा इति ॥ ७५
तथाप्यप्रत्ययस्तेषां यदा सीता तदभ्यधात् ।
भगवन्तो यथा वित्थ तथा शोधयतेह माम् ॥ ७६
अशुद्धायाः शिरश्छेदनिग्रहः क्रियतां मम ।
तच्छ्रुत्वा जातकरुणा जगदुर्मुनयोऽत्र ते ॥ ७७
अस्त्यत्र टीटिभसरो नाम तीर्थं सदृद्वने ।
टीटिभी हि पुरा कापि भर्त्त्रान्यासङ्गशङ्किना ॥ ७८
मिथ्यैव दूषिता साध्वी चक्रन्दाशरणा भुवम् ।
लोकपालांश्च तैस्तस्याः शुद्ध्यर्थं तद्विनिर्मितम् ॥ ७९
तत्रैषा राघववधूः परिशुद्धिं करोतु नः ।
इत्युक्तवद्भिस्तैः साकं जानकी तत् सरो ययौ ॥ ८०
यदार्यपुत्रादन्यत्र न स्वप्नेऽपि मनो मम ।
तदुत्तरेयं सरसः पारमम्ब वसुन्धरे ॥ ८१
इत्युक्त्वैव प्रविष्टा च तस्मिन् सरसि सा सती ।
नीता च पारमुत्सङ्गे कृत्याभिभूतया भुवा ॥ ८२
ततस्तां ते महासाध्वीं प्रणेमुर्मुनयोऽखिलाः ।
राघवं शशपुश्चैच्छंश्च तत्परित्यागमन्युना ॥ ८३
युष्माभिरार्यपुत्रस्य न ध्यातव्यममङ्गलम् ।
शपुमर्हथ मामेव पापामञ्जलिरेष वः ॥ ८४
इति यवारयामास सीता तान्सा पतिव्रता ।
तेन ते मुनयस्तुष्टास्तस्याः पुत्राशिषं ददुः ॥ ८५
ततः सा तत्र तिष्ठन्ती समये सुषुवे सुतम् ।
तं च नाम्ना लवं चक्रे स वाल्मीकिमुनिः शिशुम् ॥ ८५

बालमादाय तं तस्यां गतायां स्नातुमेकदा।
तेन शून्यं तदुटजं दृष्ट्वा सोऽचिन्तयन्मुनिः॥ ८७
स्थापयित्वार्भकं याति स्नातुं सा तत् क्व सोऽर्भकः।
नीतः स श्वापदेनेह नूनमन्यं सृजामि तत्॥ ८८
स्नात्वागतान्यथा सीता न प्राणान् धारयेदिह।
इति ध्यात्वा कुशैः कृत्वा पवित्रं निर्ममेऽर्भकम्॥ ८९
लवस्य सदृशं तच्च स तथा स्थापयन्मुनिः।
आगता तं च सा दृष्ट्वा मुनिं सीता व्यजिज्ञपत्॥ ९०
स्वकोऽयं मे स्थितो बालस्तदेषोऽन्यः कुतो मुने।
तच्छ्रुत्वा स यथावृत्तमुक्त्वा मुनिरुवाच ताम्॥ ९१
भवितव्यं गृहाणैतं द्वितीयमनघे सुतम्।
कुशसंज्ञं मयायं यत् स्वप्रभावात् कुशैः कृतः॥ ९२
इत्युक्ता तेन मुनिना सीतालवकुशौ सुतौ।
तेनैव कृतसंस्कारौ वर्द्धयामास तत्र तौ॥ ९३
बालावेव च तौ दिव्यमस्त्रग्राममवापतुः।
विद्याश्च सर्वा वाल्मीकिमुनेः क्षत्रकुमारकौ॥ ९४
एकदा आश्रममृगं हत्वा तन्मांसमादतुः।
अर्चालिङ्गं च वाल्मीकेश्चक्रतुः क्रीड़नीयकम्॥ ९५
तेन खिन्नो मुनिः सोऽथ सीतादेव्यानुनाथितः।
प्रायश्चित्तं तयोरेवमादिदेश कुमारयोः॥ ९६
गत्वा कुबेरसरसः स्वर्णपद्मान्ययं लवः।
तदुद्यानाच्च मन्दारपुष्पाण्यानयतु द्रुतम्॥ ९७
तैरेतौ भ्रातरावेतल्लिङ्गमर्चयतामुभौ।
तेनैतयोरिदं पापमुपशान्तिं गमिष्यति॥ ९८
एतच्छ्रुत्वैव कैलासं स बालोऽपि लवो ययौ।
आचस्कन्द कुबेरस्य सरश्चोपवनं च तत्॥ ९९

निहत्य यज्ञानादाय पद्मानि कुसुमानि च ।
आगच्छन् पथि स श्रान्तो विशश्राम तरोस्तले ॥ १००
तत्रान्तरे च रामस्य नरमेधे सुलक्षणम् ।
चिन्वन् पुरुषमागच्छत् तेन मार्गेण लक्ष्मणः ॥ १०१
स लवं समराहूतं मोहनास्त्रेण मोहितम् ।
क्षत्रधर्मेण बद्धां तमयोध्यामनयत् पुरीम् ॥ १०२
तावच्च सीतामाश्वास्य लवागमनदुःखिताम् ।
वाल्मीकिः स्वाश्रमे तत्र ध्यानी कुशमभाषत ॥ १०३
नीतोऽयोध्यामवष्टभ्य लक्ष्मणेन सुतो लवः ।
गच्छ मोचय तं तस्मादेभिरस्त्रैर्विनिर्जितात् ॥ १०४
इत्युक्त्वा दत्तदिव्यास्त्रस्तेन गत्वा कुशस्ततः ।
रोध्यमानामयोध्यायां यज्ञभूमिं रुरोध सः ॥ १०५
जिगाय लक्ष्मणं चात्र तन्निमित्तं प्रधावितम् ।
युद्धे दिव्यैर्महास्त्रैस्तैस्ततो रामस्तमभ्यगात् ॥ १०६
सोऽपि प्रभावाद्वाल्मीकेर्जेतुं नास्त्रैः शशाक तम् ।
कुशं यत्नेन पप्रच्छ कोऽयस्ते को भवानिति ॥ १०७
कुशस्ततोऽब्रवीद्भ्राता लक्ष्मणेनाग्रजो मम ।
आनीत इह तस्याहं मोचनार्थमिहागतः ॥ १०८
आवां लवकुशौ रामतनयाविति जानकी ।
माता नौ वक्ति चेत्युक्त्वा तद्वृत्तान्तं शशंस सः ॥ १०९
ततः सवाष्पो रामस्तं लवमानाय्य तावुभौ ।
कण्ठे जग्राह नैषोऽहं पापी राम इति ब्रुवन् ॥ ११०
अथ सीतां प्रशंसत्सु वीरोऽपश्यत् सुतौ शिशू ।
पौरेषु मिलितेष्वत्र स तौ रामोऽग्रहीत् सुतौ ॥ १११
आनाय्य सीतादेवीं च वाल्मीकेराश्रमात्ततः ।
तया सह सुखं तस्थौ पुत्रन्यस्तभरोऽथ सः ॥ ११२

एवं सहन्तौ विरहं धीरास्थिरमपीदृशम्।
न सहेथे युवां पुत्री कथमेकामपि क्षमाम्॥ ११३
इत्यात्मजामलंकारवतीं परिणयोत्सुकाम्।
नरवाहनदत्तं च तमुक्त्वा काञ्चनप्रभा॥ ११४
नभसा प्रातरागन्तुमगादादाय तां सुताम्।
नरवाहनदत्तोऽपि कौशाम्बीं विमना ययौ॥ ११५
कथासरित्सागरः ८।१।६६........

यदस्यत्रानैक्यमार्षात् रामायणात् तदत्र निर्दिष्टव्यम्—(१) अत्र रामस्य सीतया सह मिलनम् वर्णितम्—नतु सीतायाः पातालप्रवेशः। (२) लव एव सीतागर्भसमुद्भवः सुतः। कुशस्तु वाल्मीकिमन्त्रप्रभावात् जातः। एष वृत्तान्तः वङ्गेषु ज्ञात एव। (३) रामस्य नरमेधयज्ञसम्पादनम् कुत्रापि न श्रुतम्। (४) लवकुशयोः रामलक्ष्मणाभ्यां सह संग्रामः। (५) अयोध्यायां जातश्च सः। न तु वाल्मीकितपोवने (यथा पद्मपुराणे उत्तरचरिते च वर्णितम्।) (६) सीतायाः सतीत्वपरीक्षार्थं वह्निपरीक्षा। अत्र तद्व्यतिरिक्ता जलपरीक्षापि।

कथासरित्सागरः काश्मीरक-महाकवि-श्रीसोमदेवभट्टेन द्वादशशताब्द्यां विरचितः। ग्रन्थश्चायं प्राकृतभाषाणामन्यतमया पैशाचीत्याख्यया भाषया गुणाढ्येन रचितायाः बृहत्कथायाः संक्षेपानुवादरूपः। बृहत्कथा दण्डि-बाणभट्टादिभिः प्रशंसिता। अतः खिृष्टीयषष्ठशताब्द्याः प्राक् प्रणीता। वर्णिताश्चात्र शातवाहननागार्जुनादयः सुप्रसिद्धाः जनाः। अतः खिृष्टीयप्रथमशताब्द्याः प्राक् नेयं प्रणीता। इयञ्चाधुना लुप्ता। अस्याश्च सारसंग्रहचतुष्टयम् विद्यते। एकी द्रविड़भाषया। अन्ये संस्कृतभाषया। तेषां प्रथमो बृहत्कथाश्लोकसंग्रहः फरासिदेशीय--सुप्रसिद्धाध्यापक-लेभि-महोदयस्य शिष्येण लाकोटाख्येन मुद्रयितुमारब्धः। ग्रन्थश्चायं नेपाले महामहोपाध्यायैः श्रीमद्धरप्रसादशास्त्रिपादैराविष्कृतोऽभूत्। द्वितीयः क्षेमेन्द्रविरचिता

बृहत्कथामञ्जरी काश्मीरे एकादशशताब्द्यां विरचिता । तृतीय:— कथासरित्सागर: ॥ मञ्जरी-श्लोकसंग्रहौ अतिसंक्षिप्तौ । अत: कथासरित्सागर एव सर्वत्र पठ्यते । उक्तञ्चास्य ग्रन्थकर्त्रा—

"यथा मूलं तथैवैतत् न मनागप्यतिक्रम: ।
ग्रन्थविस्तरसंक्षेपमात्रं भाषा च भिद्यते ॥ १।१०॥" इति

बृहत्कथाधुना लुप्ता । काचित् कथा मूलबृहत्कथायामासीत् न वा इति विचारे यदि सा कथा एकाधिके संग्रहे दृश्यते तर्हि सा मूलग्रन्थे एव आसीत् इति अनुमीयते । इदं च मिलनान्तं रामचरितं कथासरित्सागरोक्तम् कथामञ्जर्याम् अपि लभ्यते । बृहत्कथामञ्जरी अति संक्षिप्ता । अतस्तत्रोल्लिखिता रामकथापि अतीव संक्षिप्ता । तथापि तत्र सीताया: जलपरीक्षा—

"टिट्टिभोऽब्धितटे जायां दृष्ट्वान्येन समागताम् ।
प्रतिश्रयार्थिना भर्त्तृधिया निर्व्याजमानसाम् ॥" (पृ:५१२।४५श्लो:)

इत्युल्लिखिता । सीताया: पुनर्मिलनञ्च—

पुत्रौ कुशलवाभिख्यौ-उक्तौ वाल्मीकिना स्वयम् ।
तौ प्राप्य रामो दयितां विशुद्धामानिनाय ताम् ॥ ५०
इत्येवं राघव: कान्तावियोगं धैर्य्यसागर: ।
सेहे क्षणं त्वमप्येवं (त्वं = नरवाहनदत्त:) सहस्व स्वप्रियागमे ॥५१

इति स्पष्टं कथितम् । एवं चैषा मिलनान्ता रामकथा बृहत्कथायामासीत् इत्यत्र नास्ति संदेह: । सुपरिचितश्चासीत् भवभूतिर्बृहत्कथाया: । बृहत्कथायां वर्णिता मदिरावत्या: कथा एव मालतीमाधवस्य मूलम् । अतो मिलनान्तं रामचरितमपि भवभूतिना गुणाढ्यादेव गृहीतम् ।

---

# प्रसूनवाटिका—गुलिस्ताँ

अनुवादकः—श्रीरामस्वामी

७ आख्यानम् । कश्चिन्नृपतिः केनचित् पारसीकदासेन सा-
नावमारुरोह । दासेनामुना नेतः प्राक् स्रोतस्वती प्रत्यक्षीकृताऽऽसी-
नापि नौकारोहणक्लेशोऽनुभूतः । ततः स तरणिमधिष्ठाय रोदि-
सारेभे । वपुषि च तस्य वेपथुराविर्बभूव । अनेन किल प्रतिब-
सत्रोचितः प्रमोदः । भूभृतां हि पेलवमन्तःकरणं नैतादृग्भारस-
प्रायेण सम्भवति । अतस्तस्मिन्ननुपाये विपीदति कश्चिद्विचक्षणस्त-
समारूढो भिषग्वरः क्ष्मापतिमुपेत्य प्रोवाच—'समादिश्यते चे-
केनचिदुपायेनाहं तं मौनमवलम्बयामि ।' इति । नृपतिरवदत्—'ए-
नितरामनुकम्पा मयि प्रकटिता स्यात् ।' इति । सोऽपि निदेशमासा-
दासं तं तरङ्गिण्यां निचिक्षेप । कियद्वारं निमज्जनोन्मज्जने समनुभ-
तस्मिन् शिरोरुहेष्वादाय पुरतस्तरणेरानयत् आलम्बयच्च तं कराभ्
केनिपातके । इत्थं यदा स सलिलाद् बहिरागमत् कोणमेकमाश्रि
निपण्णः समास्थात् । नृपं विस्मयः समाविशत् । स पप्रच्छ
"कीदृग्भूदियं प्रयुक्तिः ।" इति । अगदङ्कारः प्रत्यभाषत "आदि
स्तावन्निमज्जनदुःखानुभवोऽस्य न जातः न सम्पन्नञ्च नौकोपस्थस्थि
सुखमाहात्म्यपरिज्ञानम् । एवं किल सुखास्वादस्तेनैव ज्ञायते यः
दुःखेन समाक्रास्यते । इति ।

अये ! सुहित ! नो तुभ्यं रोचते यवरोटिका ।
यदन्तिके तेऽपकृष्टं दयितं तन्मदन्तिके ॥
'एराफा'ख्य'* भोगपदं निरयोऽप्सरसां दिवः ।
पृष्टे निरयिणि ब्रूयात् "एराफं" स्वर्गमेव सः ॥

---

* स्वर्गनरकयोरन्तराले 'एराफ्' संज्ञितमेकं पापशोधनस्थानं वर्त्तत इति वदन्ति।

प्रियसन्निधिमाप्तस्य जनस्य च वियोगिनः।
द्वारावसक्तनेत्रस्य भवेद्धि महदन्तरम् ॥

८ आख्यानम्। पारसीकधराधिपानां कश्चिद् वार्द्धके रोगातुरोऽभवत्। जीविताशा च तस्य परिह्वता बभूव। अत्रान्तरे सैनिकः कोऽपि प्रतीहारमाविश्य राज्ञे शुभोदन्तमिममावेदयामास "अमुकं दुर्ग देवस्य प्रतापबलेन जितमस्माभिः बन्दीकृताश्च रिपवः। सेनाः प्रजाश्च तत्रत्याः साकल्येन देवादेशप्रतीक्षिण्योऽवतिष्ठन्ते।" इति। महीपो हिमश्वासमाकृष्यावदत्—'कुशलप्रवृत्तिरियं न मामकीना, अपि तु प्रत्यर्थिनामेव मे, अर्थाद्राज्योत्तराधिकारिणाम्' इति।

अहो व्यतीतं खलु जीवितं प्रियं, सुधा सदानेन मनोरथेन मे।
यदुयन्मदीये हृदयेऽत्र राजते, कदा नु तत् पूर्त्तिमियादबाधतः॥
कामो निबद्धो हृदि यत्नतो यः,पूर्णेऽपि तस्मिन् ननु किं फलं स्यात्।
वयो यतोऽतीतपथं समेतं, न सन्निवर्त्तेत पुनः कदापि ॥

कृतान्तपाणिराजघ्ने प्रयाणपटहं दृढम्।
अये मल्लोचनद्वन्द्वामन्त्रयस्व शिरो द्रुतम्॥
अये प्रतल! भो बाहो! प्रकोष्ठ! ननु साम्प्रतम्।
आप्रच्छनमिमे यूयं प्रकुरुध्वं परस्परम्॥
रिपुरापतितो वीर्य्यवतामग्रेसरो मयि।
प्रस्थातव्यमतस्तूर्णं युष्माभिर्मेः सुहृज्जनाः॥
आयुः कालः समग्रो मे मौर्ख्येन गतवानयम्।
कृता निवृत्तिर्न मया युष्माभिः प्रविधीयताम्॥

---

# उत्तरमालिका

विद्यावाचस्पतिश्रीशालग्रामशास्त्रि विद्याभूषणसाहित्याचार्यवैद्यभूषणकविराजवर्य्येण ग्रथिता

अनुवादेनैव साम्प्रतं सर्वाणि शास्त्राणि प्रबोधयन्त्याचार्या अलंवादिनः। तत् अनुवादेनैव सम्भवति सकलज्ञातव्यविषयपरिज्ञानं किं मूलसंस्कृतग्रन्थाध्ययने मुधा भूरिश्रमेणेति। अस्ति वा संस्कृते किञ्चित्तादृशं शाश्वतिकं महत्त्वं येन तदध्ययनमावश्यकं स्यादिति वाराणसेयहिन्दुविश्वविद्यालये संस्कृतसाहित्यसंमेलनस्य स्वागतसमिते सभापतीनां लोकमान्यश्रीमदनमोहनमालवीयमहाभागानां प्रश्नोत्तराणि—

आध्यात्मिकानां गम्भीरभावानामवबोधकाः ।
नान्यभाषासु ते शब्दा अनुवादः कथं भवेत् ॥ १
यथा कथंचित् यत्किञ्चिदनुवादेन बुध्यते ।
न तेन मूलग्रन्थानां विलोपं कोऽपि कामयेत् ॥ २
अनेके ह्येकपर्य्यायाः श्लिष्टाश्चार्थान् यथा बहून् ।
व्यञ्जन्ति संस्कृते तेषां कोऽनुवादं करिष्यति ॥ ३
अस्थिरायां नु भाषायामनुवादे कृतेऽप्यथ ।
कालान्तरे नोपयोगान्मूलग्रन्थो भविष्यति ?। ४
अनुवादः सदोषश्चेल्लोके भ्रान्तिं प्रवर्त्तयेत् ।
मूलाऽज्ञाने कथं को वा तस्य शुद्धिं विधास्यति ?। ५
जातीयताया जातेश्च प्राचीनत्वं यथा स्थिरम् ।
संस्कृतेन, तथा नान्यभाषाभावे विधिर्लिपिः ॥ ६
सर्वासां भारतीयानां भाषाणामुपजीव्यता ।
संश्रिता सुरभारत्यां तद्विरोधः कथं भवेत् ?। ७

आविर्भावे स्वभावानां सर्वा एव सदैव च ।
देववाणीमुखापेक्षाः कथं स्युः स्वमातरम् ?। ८
सर्वान् संस्कृतशब्दांश्चेत् हिन्दीभाषा परित्यजेत् ।
तदासौ ग्राम्यभाषातोऽप्यधमत्वं गमिष्यति ॥ ९
आविर्भवन्ति विज्ञानाद् भावा नवनवा इह ।
तान् प्रकाशयितुं शब्दान् का भाषा संप्रदास्यति ?। १०
उपजीव्या प्रधानं च जीवातुः सुरभारती ।
तद्विघातं तु को वाञ्छेदुपजीविकसंश्रयात् ॥ ११
कन्थापटच्चरैः शीतवारणे संभवत्यपि ।
ऊर्णाकम्बलकौशेयप्रावारान् कः प्रदाहयेत् ?। १२
स्रुत्कुम्भानम्भसा पूर्णान् पश्यन् गेहेषु सत्वरः ।
सुधातुल्यजलं को वा कूपं मृद्भिः प्रपूरयेत् ॥ १३
उपस्पर्शाय पर्याप्तं पश्यन् वा स्वाञ्जलौ जलम् ।
को वा मन्दाकिनीधारां निरोद्धुमभिकामयेत् ॥ १४
पल्वलान्नालिकां क्षुद्रां पश्यन् केदारमध्यगाम् ।
कोऽप्रमत्तो घनध्वानान् मेघान् घोरं विचूर्णयेत् ॥ १५
ग्रामोफोनेषु (Gramophone) गानानि श्रावं श्रावं सचेतनः ।
को वा गायकमुख्यानां प्राणघातं समाचरेत् ॥ १६
प्रतिविपणिपणेन प्रापणीयानि पश्यन्
क इह सकललभ्यब्लाकचित्राणि विद्वान् ।
सुनिपुणरविवर्मप्रस्तुतं भूरिभावं
लसदमलकलौघं चित्रमुच्छेत्तुमिच्छेत् ॥ १७
क्रमेण तेनैव त एव शब्दा धर्मं दिशन्तूच्चरिता विधीनाम् ।
नान्ये तथा तत्सुरभारतीयं धर्माभिकामैरपि रक्षणीया ॥ १८

---

श्रीकाशी-संस्कृत-साहित्य-सम्मेलनस्य स्वागतसमितेः

## सभापतेर्भाषणम् ।

माननीया विद्वांसः !

निखिल-भारतवर्षीय-संस्कृत-साहित्यसम्मेलनस्य सप्तमाधिवेशन-समितौ, गीर्वाणवाणीसमभ्युदयं सर्वत आग्रहेण स्पृहयतां श्रीकाशी-निवासिनां सज्जनानां प्रतिनिधिभूतायाः स्वागतकारिण्याः परिषदः सप्रश्रयं सबहुमानं स्वागतपट्टिकया प्रीत्यभिवादनम् अनुग्रहेण गृह्णन्तु अत्रभवन्तो भवन्तः ।

निखिल-भारतवर्षीय-संस्कृतसाहित्य-सम्मेलनस्य (अष्टमे) सप्तमे-ऽस्मिन् अधिवेशने सम्मिलितानां निखिलभारतीय-संस्कृतभारतीसेवकानां विद्वद्वराणां भवतां सुदुर्लभे दर्शनीयेऽस्मिन् समवाये मादृशस्याकिञ्चनस्य किमिव नाम वक्तव्यं, यदिह निखिलशास्त्रसुधाब्धिपारंगतानां गीर्वाणगुरु-कल्पानां सहृदयानामत्रभवतां मनो रञ्जयितुं कियदपि प्रभवेत्, जाने न किमपि इति तु साम्प्रतमत्रोत्तरं, तथा जानतापि मया यदत्र किञ्चिद् अभिधातुं साहसेनाध्यवसीयते, तदिदं चापलं करुणया चन्तुं क्षमाशीलाः सहृदया भवन्त एव प्रभवेयुः ।

अत्र खलु त्रिपुरारि-राज-नगर्यां निखिलभारतवर्षीय-संस्कृत-साहित्य सम्मेलनस्य सप्तमसधिवेशनं (?) सभाजयितुं सर्वतः समुपागतै-र्विद्वद्वरैः प्रथमतस्तावद् इदमेव स्मरणीयं, यत् कुत्र कीदृशे काले कस्मै वा प्रयोजनाय समागता वयमिति । समभिवीक्ष्यतां तावद-स्माकं पुरतः सैवेयं वाराणसी या किल कल्पनाकलनाकलित-चिरातीतकालादारभ्य इदानीमपि प्रसन्नपुण्यसलिलया [illegible] कैलासपतेर्भगवतः शिरोनिवास-गौरवमपि अविगणय्य सरित [illegible] समागमाय द्रुततरं प्राचीं दिशमभिप्रसर्पन्त्या अपि सेव [illegible]

श्वादावेव उत्तरां दिशां प्रति प्रत्यावर्तितप्रवाहया भगवत्या भागीरथ्या प्रक्षालितपादा तदेकमेव स्थानमभिव्याप्य विराजमाना स्थैर्येण गाम्भीर्येण दार्ढ्येण पुण्यप्रभावेण यशसा च दिगन्ताननुभासयता कमिह ऐतिहासिकवर्ण्यं अन्यत्र कुत्रापि समन्तात् भूमण्डलस्य तया वैलक्षण्य-नैपुण्य-निष्णातसमीक्षयापि अनुपलक्षयन्तं न खलु नयति चमत्कारातिशयम्। “पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यमेकं सद् विप्रा बहुधा वदन्ति” इत्येवमादीनां ब्रह्माद्वैतपराणामृचां तात्पर्य-विवरणं वैज्ञानिकरीत्या प्रथमतस्तावदुदयस्यामेव अजातशत्रोः काशिकापतेः सभायां समजनि, भगवतोऽद्वयवादिनस्तथागतस्य सर्वभूताभयप्रदं धर्मचक्रप्रवर्त्तनं यत्रैव ऋषिपत्तने मृगदावे प्राथम्येन उपजातम्। सर्व--सभ्यदेशीय--चिकित्साशास्त्रनिदानमायुर्वेदीय--सकलग्रन्थमौलि--मुकुटायमानं काशीपते राजर्षेर्दिवोदासस्य चरकनाम्ना सुप्रसिद्धं मूर्तमिव प्रातिभं विज्ञानं यत्रैव प्रादुर्भूतम्। आस्तां तावत् ऐतिहासिकयुगपूर्वतनी वार्त्ता, ऐतिहासिकयुगारम्भ-समयादारभ्याद्यतन-दिवसपर्यन्तं यस्यामनुदिनमखिलैरङ्गैरुपचीयमाना गीर्वाणवाणी-स्वसेवकानां पुण्यभूमि-भारतवर्षालङ्कारभूतानां विद्वज्जनानां दिगन्तानुद्भासयद्भिः शारदीयपूर्णसुधाकर-कर निकरानुहसद्भिर्निर्मलैर्यशः-पटलैः समन्ततो हरिदङ्गनानां मुखसुषमां पूर्णतां नीतवन्तो, श्रीमद्भागवतटीकाकाराः पूज्यपादाः श्रीधरस्वामि-चरणाः, भट्टकुल-शिरोमुकुटमणयो नारायणभट्ट-दिवाकरभट्ट-कमलाकरभट्ट-दिनकरभट्टादयो महानिबन्धकारा मधुसूदन-सरस्वती-गौड़-ब्रह्मानन्द-प्रकाशानन्द-सदानन्दप्रमुखपरिव्राजककुलशिरोमणयोऽतिगहनब्रह्माद्वैतस्वसिद्धान्ता--टवीस्वच्छन्दसंचारण-पञ्चाननप्रभावाः, पुष्टिमार्ग-रसमय-सिद्धान्तदीक्षा-गुरव आचार्यवल्लभप्रमुखा भक्तितत्त्वप्रणेतारः, वैयाकरणराका-सुधाकर-सदृशाः श्रीमन्तो भट्टोजिदीक्षितनागेशभट्टप्रभृतयस्तर्काम्भोनिधि-मन्थमन्दरायमाणप्रतिभाविभवा जयनारायणभट्टाचार्यचन्द्रनारायण-

भट्टाचार्य्यादयः तार्किकशिरोमणयः, किं बहुना एवंविधाश्चासंख्याता अगाधापारसंस्कृत-भारती-सुधाम्बुधिपारंगता भारतभूमिराकल्प-कल्पमानविकल्पोज्झितभूषणायितसुविमलकीर्त्तिसन्ततयो महात्मानो यस्यां स्वच्छन्दं विहरन्ति स्म, तस्यां खलु भगवतस्त्रिनयनस्य नयनमनोहारिण्यां श्रीकाशिकायां मिलिता अत्रभवन्तः सहृदयवराः।

कस्मै खलु प्रयोजनाय समवेता वयम्? भारतीयसभ्यतासर्वस्वभूतायाः संस्कृतभारत्याः सर्वतः समुन्नतये इति तावदत्रोत्तरम्, इति खलु निर्विवादमापांसुलपादकृषिजीविजनमाविद्वद्वरजनञ्च सुविदितमस्त्येव, तथापि यदत्र चिन्तापदवीमस्माकं साम्प्रतं समाक्रम्य वर्त्तते, मन्ये मिततया तदुल्लेखो नासादयिष्यति खलु अत्र कथमपि अनवसरविरसताम्। सुविदितमेतदत्रभवतां यद्वैदेशिकाः केचन विद्वांसस्तथा तदुपदेशान् वेदवत् प्रमाणतया मानयन्त, सुशिक्षितमानिनो भारतीया अपि सडिण्डिमघोषं समन्तादुद्घोषयन्ति यद् अमरभारती खल्वस्माकमियं मृता मृतकल्पा वेति अस्याः समुन्नतये इदानीं प्रयासो विगतप्राणोज्जीवनार्थं प्रयासवत् सर्वथा तत्कर्त्तृणां निरर्थकश्रममात्रफलप्रसवाय कल्पिष्यते इति विवेकिनामुपेक्ष्यतामर्हतीति। अस्तु तथा

"यथा तथा नाम गिरन्तु ते गिरो जनस्तु यद्वेद तथा वदिष्यति।"

वयन्तु मन्यामहे इयं संस्कृतभाषैवास्माकं सञ्जीवनौषधिरिति नास्त्यत्र संदेहलेशावसरस्तथाहि आत्मविस्मृतिरेव सनातनधर्मावलम्बिनमस्माकं सर्वतः सर्वानर्थनिदानम्, निरन्तरावसादमयञ्च, इदमस्माकं दौर्बल्यं तन्मूलकमेव, तां खलु सन्तमसमयीमात्मविस्मृतिमपाकर्त्तुं न खलु प्रभवेयुः साकल्येन समस्तैरपि भारतीयैः समभ्यस्ताः सर्वा अपि पाश्चात्यविद्याः, तां किल आत्मविस्मृतिं समुत्सारयितुं भारतीयानां भारतीयात्मस्वरूपस्मृतिरेव अत्यावश्यकमपेक्ष्यमाणा सर्वथा अमरभारतीमेव अवलम्बते आत्मलाभाय, इत्यस्मिन् सुप्रसिद्धे सिद्धान्ते न कापि विप्रतिपत्तिः पदन्यासाय प्रभवति सहृदयेषु भारतीयेषु। सर्वा एव

महाजातयो वैशिष्ट्यं स्वाभाविकमुपजीवन्त्यः प्रसादं समभ्युदयञ्च आसादयन्त्यो जीवन्ति जीवयन्ति च परितोऽनुकूलानपरानपि जातिविशेषान् इति हि किल ऐतिहासिकनिष्णाता जातितत्त्वविदः सम्यक् समामनन्ति। तदात्मवैशिष्ट्यं विस्मृत्या वा मोहेन वा प्रमादेन वा अविगणय्य अवलम्बनान्तमाश्रयन्त्यः असंख्याता मानवमहाजातयो निरन्वयं प्रलयमुपगता इत्यत्र वैदेशिका इतिहासा एव प्रमाणम्। मिशर-सिरिया--बाबिलन्--ग्रीस-रोमप्रभृति-देश--विशेष--सुपरिचितानां प्राचीन-जातीनामवनति-प्रलययोर्निदानमन्विष्यतामैतिहासिकप्रवराणामपि ईदृश एव सिद्धान्त इति मन्ये नाविदितमत्रभवतां भवतां, तदेवं स्थिते सत्स्वपि असंख्येयेषु समुच्छेदहेतुषु बाह्येष्वाभ्यन्तरिकेषु च सहस्राधिकवत्सरानपि समभिव्याप्य स्वपराक्रमं प्रबलतया प्रकटयत्स्वपि यद् वयमिदानीमपि पराधीनतया अवसादभरम् अतिक्लेशेन वहन्तो जीवामः। पुनरप्युदयाशया च यथाबलमुपायपरम्परामवलम्बितुं प्रभवामश्च, तदत्र को नाम हेतुरिति अस्मिन् महाऽऽश्चर्यकरे विषये मुह्यन्तु नाम नितरां वैदेशिकाः प्रत्नताण्विकास्तदनुसरणजीवितसर्वस्वाः केचन भारतीया वा विद्वांसः। वयं तु निःशंकमुपलभामहे, यत् प्राधान्येन अमरभारती-सुधारससमास्वादस्यैवायं विश्वविस्मयकरो महान् प्रभावः, तदेवंविधाया महाप्रयोजनशालिन्या अस्या अमरभारत्या अस्मिन् खलु सर्वतो विप्लवकरे समये सम्यग्-उपासनेन प्रसादमुपलभ्य अस्माकं महाजातीयं महाभ्युदयं सम्पादयितुं महान्तं श्रममुररीकृत्य दूरदूरतरप्रदेशेभ्यो गमनागमन-क्लेशादि-परम्पराम्, समुत्साहेनाविगणय्य सम्मिलितानामत्र निखिलभारतवर्षीयसम्मा- (?) धिवेशनेऽत्रभवतां भवतां सम्यगातिथ्यपरिचरणे प्रतिपदम् सम्भाव्यमानामस्माकं त्रुटिसन्ततिं कृपया क्षाम्यन्तु भवन्तः।

श्मशानचारिणां खलु आत्मीयजनप्रसादेन सर्वतः शैथिल्यं सहन्त एव कृतधियः, वाराणसीपुनर्भूतपतेर्भगवतो विरूपाक्षस्य विहारास्पदं

महाश्मशानमिति आसंसारं विदितमेव, वयन्तु तस्मिन् महाश्मशाने जीवामस्तदत्र यत् प्रतिविधेयं तद्विधेयेषु अस्मासु भवद्भिरेव ज्ञापयितव्यमिति श्रीमत्सु मान्यवरेषु भवत्सु अस्माकं संक्षेपतो विनिवेदनीयमिति शिवम्।

---

# दुर्गेशनन्दिनी

श्री.........

## पञ्चदशः परिच्छेदः

### मुक्ताकण्ठम्

कक्षमध्यान्निष्क्रान्तायां सपरिजनायां तिलोत्तमायामायेषा शयनीपरि निषसाद। नासीत्तत्र आसनान्तरमुपवेशनाय। जगत्सिंहः समीपे तस्थौ।

आयेषा करव्यां गोलापपुष्पमेकमादाय तस्य पत्राणि नखैर्लुनती प्रोवाच—राजपुत्र, किमपि वक्तुकाम इव लक्ष्यसे। यदि सिध्यति मत्तः किमपि कार्यं, तदा मा कुरु वितर्कं तत्कथने। भवत् कार्यं सम्पाद्याहं सुखिता भविष्यामि।

राजकुमारः प्रत्यभाषत—"नास्त्यधुना केनापि मम प्रयोजनम्। नाहं तदर्थं भवद्दर्शनाभिलाषी सञ्जातः। वक्तव्यमित्थम् यादृशीमवस्थां गतोऽहं तेन नाशंसे पुनर्भवतीनां दर्शनम्। मन्ये एतदेव पश्चिमं दर्शनम्। येन ऋणेन बद्धोऽहं भवतीनां समीपे तस्य प्रत्यर्पणं वाचा न सम्भवति। कस्मिन्नपि तत् प्रत्यर्पयिष्यामि न विद्यते तादृशी उपपत्तिः। एषैव मे भिक्षा यदि कदापि भवेन्मे साधनीयं, यदि कदापि भवेन्मे शुभदिवसागमस्तदा मा कुरु वितर्कं मयि विधातुं कमपि आदेशम्।"

जगत्सिंहस्य एवं कातरेण नैराश्यव्यञ्जकेन कण्ठस्वरेण आयेषापि क्षोभमुपगता। सा प्रत्यभाषत कथं भवान् गच्छत्येवं निराशताम्। न खलु तिष्ठति अशिव दिनात् दिनान्तरम्।

जगत्सिंहः समभाषत—"नाहं नैराश्यं गतः। नाभिलषामि आशामपि धारयितुम्। जीवितस्य एतस्य धारणात् त्यागो वरम्। नास्ति मेऽभिलापस्यन्तु मेतत् कारागृहम्। न जानाति भवती चित्त-गतं मे सर्व्वं दुःखजातम्। वेदयितुमपि नाहं शक्नोमि।" राजपुत्रस्य करुणस्वरेण विस्मिता आर्त्ततरा च जाता आयेषा। तदा लुप्तस्तस्या राजपुत्रीभावः। गतं च दूरत्वम्। स्नेहमयी रमणी ललनासुलभेन यत्नेन कमनीयेन करपल्लवेन धारयामास राजपुत्रस्य करपल्लवम्। तदैव परित्यज्य हस्तं राजपुत्रस्य मुखमुदीक्ष्य समभाषत 'राजपुत्र कथं तव हृदयमध्ये दारुणमेतत् दुःखम्। मुञ्च मयि परज्ञानम्। यदि नाम अनुमन्यसे तदा पृच्छामि अपि वीरेन्द्रसिंहस्य कन्या—"

असमाप्तवचनायामेव आयेषायां राजपुत्रः प्रत्यभाषत 'अलमनेन वचनेन। भग्नो मे स्वप्नः।'

आयेषा नीरवं तस्थौ। जगत्सिंहोपि नीरवतां भेजे। उभावेव चिरं तूष्णीं स्थितौ। आयेषा अवाङ्मुखी अवतस्थे।

अकस्मात् राजपुत्रः पुलकिततनुः सञ्जातः। पतितस्तस्य करपल्लवे कवोष्णो वारिविन्दुः। जगत्सिंहो दृष्टिमुन्नमय्य निरैक्षत आयेषाया मुखपद्मम्। आयेषा क्रन्दति। उज्ज्वले गण्डस्थले विगलति अश्रु-धारा।

राजपुत्रः सविस्मयमुवाच—किमेतत्? किम् रोदिषि त्वम्?

आयेषा किमपि उत्तरमकृत्वा मन्दं मन्दं तत गोलाबं निःशेषं चिच्छेद। पुष्पे तस्मिन् शतधा विखण्डिते सा समुवाच—युवराज, त्वामद्य एवम् आमन्त्रयिष्ये इति न कदापि मनसाहं चिन्तितवती। अहं बहु सोढुं समर्था। परं कारागृहे एकाकिनं त्वाम् मानसिक-

पीड़ाया यन्त्रणां भुञ्जानं परित्यज्य गन्तुं न शक्नोमि। जगत्सिंह! बहिरागच्छ त्वं मया सार्द्धम्। दास्याम्यहं अश्वशालायाः अश्वम्। गम्यताम् अद्य रजन्यामेव स्वं शिविरं प्रति।

यदि तदा देवी भवानी कृतशरीरपरिग्रहा वरप्रदाभविष्यत् तथापि विस्मिततरो नाभविष्यत् राजपुत्रः। स तावत् प्रथमं न शशाक प्रतिवक्तुम्।

आयेषा पुनरपि समभाषत—जगत्सिंह, राजपुत्र, आगच्छ।

गते बहुतिथे क्षणे जगत्सिंहः समुवाच—किं त्वं कारागारात् मां मोचयिष्यसि?

आयेषा प्रत्यभाषत—अस्मिन्नेव क्षणे।

राजसिंहः—किं परोक्षं ते पितुः?

आयेषा—मा तावत् तदर्थं चिन्तय। गते त्वयि शिविरं, तम् विज्ञापयिष्याम्यहम्।

कथं दास्यन्ति रक्षका गमनानुमतिम्?

आयेषा कण्ठात् रत्नहारं छित्त्वा प्रदर्श्य उवाच—अस्यैव लोभेन रक्षकाः पन्थानं दास्यन्ति।

राजपुत्रः पुनरप्युवाच—प्रकाशं गतेऽस्मिन् वृत्ते तव पितुः सकाशात् त्वं समधिगमिष्यसि दण्डम्।

का तत्र हानिः?

नाहं गमिष्यामि राजपुत्रि!

शुष्कतां गतमायेषायाः वदनमण्डलम्। सा शुष्कमनाः पप्रच्छ कथम्?

राजपुत्रः—समधिगताः प्राणा भवत्याः सकाशात्। नाहं कदापि तथा आचरिष्यामि यथा ते भविष्यति कष्टम्।

आयेषा अश्रुरुद्धकण्ठाप्रच्छत्—न खलु गमिष्यसि?

राजकुमारः प्रोवाच—गच्छ त्वमेकाकिनी।

आयेषा पुनरपि नीरवतां भेजे। पुनरपि नयनाभ्यां विगलिता अश्रुधारा। कथमपि सा अश्रु संवृतवती। आयेषाया: निःशब्द-रोदनदर्शनेन विस्मयं गतो राजपुत्र: समभाषत—'कथं नाम रोदिषि राजपुत्रि।' न च प्रत्यभाषत आयेषा पुनरपि बभाषे राजपुत्र:—राज-पुत्रि पूरय मम प्रार्थनाम्। यदि नाम प्रकाशमर्हति तव रोदनकारणं तदा प्रकाशय तत् मम समीपे। मम चेत् प्राणदानेऽपि दूरीभवति तव रोदनकारणं तदाहं तत् करिष्यामि। यन्मया स्वीकृतं वन्दित्वं न केवलं तत एव जातमायेषाया नयनजलम्। तव पितृकारागारे दु:खायन्ते अहमिव बहवो वन्दिन:।

आयेषा तदैव न दत्त्वा राजपुत्रवचनस्य उत्तरं वसनाञ्चलेन प्रमृज्य नयनजलं चणं नीरवं निस्पन्दं च स्थित्वा उवाच—राजपुत्र, नाहं भूयोऽपि रोदिष्यामि।

अनासादितप्रश्नोत्तरो राजपुत्र: किञ्चिदिव क्षुरामना: सञ्जात: उभावेव पुनरपि तूष्णीमवनमितमुखौ स्थितौ।

तदा प्राकारोपरि पतिता अपरस्य कस्यापि छाया। कोऽपि तत्र ददर्श। स तृतीयो जन उभावेव तावुपागत्य स्थितोऽपि न दृष्टस्ताभ्याम्। चणं स्तम्भवत् निश्चलं स्थित्वा क्रोधकम्पितस्वरेण आगन्तुक: प्रोवाच—'नवावपुत्रि, साध्वेतत्'

उभावेव मुखमुन्नमय्य ददर्श ओसमानम्।

ओसमानस्तदनुचरादङ्गुरीयकवाहकादवगम्य सन्निवेशमाजगाम आयेषानुसन्धानाय। राजपुत्रस्तत्रावलोक्य ओसमानं, यदि नाम आयेषा ओसमानेन कतलुखानेन वा तिरस्कृता अवमानिता वा भवेदिति शङ्कितो बभूव आयेषाया: कृते। ओसमानेन यथा क्रोध-प्रकाशकेन स्वरेण कृता उपहासोक्ति:, तेन तथैव सम्भवेदिति प्रतिभातम्। परिहासवचनं श्रुत्वैव आयेषा ओसमानस्य मनोगतं सर्वथा विदितवती। तन्मुखं मुहूर्त्तमात्रं रक्तिमानं भेजे। न च

प्रकाशितम् अन्यत् किमपि अधैर्य्यलक्षणम् । सा स्थिरस्वरेण प्रत्यभाषत 'किं नाम साधुत्वमधिगच्छसि, ओसमान ?'

ओसमान: पूर्व्वभङ्ग्या प्रोवाच—साध्वेतत्—नवाबनन्दिन्या निशीथे एकाकिन्या वन्दिसहवास: । साधु चैतत्—वन्दिन: कृते निशीथे कारागारे अवैध: प्रवेश: ।

अयं तिरस्कारस्तस्या: पवित्रे हृदये सहनसीमामतिक्रान्तवान् । ओसमानस्य मुखं प्रति दृष्टिं निधाय सा प्रत्युवाच । ओसमानेनाश्रुतपूर्व्वस्तादृशो गर्व्वित: स्वर आयेषाकण्ठे । आयेषा प्रत्यभाषत—निशीथेऽस्मिन् एकाकिन्या मम अनेन वन्दिना सह आलपने मम कामचार: । साधु वा असाधु वा भवति मदीयं कर्म्म तेन नास्ति तव किमपि प्रयोजनम् ।

ओसमानो विस्मयं गत: । विस्मयादधिक: समजायत तस्य क्रोध: । स प्रोवाच—अस्ति न वा प्रयोजनं, श्व: प्रातरेव नवाबमुखात् श्रोष्यसि ।

आयेषा यथापूर्व्वं समुवाच—यदा मां प्रक्ष्यति पिता, तदाहं करिष्याम्युत्तरम् । नास्ति तेन तव किञ्चिदपि चिन्ताकारणम् । ओसमानोऽपि पूर्व्ववत् सपरिहासमवदत्—यदि पुनरहमेव पृच्छामि ?

आयेषा उत्तस्थौ । क्षणं पूर्व्ववत् ओसमानं निश्चलनयनेन निरैक्षत । तस्या विशालं लोचनयुगलं वर्द्धितायतनं मुखपद्मञ्च प्रस्फुटिततरमिव सञ्जातम् । भ्रमरकृष्णया अलकावल्या सह शिरोदेशस्थितैरस्य ईषत्स्खलित: । हृदयं तरङ्गान्दोलितनिविड़शैवालदलवत् उत्कम्पितम् । स्फुटेन स्वरेण आयेषाऽभाषत "ओसमान त्वं चेत् पृच्छसि, तदा ममैतदुत्तरम् 'एष वन्दी मम प्राणेश्वर:' ।"

तदैव चेदशनिपतनमभविष्यत् तदा राजपुत्र: पाठानो वा नाधिकविस्मयम अगमिष्यत् । राजपुत्रस्य तमसावृते मनसि केनचित् प्रज्वलित इव प्रदीप: । ज्ञातं तेन तदा आयेषाया नीरवरोदन-

कारणम्। ओसमानेन घृणाक्षरन्यायेन पूर्व्वमेव कृत एष सन्देहः। स च एतदर्थमेव आयेषां तिरश्चकार। परन्तु आयेषा तस्य पुरतः एव मुक्तकण्ठमेतत् प्रकाशयिष्यतीति आसीत् तस्य स्वप्नेऽपि अगोचरः। ओसमानो निरुत्तरं तस्थौ।

आयेषा पुनरपि अवादीत्—श्रूयताम् ओसमान, पुनरपि कथयामि। अयं वन्दी मम प्राणेशः। यावज्जीवं नान्यः कश्चिदस्मिन् हृदये प्राप्स्यति अवकाशम्। यदि श्वस्तावत् वध्यभूमिरस्य शोणितेन आर्द्रा भवति,—एवं ब्रुवत्यास्तस्याः सञ्जातो रोमहर्षः—तथापि द्रक्ष्यसि, हृदयमन्दिरे अस्य मूर्त्तिं प्रतिष्ठाप्य सत्यं यावत् आराधयिष्यामि। अथ अस्मात् मुहूर्त्तादनन्तरं यदि चिरमनेन समागमो न भवति, श्वो यदि अयं मुक्तो ललनाशत-परिवृत आयेषां धिक्करोति, तथापि अहमस्य दासी एव स्थास्यामि। अन्यच्च श्रूयताम्—विचिन्तय तावत् इयन्तं कालमेकाकिन्या मया किमुक्तम् असौ? कथितं मया—मम दौवारिका धनेन वा वाक्येन वा वशीकर्त्तुं शक्यन्ते। पितुरश्व-शालाया दास्यामि अश्वम्। गच्छतु तावत् वन्दी अधुनैव पितृ-शिविरम्। वन्दी तु पलायनं न स्वीचकार। नो चेत् इयता कालेन अस्य केशाग्रमपि न दृष्टं भवेत्। आयेषा पुनरपि विमृज्य अश्रु कियच्चिरं नीरवं स्थित्वा अन्येन स्वरेण समभाषत—ओसमान क्लिश्नामि त्वामेभिर्वाक्यैः। क्षम्यतामपराधः। त्वं मयि स्निह्यसि अहमपि त्वयि बहुस्नेहा। अनुचितमेतन्मम। किन्तु त्वयाद्य आयेषा अविश्वसनीया अमन्यत। आयेषाया अन्यः कोपि अपराधः सम्भवेत्। परं न सा अविश्वसनीया। यदेव क्रियते तया, सा तन्मुक्तकण्ठं शक्नोति वक्तुम्। अधुना तव समक्षम् उक्तम्—प्रयोजनं भवति चेत् श्वः पितुः समक्षमेव वक्ष्यामि। ततो जगत्सिंहं प्रति दृष्टिं निधाय सा उक्तवती—राजपुत्र, त्वयापि क्षम्यतामपराधः। ओसमानश्चेदद्य मां मनसि नाहनिष्यत्, तदास्य दग्धहृदयस्य सन्तापः कदापि तव

सकाशेन प्रकाश्यतामगमिष्यत्। कदापि वा न मानवगोचरोऽभविष्यत्। राजपुत्रो निःशब्दं स्थितः। तस्य अन्तःकरणं सन्तापेन दग्धम्। ओसमानोऽपि नोवाच किञ्चित्। आयेषा पुनरप्यवादीत्—ओसमान पुनरपि वदामि, दोषश्चेत् ज्ञातः क्षम्यताम्। अहम् पूर्वमिव तव स्नेहपरायणा भगिनी। भगिनीति त्वयापि स्नेहलाघवं न कार्य्यम्। अदृष्टदोषेण सन्तापसागरे उत्पतितं मया। भ्रातृस्नेहवञ्चितां कृत्वा न मामतले जले निमज्जय।

एवमुक्त्वा दास्याः प्रत्यागमनं नैव प्रतीक्ष्य सा एकाकिनी निर्गता। ओसमानश्च कियन्तं कालं विह्वल इव वाक्यहीनः स्थित्वा स्वगृहं प्रतस्थे।

---

# चन्द्रालोके

## पञ्चमोऽङ्कः

लेखकः—श्रीधूर्जटिप्रसादकाव्यतीर्थः

### समुद्रतीरम्

ततः प्रविशति नारदः

नारदः (साश्चर्य्यं सर्व्वतो विलोक्य)। अहो नु खलु भोः कीदृग् पूर्व्वाभोग एवास्य गगनचुम्बितालोत्तुङ्गकल्लोलमालामालितस्य दुग्धधवलफेनराशिकृतापीडस्यागण्यशङ्खशुक्तिग्रथितरसनादाम्नः सतततुलितनारायणमूर्त्तेः समुद्रस्य। तथाहि

जगद्धामः श्रीमान् बहुरसनदीलालनपटु-
र्दयाधारः कृष्णः पतितजनतोद्धारणपरः।

अनाद्यन्तः सच्चिन्महितमहिमाविर्भा[illegible]—

र्भूषाभाङ्गो देवो भवतु भगवान् [illegible] ॥

अथ तु बहुतिथे काले व्यतीते दुर्लभदर्शनं [illegible] भगवन्तं पुरुषोत्तमं पश्यामीति महान् मे प्रमोदः समुपजायते । तथाहि—

वेदोज्ञातापि धाता शशधरशिखरोपादिनन्दप्रणीता

ब्राह्मी नित्यापि वाणी विदितशमदमा [illegible] योगयुक्ताः ।

आब्रह्मस्तम्बजाता अपि निखिलभुवां यत्[illegible]पालभिन्ना-

स्तं द्रष्टुं धीयमेकं क इह न पुरुषो भोक्ते भक्तिनिष्ठः ॥

तत् कतमं पन्थानमवलम्बिष्ये ? (विमृश्य) अथवा तस्मिन् भगवति विश्वमूर्त्तौ किं स्थानमस्थानं वा । तथाहि ये मे पन्थानमवलम्बन्ते तत्सन्निधौ मनीषिणः त एव तन्मूर्त्तौ विलीयन्ते । यतः

एकापि विविधा मूर्त्तिर्भावनाभावितात्मभिः ।

भाव्यते लीयते तत्र तरङ्गैरावर्त्तगैरिव ॥

(परिक्रम्य) अये ! कोऽयमिदानीं नभोमण्डलाङ्गणमवतरति तरसा ? तथाहि

भर्ङ्गं दीर्घजटा गता निपतनाद्दोदुल्यमानाप्यधो

निर्निद्राच्छिपुटोऽप्यसौ ननु गतो मुद्रां हतो रंहसा ।

विभ्रच्छुभ्रपरिच्छदाञ्चलमसौ पुण्यं पताकासमं

पुण्यज्योतिरिवामलं सुरसखो दूतोऽयमागच्छति ॥

तदधुना कियत्क्षणमस्यागमनं प्रतीक्षे । (परिक्रामति)

ततः प्रविशति देवदूतः

देवदूतः—आर्य्य ! अभिवादये ।

नारदः—अपि कुशलं जिष्णोः ?

देव—नहि ; नहि

नारदः—कथमिव ?

देव—यत उर्व्वशीं विना तस्य स्वाराज्यसौख्यं शून्यमिवावभाति ।

तथाहि—

जीर्णं नन्दनकाननोदरतटं पीयूषधारा कटुः
शय्या कण्टकवत् कठोरशयना हृद्यः सपत्नायते।
शून्यारण्यतटीव वासवपुरी तीक्ष्णार्चिरग्निर्विधु—
श्चित्रं चिन्तितमप्यवाप्यकलुषं स्वर्गाधिलुप्ता रतिः।

नारदः—एवमेतत्, कः सन्देहः। तथाहि

वायोर्मृदुत्वं कुसुमस्य गन्धं जलस्य शैत्यं किरणं हिमांशोः।
संगृह्य पीयूषरसं च सिन्धोः सृष्टैव या श्रीमधुसूदनेन॥

देव—अहो! अपरिणामदर्शी क्रोधनो भगवान् लोकत्रयैककारण दुर्वासाः, य एवंविधामप्याकृतिमनन्तदुःखार्णवे प्रक्षिप्य सर्वं शोकाकुलीकरोति। तथाहि

नोच्चैर्गायति गायको जलधराः स्वच्छा न वर्षन्त्यपो
वृक्षाः पुष्पफलेन संविरहिता नो नन्दनं नन्दति।
मुञ्चन्त्यश्रु सुराङ्गनाः सुरसभं विच्छेदपर्याकुलं
नेन्दुर्भाति न वाति दिव्यपवनः कामो हताशो हतः॥

नारदः—भद्र! न खल्वत्रापराध्यति स एव भगवान् शङ्करावतारो महामुनिर्दुर्वासाः, यतः—

वह्निः सन्दहति प्रजाः प्रशमयत्यम्भोधराम्भस्तं
हन्त्येनं पवनोऽपि तं पवनभुक् तं वैनतेयः खगः।
तं विष्णुर्भगवान् चराचरजगद्भर्त्ता यतोऽसावतो
यद् यत् कारयते तदेव कुरुते दोषो मुनेस्तस्य कः॥

तत् कथं निरपराधं मुनिं दूषयसि?

देव—मर्षयतु मर्षयत्वार्यः (इति पादतले पतति)

नारदः—उत्तिष्ठ वत्स! को दोषस्ते? तथाहि कं नाम नाही करोति स्वजनदैवदुर्विपाकप्रत्ययम्?

देव—अथानुमन्यतामार्यो वासवनिदेशेन भगवत्पादान्तमभिगन्

नारदः—तत्र किम्प्रयोजनमुद्दिश्य प्रस्थितोऽसि ।

देव—अत्र पुनः कियन्ति दिनानुस्व्ये मी मध्यमलोकेऽतिवर्त्ततेति विज्ञातुं विद्याधिपनिदेशेन भगवत्पादान्तमुपगच्छामि। गच्छता च मयार्द्धमार्गे भवानवलोकितः।

नारदः—उर्व्वभीमापादारभ्य कियान् वार्त्ताविमर्षवस्तुकर्णमागतः ?

देवः—यावत् युधिष्ठिरामयग्रहणम् ।

नारदः—अथ स्वल्पा वार्त्ता विद्यते ; श्रूयताम् । ततः खलु सुरङ्गाद्वारेण तयोरुर्व्वभीदण्डिराजयोरनुपदमेव प्रस्थितौ तेनैव मार्गेण मात्यमयनिरुद्धौ। ततो वृकोदरपादान्तगामिनं साम्बं तं दण्डिराजमवलोक्यापि परिजनवैव्यमानामवकृपालुर्व्वभीममवरुन्धन्तौ। निर्भर्त्सितौ च तौ भीमसेनेन साम्बं दण्डिराजमपहाय द्वारकामागतौ श्रीकृष्णायेदमावेदितवन्तौ सर्व्वमुदन्तजातम्। अथ भगवान् मन्मथं दूतं प्रेष्य युधिष्ठिरं युद्धार्थमाजुहुवे। तत्र समासीना भोजराजनन्दिनी महादेवी कुन्ती तत् सर्व्वं दृष्ट्वा श्रुत्वा च महावीरभीमवाचा विदुरं पुरस्कृत्य द्वारकामागता।

देव—भगवन् ! कथं नामैतत् ? युद्धं चेन्निश्चितं, तदा कथं तेमाता तत्र प्रेषितेति महत् कौतूहलं वर्त्तते।

नारदः—पुत्रविपदमाशङ्का दीनमानसया कुन्त्या सनिर्व्वन्धमनुरुद्धो भीमः कुन्तीं विदुरेण सह द्वारकायै प्रेषयामास।

देव—भगवन् ! अपि नाम तयोः कौरवपाण्डवयोः शान्तं चिरवैरम्, येन भीष्मादयोपीह मिलिताः।

नारदः—तदपि श्रूयताम्। अथ प्रद्युम्नप्रस्थानानन्तरं युधिष्ठिरः सर्व्वान् पृथिवीपालान् कौरवाधिराजञ्च सपक्षहवार्थमामन्त्रयामास। ततः कर्णदुर्य्योधनसौवलप्रभृतयः समय एष पाण्डवविजयस्येति विचिन्त्य युद्धाय कृतोद्यमा बभूवुः। अत्रान्तरे तेन श्रवणमागतेन वचसा क्रोधाभातौ महाप्राज्ञो विदुरो निर्भर्त्स्य तान् पाण्डवपक्षगमनाय

आवेदयामास । ततः प्रबुद्धो दुर्योधनः सविलम्बः स्वयं सज्जीभूय भीष्मद्रोणादिभिः सार्द्धं कुरुजाङ्गलमेवमुपस्थितः । अन्येऽपि राजन्यकास्तत्रोपागताः सन्तो युद्धावसरमपेक्षन्ते नाम । एतत् सर्व्वं दृष्ट्वा श्रुत्वा च दीनमानसया कुन्तीदेव्या सनिर्बन्धमनुरुद्धो भीष्मोऽनिच्छन्नपि कुन्ती विदुरेण समं प्रेषितवान् ।

(नेपथ्ये कलकलः) अये ! किमिदमापतितं (साश्चर्यमालोकयति)

देव—पश्यतु भगवन् !

भूतप्रेतपिशाचभङ्गविकटैर्व्योम्नि क्वचिद्धूर्ज्जटिः (?)
कासश्वासमहाज्वरादिसहितो देवः कृतान्तः क्वचित् ।
क्वाप्यग्निः क्व च मारुतः परिकरैः सार्द्धं क्वचिद्वज्रधृक्
पौलस्त्यः सह राक्षसैर्धनपतिर्यक्षैः क्वचिद् दृश्यते ॥

नारदः—वत्स ! इमेऽपि देवा भगवद्वासुदेवनिदेशेनात्रोपगताः ।

देव—कथङ्कारमिमे विदितवृत्तान्ताः ?

नारदः—कदाचिद्भगवद्दर्शनेच्छया भ्रमता मया यदृच्छया द्वारकायामुपस्थितम् । तदा भगवदादिष्टेन मया दौत्यं स्वीकृत्य त्रिदिवमुपगम्य मानववीरैः सह युद्धार्थमामन्त्रिता मया देवाः । त एवैते पुनरिदानीं समराय सम्मिलन्ति ।

देव—तदिदानीं किं करोमि । अवसितं मे दौत्यकार्य्यम् ; तथापि वन्दनीयः स भगवानिति तं नमस्कृत्य दिवं यामि ।

नारदः—तदा गच्छ ; अहमपि भगवन्तं प्रणम्य युधिष्ठिराय सर्व्वं वृत्तान्तं प्रस्तुत्य प्रतिनन्दयामि ।

(इति नारददूतौ प्रस्थितौ)

विष्कम्भकः

---

## अष्टमं निखिलभारतवर्षीयसंस्कृत-महासम्मेलनम् ।

भूतःपूर्व्वं संस्कृतमहासम्मेलनमग्रवर्षे निर्वृत्ते। ऐषमस्तावत् हिन्दुविश्वविद्यालयनायकैः श्रीमद्भिर्मदनमोहनमालव्यैर्निमन्त्रितस्यास्य महासम्मेलनस्य अष्टममधिवेशनं विगते सौरभाद्रस्य षष्टेऽहनि पराह्ने सार्द्धैकवादनवेलातः परेद्युः सायमवधि पुष्पदर्शने काशीक्षेत्रे पुरातन-हिन्दुमहाविद्यालये 'काशीनरेशभवने' यथारीति सुसम्पन्नमभूत्।

अत्राधिवेशने तत्रभवन्तः श्रीमन्तो महामहोपाध्याया-हरनारायण शास्त्रिणः (दिल्ली), महामहोपाध्याय-हाथीभाई-शास्त्रिणः (जामनगर), महामहोपाध्याय-सीतारामन्यायाचार्य्याः (नवद्वीप) महामहोपाध्याय-गुरुचरणतर्कदर्शनतीर्थाः (कलिकाता, सं सां परिषत्) पं पञ्चानन-तर्कवागीशाः (भट्टपल्ली) पं अनन्तकृष्णशास्त्रिणः, कालीपदतर्काचार्य्याः पशुपतिनाथशास्त्रिणः (सं सां परिषत्) महामहोपाध्याय-जयदेव-मिश्राः, पं देवकीनन्दनशास्त्रिणः फणिभूषणतर्कवागीशाः, ताराचरण-साहित्याचार्य्याः अन्नदाचरणतर्कवागीशाः, (काशी) पं अनन्तराम-शास्त्रिणः (बड़ोदा) गिरिधरचतुर्व्वेदिनः (लाहौर) श्रीपादशास्त्रिणः (इन्दौर) पं अखिलानन्दकविरत्नशर्म्माणः, सत्यदेवशास्त्रिणः (कानपुर), पं उमाचरणकविरत्नकविराजाः, एवं भगवान्दासगुप्तास्तथा प्रायेण पञ्चशतसंख्याकाः विभिन्नप्रदेशेभ्यः प्रतिनिधिभूताः पृथगामन्त्रिता वा सम्मेलनमुपस्थानेनाशोभयन् एतदन्ये श्रोतारोऽपि तदधिकाः समख्यायन्त ।

तत्रादौ श्रीमद्भिर्विद्याधरशास्त्रिप्रमुखैर्भूदेवविद्वद्भिः श्रौतसङ्गीतकेन सुविहिते मङ्गलाचरणे, कलकण्ठचिम्मनलालगोस्वामिभिः (विकानीर) सुगीतेन समुद्भासितवङ्गसाहित्याकाशस्य वङ्किमचन्द्रस्य 'वन्देमातर'-मादिकगीतेन प्रमोदिते सहृदयवृन्दे, वाचितायाञ्च कविवरैर्हरिहर-शास्त्रिभिः स्वकृतायां "काशीप्रशस्तौ" स्वागतसमितेः सभापतयो

गहननीतिकान्तारविचारचतुरा वचनकरणसमलीला साळव्यमहोदया भूयोभूयः समुपस्थितदोषन्नान् दूरदूरात् समागमलेगिताननभिवन्दमानाः समापयन्तश्च सम्भावितानवैगुख्यानि, श्रावितवन्तः स्वल्पविस्तरसम्पन्नलभावगर्भं स्वकीयमभिभाषणम्।

अथ विरतेषु तेषु, महामहोपाध्याय-हरनारायणशास्त्रिविद्यासागरैर्महासम्मेलनस्य उद्देश्यानि विशेषेण विवृत्य कलिकाता-राजकीयसंस्कृतमहाविद्यालयाध्यापकचराः साम्प्रतं हिन्दुविश्वविद्यालयप्राच्यविभागाध्यक्षपदमलङ्कुर्व्वाणाः महामहोपाध्याय-श्रीमन्तः प्रमथनाथतर्कभूषणपादा एषमस्तनसंस्कृतमहासम्मेलनस्य नायकपदाधिष्ठानाय सगौरवमनुरुद्धाः।

सुप्रस्तावेऽस्मिन् पं सूर्य्यनारायणशास्त्रिभिः (जयपुर), पं गिरिधरशर्म्मभिः (जयपुर), पं अमृतरामशास्त्रिभिः (वड़ोदा) तथा पं कालीपदतर्काचार्य्यैश्च (सं सा परिषत्) तर्कभूषणमहाशयानां गुणगणवर्णनापुरःसरं सर्व्वात्मना समर्थिते, अनुमोदिते चाविसंवादं सहर्षकरतालैः सम्मिलितविद्वद्वृन्देन, सौम्यदर्शना दर्शनपारदृश्वानस्तर्कभूषणपादा विद्वत्सुलभविनयप्रकर्षेण क्री-यन्त्रित इवात्मनस्तदानीन्तनवरणीयपदाधिकारि बहुमानं धीरधीरं विज्ञापयन्तः साभापत्यमङ्गीकृत्य तदर्थविशेषितं मध्यमासनमध्यासत।

अथासौ सभापतिमहाशयास्तन्मात्रसुलभेनौजस्विना मधुरवचनरचनेन भावगम्भीरं मौखिकमेव स्वाभिभाषणमभासयन्।

अत्रावसरे श्रीमद्भिर्मालव्यमहाशयैः सम्मिलितानां संस्कृतरसिकानां पुरस्तात् "संस्कृतभाषाशिक्षाया उपयोगित्व"मित्यधिकृत्य क्रमेण पञ्च विप्रतिपन्नप्रश्नानुत्थाप्य तेषां सूत्तरदातृभ्यो विद्वत्परिषन्निर्णीतेभ्यः पुरस्कारस्वरूपं रूप्यकशतपञ्चकं निवेद्यमित्यङ्गीकृतम्। तानि चोत्तराणि परेद्युः सम्मेलने वक्तृभिर्वाचनीयानीति निरणायि।

तदेवं सम्मेलनमन्त्रिणा गिरिधरशर्म्मणा विषयनिर्वाचनसमितेः

सम्मेलनपरिचालकसमितेस्तु नामसु समुद्घोषितेषु रूपकाभिनयप्रबन्धन-सम्भ्रमेण पश्चिमवेलायामवसानमाप प्रथमदिवसीयसम्मेलनम्।

अथाविलम्बमतित्वरया भारतीवर्षः कश्चित् काशीस्थ"भारती-समिति"सदस्यैरन्यैश्च कैश्चन परिषत्सत्ते: क्रियायुक्तिकुशलैरुदारं सुसज्जिते रङ्गमञ्चे सायमष्टवादनतः समनन्तरं सादरामन्त्रणागताः संस्कृतसाहित्यपरिषत्सदस्याः सहस्रमितयमितविद्वत्सामाजिकानां पुरतो महाकविभासस्य कृती "दूतवाक्यम्" "मध्यमव्यायोगम्" तथा राजकविमहेन्द्रविक्रमस्य "मत्तविलासम्" नाम प्रहसनञ्चेति रूपकाणि क्रमेण प्रायुञ्जत। तत्राभिनयः प्रयोक्तॄणां तत्तद्भावव्यञ्जननैपुण्येन चिरचतुरशिक्षाभावसम्भावितेन गुणस्तद्विधिर्धार्यतां मानसरसनाय नूनमलमभूदिति तदानीं प्रसादस्मुखास्ते सहृदयाः प्रमाणमासन्।

परेद्युः (शुक्रवासरे) प्राङ्निर्दिष्टितायां प्रातरष्टमहोरायां विषय-निर्व्वाचनसमितेरधिवेशनं जातम्। तत्र पूर्व्वेद्युः प्रस्तुतं पुरस्कारग्रहण-मनेकेषामुत्तरपक्षीयवक्तॄणामरोचकमिति जानद्भिः समितिसदस्यैः पुरस्कारप्रस्तावः प्रत्याहृतः। याचनार्थमागता निबन्धाश्च विविधाः पठिता न भवेयुः, किन्त्वायतौ ते उत्कर्षापकर्षविचारेण प्रचारमर्हन्तीति निर्णीतमभूत्।

तत्र मध्याह्नतः प्रथम-होरायां मूलसभाया अधिवेशनं प्रारब्धम्। तत्र, महामहोपाध्यायसीतारामन्यायाचार्य्य--महामहोपाध्यायहाथीभाइ-शास्त्रि—महामहोपाध्यायजयदेवमिश्र—शालग्रामशास्त्रि—अखिला-नन्दकविरत्न—श्रीपादशास्त्रि—उमाचरणकविरत्न—कालीपदतर्काचार्य्य —सूर्य्यनारायणशास्त्रि - मथुरानाथशास्त्रि—हिन्दुविश्वविद्यालयाध्यक्ष-ध्रुव—महाशय बाबु भगवान्दासप्रभृतिभिर्नानादेशेभ्य आगतैर्बहुभिः प्रसिद्धनामभिर्विद्वद्भिर्मालव्यमहोदयेन कृतप्रश्नानां उत्तरपक्षमधिकृत्य रमणीयानि व्याख्यानानि प्रदत्तानि। सर्व्वेषां व्याख्यानश्रवणानन्तरं मालव्यमहोदयेनापि स्वसन्तोषं प्रकटय्य तथा गीर्वाणवाणा

महिमानं प्रख्याप्य देवभाषया एकं रुचिरं व्याख्यानं प्रदत्तम्। ततः सभापतिपादैः सारवान् स्वल्पाक्षरः उपसंहारः कृतः। ततः सम्मेलनस्य स्थायिमन्त्रिभिर्गिरिधरचतुर्वेदपादैः सभापतिभ्यः विदेशागतेभ्यः सर्वेभ्यः प्रतिनिधिभ्यश्च धन्यवादः प्रदत्तः। आगामिवर्षस्य अधिवेशनार्थं निमन्त्रणद्वयमायातम्—एकं कानपुरनगरात्, अपरं दक्षिणापथवर्त्ति-मैसोरनगरात्। तयोः कानपुर-प्रतिनिधिवर्य्येण आयुर्वेदाचार्य्येण सत्यदेवशर्म्मपाण्डेयेन कृतं निमन्त्रणं प्रथममिति ज्ञात्वा तदेव स्वीकृतम्। ततः सायमष्टमहोरायां सभाभङ्गो जातः।

---


সারিবাদ্যরিষ্ট
অধ্যক্ষ মথুর বাবুর
মহাভৃঙ্গরাজ তৈল
স্থাপিত
১৩০৮
ঢাকা
শক্তি ঔষধালয়
ঢাকা কলিকাতা ময়মনসিংহ জলপাইগুড়ি গৌহাটি চট্টগ্রাম রংপুর পাটনা শিলেট সিরাজগঞ্জ বেনারস ও মান্দ্রাজ




গুণে অদ্বিতীয়, গন্ধে অতুলনীয়, শিরোরোগের মহৌষধ। এক শিশি ১ টাকা, ৩ শিশি ২॥০, ৬ শিশি ৫৲ টাকা, ১২ শিশি [illegible] টাকা, এক গ্রোস ১০৮৲ টাকা, ডাকমাশুল স্বতন্ত্র।

---



রক্তদুষ্টির মহৌষধ। শরীরের দুর্ব্বলতা দূর করিয়া কান্তি ও পুষ্টি বর্দ্ধনে অদ্বিতীয়। ১ শিশির মূল্য ১॥০ দেড় টাকা, ৩ শিশি ৩৸০ আনা। ৬ শিশি ৭॥০ সাড়ে সাত টাকা, ডাকমাশুল স্বতন্ত্র।

**সি কে সেন এণ্ড কোং লিমিটেড।**

২৯নং কলুটোলা ষ্ট্রীট, কলিকাতা।

প্রকাশক ও মুদ্রাপক—শ্রীজানকীনাথকাব্যতীর্থ।
সংস্কৃতসাহিত্যপরিষদ্ভবনম্, শ্যামবাজার ব্রীজরোড, কলিকাতা।
মুদ্রণস্থান—শ্রীপ্রেস, ১০৩ কর্ণওয়ালিস ষ্ট্রীট, শ্যামবাজার, কলিকাতা।

१८४५ शकीये आश्विने
October 1923.

Reg. No. C. 1073.

६ष्ठ वर्षस्य ६ष्ठ संख्या
Vol. VI. No. 6




# संस्कृतसाहित्यपरिषदो मासिकं मुखपत्रम् ।

सम्पादकौ— महामहोपाध्यायश्रीदुर्गाचरणसांख्यवेदान्ततीर्थः
श्रीकालीपदतर्काचार्य्यश्च

सहकारिसम्पादकः—श्रीजानकीनाथसाहित्यशास्त्री ।



प्रतिखण्डमूल्यं ।० चतुराणकम् ] [ वार्षिकमूल्यं २) रूप्यकद्वयम् ।
Foreign price 7s. yearly including postage.

স্থান পরিবর্ত্তন ।—" সংস্কৃত বুক্‌ডিপো " ২৮।১ নং কর্ণওয়ালিস ষ্ট্রীটে উঠিয়া গিয়াছে। যে কোন ...

কেশরাশিকে কুঞ্চিত ও কোমল করিবার জন্যই

# কে-শ-র-ঞ্জ-ন-তৈ-ল




এই আসমুদ্র ভারতের সর্ব্বত্রই কেশরঞ্জনের শতমুখে সুখ্যাতি। নিত্য স্নানকালে কেশরঞ্জন মাথায় মাখিলে সমস্ত দিনটী চিত্ত প্রফুল্ল থাকে। কেশরঞ্জন নিত্য মাথায় মাখিলে মাথা ধরা, মাথা ঘোরা, অনিদ্রা, মন হু হু করা প্রভৃতি উপসর্গ বিদূরিত হয়। দেশের রাজা মহারাজা হইতে সামান্য গৃহস্থ গৃহেও কেশরঞ্জনের সমাদর। আপনিও ব্যবহার করুন। মূল্য প্রতিশিশি এক টাকা, ডাকব্যয় সাত আনা।

## স্নায়বিক দুর্ব্বলতার আশু প্রতিকার।

বলবর্দ্ধক, মেধাবর্দ্ধক ও স্মৃতিবর্দ্ধক মহৌষধ। আমাদের "সঞ্জীবন রসায়ন" স্না... দুর্ব্বলতার জন্য যাহাদের উদ্যম-উৎসাহশক্তি-স্ফূর্ত্তি ও স্মৃতিশক্তি বিনষ্ট হইয়াছে, ... অগ্নিমান্দ্য প্রভৃতি গ্লানিকর উপদ্রব উপস্থিত হইয়াছে, তাঁহাদের পক্ষে সঞ্জীবন র... অমৃতের ন্যায় উপকারী। বিশেষতঃ ইহাদ্বারা বমন, বমনেচ্ছা, উদ্গার, হিক্কা, আ... (পেট ফাঁপা) ও পেট ভুটভাট করা প্রভৃতি পেটগরমের উপদ্রবসমূহ অচিরে নি... হইয়া থাকে। এক কথায় বলিতে হইলে, অজীর্ণ, অগ্নিমান্দ্য ও স্নায়বিক দুর্ব্বলতা নি... জন্য এবং ছাত্রগণের মেধাবৃদ্ধি করিতে "সঞ্জীবন রসায়নের" ন্যায় অব্যর্থ ঔষধ বিরল। এক শিশির মূল্য ১৲ টাকা। মাশুলাদি ৵০ আনা।

পরিবর্ত্তিত **সচিত্র কবিরাজ-শিক্ষা।** পরিবর্দ্ধিত

### শ্রীযুক্ত নগেন্দ্রনাথ সেনগুপ্ত প্রণীত।

সমগ্র আয়ুর্ব্বেদ শাস্ত্রের সার সঙ্কলন। বড় বড় আটটী খণ্ডে সমগ্র পুস্তক বি... অতি সরল ভাষায় লিখিত হওয়ায়, কেবল চিকিৎসকের নয়—সাধারণ গৃহস্থের... ইহা একখানি নিত্য-ব্যবহার্য্য গ্রন্থ। নাড়ী পরীক্ষা হইতে আরম্ভ করিয়া সমস্ত রো... নিদান, চিকিৎসা-প্রণালী আয়ুর্ব্বেদীয় ঔষধ তৈল, ও ঘৃতাদি-প্রস্তুত-বিধি, এবং বিবি... দীর্ঘজীবন-লাভের উপায়স্বরূপ স্বাস্থ্যকারক স্থানসমূহের পূর্ণবিবরণ, রোগীর পথ্য... দ্বিতীয়খণ্ড মহর্ষিদের গৌরবস্বরূপ—সুশ্রুত-সংহিতা এই সংস্করণে সন্নিবেশিত হই... মূল্য ২৸০ টাকা। ডাকমাশুল ও প্যাকিং ৸০ বার আনা।

### কবিরাজ নগেন্দ্রনাথ সেন এণ্ড কোং, লিমিটেড্।

১৮।১ ও ১৯ নং লোয়ার চিৎপুর রোড, কলিকাতা।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

१८४५ शकीय आश्विने, ६७-वर्षस्य ६७-संख्या


## ॐ नमः शिवायेति शिवस्तोत्रम् ।

(कृतिरियं महामहोपाध्याय-कविसम्राट्-पण्डितराज-श्रीयादवेश्वरतर्करत्नस्य)

अनादिस्त्वमनन्तस्त्वमनुपासर्शनोऽनघः ।
अनन्तोद्यत्फणच्छत्रोऽनन्तासीमपयोनिधिः ॥ १
अद्रिकान्याऽन्नपूर्णा तेऽपर्णा स्वर्णनिभा वधूः ।
अच्युताङ्गाङ्गसंसक्त अक्षमालाविभूषित ॥ २
अक्षतैर्दूर्व्वया तेऽर्घ्यमपराजितया कृतम् ।
अञ्जना प्रभाव गाङ्गेनाजोऽयच्छन्नमोऽस्तु ते ॥ ३
उमापतिकषामिव्य उषसि त्वमुदीयसे ।
कामीशोत्तरदिक्पालः सेवते दासवत् सदा ॥ ४
ऋद्धर्त्तासुराङ्गनादि त्वदन्य विश्वस्य विद्यते ।
उदकान्ते तनूरन्या उदग्राङ्गीयविग्रह ॥ ५
उरस्युरुकुचोरस्ते मदिरामदिरेक्षणा ।
मुदिरोन्मुक्तचिकुरोन्मत्ता ते मत्तकामिनी ॥ ६

मधूकपुष्पैर्मदनैर्मालूरस्य फलैर्दलैः।
अर्चितोऽभूर्भवो भौमो मधुना मधुऋतुणा॥ ७
महामाया प्रिया तेऽस्ति महिषासुरमर्दिनी।
महिमानं महादेव कस्ते वेत्ति महत्तमः॥ ८
मनुभिर्मनुजैरर्च्यो मनुभिर्जप्यसे सदा।
मर्त्यैः स्मर्त्तव्य एवासि शम्भो तुभ्यं नमो नमः॥ ९
ओतप्रोतस्वरूपेण सर्व्वं सर्व्वज्ञ वर्त्तसे।
ओषधीशशिरोरत्नभूषणो भूतिमान् भवान्॥ १०
ओड्रं श्वेतं तथा नीलं पुष्पं गृह्णासि केवलम्।
ओड्रेषु भासते नित्यं लिङ्गरूपेण सर्व्वतः॥ ११
ओष्ठेनापि भवन्नाम सकृदुच्चार्य्यते यदि।
प्रसीदसि तथापि त्वं तुभ्यमोजस्विने नमः॥ १२
ओङ्कारवेद्य ओङ्कार ओङ्काराद्रिशिरःस्थितः।
ओङ्करोषि सदा भक्तवाञ्छापूर्त्तेश्च शङ्कर॥ १३
काशिकायां मुमूर्षूणां कर्णेषु करुणार्णव।
ओङ्कारं यच्छसीशान ओङ्कारेश्वर ते नमः॥ १४
नगराजसुताकान्त नरकासुरपूजित।
नराणां नरकाग्नीनां त्वं निर्व्वापयिता पिता॥ १५
नन्दनन्दनपूज्योऽसि नरनारायणप्रियः।
नभोगामिनदीमौले नवचन्द्रकशेखर॥ १६
न जाने महिमानन्ते नन्दिवन्दित नन्दसि।
नन्दोऽसि नटराजोऽसि नमस्तुभ्यं नमो नमः॥ १७
मयूरासनतातोऽसि मधुसूदनवल्लभः।
मदमत्तस्य मदनस्यान्तकः चान्तिवर्ज्जितः॥ १८
मतिं ददासि मर्त्येभ्यो मठेषु मठमीश्वर—।
महामेघप्रभा मत्ता श्यामा ते वक्षसि स्थिता॥ १९

मखुप्रियो मखहरो मनोहरवपुर्धरः ।
महामोहाब्धिमग्नोऽस्मि मामुद्धर महेश्वर ॥ २०
शिखण्डिभुक्शिरस्त्राण शिखिवाहनकारण ।
शिशुचन्द्रशिरोमौले शिखरीन्द्रसुतापते ॥ २१
शिरीषशिशिरस्तोमसिताङ्ग शितिकण्ठभृत् ।
शितशूलशिखः शिष्यान् शिक्षयास्येव शिक्षकः ॥ २२
शिबिराजपते शम्भो शिविरन्ते शिलोच्चये ।
शिवात्मक शिवाकान्त शिव तुभ्यं नमो नमः ॥ २३
वामेन बाहुनाश्लिष्टा भाति ते वामलोचना ।
वासुदेवः प्रियो वामदेव वासवपूजित ॥ २४
वानरेन्द्रध्वजप्रीतो बाणरावणपूजितः ।
त्वं वायुवारिवसुधावह्निव्योमतनूधवः ॥ २५
वाहनन्ते बलीवर्दो वारणत्वक्समावृतः ।
भासि वासुकिकेयूरो वाजिमेधेन पूज्यसे ॥ २६
यमुनाकूलकान्तारे यमलार्जुनभङ्गकृत् ।
भेजे गोपीश्वरं त्वाम्भो शम्भो स यदुनन्दनः ॥ २७
यतीनां यतमानानां त्वं सेव्यो यतचेतसाम् ।
यज्ञेश्वरो यज्ञरूपो यजमानोऽसि यज्ञहा ॥ २८
यं यत्नधूपधूमाद्यैरभ्यर्च्य त्वां हरिर्हर ।
लेभे सुदर्शनं चक्रं कोऽस्याराध्यस्त्वया समः ॥ २९
युगमपि युगमस्मिन् योनिषु भ्राम्यमाणो-
यमनियमविधिज्ञो वत्न नीत्यं न वर्त्ते ।
यजनमपि न जाने नैव यज्ञं न योगं
कथमपि न च योगक्षेममेवं भजामि ॥ ३०
शिव शिव भवसौधो योगनिद्रानिषस:
क्षिपसि ननु न दृष्टिं मां निधातुं दयाय ।

अथ यवनिकया मे मायया‌च्छाद्य चक्षु-
र्जगति किल दधासि स्वान्धकारित्वमित्यम्॥ २१

---

## लीला।

लेखकः—श्रीभवभूतिविद्यारत्नः।

पाठलौकर्य्यैवग्रपदेशेन नगरं प्रत्यावृत्तस्य मम लीलाचिन्ताग्रस्तं चित्तमन्वभूत् प्रतिमुहूर्त्तमेवाध्ययनप्रत्यूहलक्षणम्। पुस्तकनिहिता मे दृष्टिः केवलं लीलारूपमपश्यत्, पाठविषयविरतं मनः केवलं लीलाविषयमभावयत्। अध्यापकवृन्दं सहसैतन्मे परिवर्त्तनमवलोक्य किञ्चिद् विस्मयाकुलं सञ्जातम्। वार्षिकपरीक्षाफलमपि सुष्ठु नाभूत्। अस्मिन्नेवावसरे किमपि लीलाचिन्तावशावर्त्तकं वृत्तं मां पुनर्द्विगुणोत्साहं प्राचोदयत् पाठकर्म्मणि। माधवो नाम ग्रामस्थः कश्चिद्बन्धुरेकदा मम नगरावासमागत्याब्रवीत् "मित्र सुशीलकुमार, शक्नोषि चेदृदयं ते किञ्चिद्दृढीकर्त्तुं, त्वामहं प्रवक्ष्यामि किमपि वचनं न हि सख्यक्, त्वत्संश्लेषविरहितमिति।" ततो मया समुत्सुकं पृष्टः स कठोरवज्रसंघोषमिव साम्प्रतं संघटितं हृदयदेवताया मे लीलायाः पूर्व्ववङ्गवास्तव्येन केनचिद् भूस्वामिना सह परिणयवृत्तमश्रावयत्। स पुनर्बभाषे "यद्यस्मिन् शुभानुष्ठाने त्वदीयगृहगमनं त्वदाकृष्टपूर्वं लीलाचित्तं विकुर्व्वत् किमप्यशुभं परं संघटयेदिति साशङ्कं तत् निवारितं त्वन्मातुललीलाजनकाभ्याम्। उद्वाहकाले तु लीलायाः

किमपि त्वन्मिलनभङ्गनिमित्तकं नैराश्यकरं भावान्तरमनिरीक्ष्य वयं तव बन्धुजना न निर्णेतुमपारयाम सा ते कीदृक् प्रणयास्पदमासीदिति। लीलाविषयकप्रणयवृत्तं तव मुखान्नितरां निशम्य लीलायास्त्वदनुरक्तजीवितत्वे जातप्रत्ययाः खलु वयं प्रागमन्यामहि, यत् परिणयकाले अशोकवनस्थिता जनकनन्दिनीव गृहकोणस्थिता लीला मुहुः क्रन्दनरता कथमपि नानेतुं शक्यते विवाहस्थलं, अविकृताकृतेस्तु तस्याः कमपि चित्तविपर्ययमनवलोक्य वयं तव परं सन्देहमुपागताः। किमासील्लीलाप्रेम ते भ्रान्तिमूलकमथवा वास्तवं किमपि वस्तु? अपरिक्षुब्धचित्ता सा लीला स्वस्वामिना तेन भूस्वामिप्रवरेण परिणयात् परमेव तद्देशप्रचलितरीतिमनुसृत्य स्वालयं नीता, दूरत्ववशात् ततश्च नेदानीं प्रेषयिष्यते। तत् समुन्मूलय सखे लीलाचिन्तां त्वदीयमर्मस्थलात्। यदि हतविश्वासा सा त्वामात्मभिन्नं मन्येत, कथं वा त्वमात्मनस्तामभिन्नां मन्यमानः स्वकल्याणमार्गे विघ्नं समाचरेः?”

माधववचनमाकर्ण्य निदारुणमिलननैराश्येन विध्वस्तान्तःकरणोऽपि बहिस्तदप्रकटय्य स्वल्पमात्रप्रियसम्भाषणात् परमेव केनापि कार्यव्यपदेशेन तं व्यसर्ज्जयं तत एकलतां गतो व्यचिन्तयम् “अहो! निर्दयः खलु संसारः, यो हि नितरामेव समुद्यतः समुत्पीड़यितुं यूनां युवतीनाञ्च कोमलमर्म्मस्थलानि। शुभकार्य्यं चेदशुभविघ्नमयं भवेदित्याशङ्कया शैशवसहचर्य्याः लीलायाः परिणये गमनमपि मे निवारितम्। हा धिक् पुनर्लीलायाः प्रणयशून्यं चरित्रम्! यया हि कियत्कालात् प्राङ् मेकथीतं “न कदाप्यपसारयितुं शक्या तव मूर्त्तिरेतद्दुर्भगहृदया-दि”ति, तया त्वात्मनः परकीयत्वेन मदर्थं वाष्पविन्दुरपि न त्यक्तः? एतावत् प्रणयलेशरहितं किं रमणीनां हृदयम्? अहमत्र लीलाचिन्तया परित्यक्तकामोऽस्मि आत्मनो जीवनाभ्युदयकरमध्ययनम्, अविकारचित्ता तु सा प्रसन्नवदना मङ्गतभावनाविहीना पत्युरालयं गता। हा कष्टम्! एतावदपकृष्टं हि चरित्रं मानवानाम्! अथवैतद्

विस्मरणशीलत्वं किं जागतिकानां रीतिः ? तत् कथमहं विश्वासघातिन्यास्तस्याः कृते मम कल्याणकरेऽध्ययनकर्म्मण्यनासक्तो भवेयम् ? लीला कदापि मे शैशवसखी नाभूत्—नाभूदभीप्सितं मे कदाचित्तया सह मिलनं,—नापि भवितव्यं तया सह मे केनापि सम्बन्धेन।" इत्येवं लीलाचिन्तापरिवर्ज्जनदृढव्रतोऽहं पाठकर्म्मणि पुनरेतावन्मनो न्यवेशयं, यत् न केवलमध्यापकवृन्दस्य मदध्ययनवैराग्यदर्शनकातरं चित्तमविलम्बेनात्मपक्षपातित्वेन परिणमयितुमशक्नवमपितु विश्वविद्यालयपरीक्षाजलनिधिं परमनैपुण्येन समुत्तीर्य्य सर्व्वेषां विपुलहर्षहेतुः सञ्जातः। स्नेहवन्तौ मातुलदम्पती ममैतत्साफल्यमवलोक्य परां प्रीतिमुपगतावात्मनः परकीयसन्तानपालनं सार्थकं मेनाते। एतां च मम विद्यापाटवकथां समाकर्ण्य मह्यं दुहितृदानाकाङ्क्षिणो बहव एव कन्याजनका अहर्निशं मातुलसमीपं समागताः, मातुलावपि दारपरिग्रहाय सविशेषं मामनुरुद्धवन्तौ, अहन्तु लीलावज्रापातविहतहृदयो नेह जीवने पाणिग्रहणेच्छुर्विनीतवचनं विवाहे स्वस्यानभिमतमज्ञापयम्। विश्वविद्यालयपरीक्षासु सर्व्वत्रैव शीर्षस्थानमधिकुर्व्वता मया तदानीन्तनरीत्यनुसारेणाधिगतं भारतीयजनदुर्लभमधिकारणिकपदम्। पूर्व्ववङ्गान्तःपाती मयमनसिंहाख्यजनपद एव मम प्रथमकर्म्मस्थलमभूत्। प्रीतौ तुष्टौ मातुलदम्पती तत् स्थानं नेतुमहं प्रादर्शयं परमाग्रहम्। तौ तु चिरप्रियां जन्मभूमिं परित्यज्य तत्राजिगमिषू केवलहृदयनिःसृताशीर्व्वचनधाराभिर्मामभिषिञ्चन्तौ प्रतिसप्ताहमेव कुशललिपिं प्रेरयितुं मामुपदिश्य व्याकुलमनसौ मां व्यसर्ज्जयताम्। अहमपि तयोः श्रीचरणरजांसि शिरसि कृत्वा कर्म्मस्थलं गतः।

---

# चन्द्रालोकी

## पञ्चमोऽङ्कः

लेखकः—श्रीधूर्जटिप्रसादकाव्यतीर्थः

ततः प्रविशन्ति रुक्मिणी पाण्डवमाता चेटी च

रुक्मिणी—अज्जे ! विह्निदा ह्मि तदो तारिसे वि अवसरे कहं णु अज्जउत्तो एव्वं आचरदित्ति। सुदं अ सब्बो अप्पविच्छेदं ण कामेदि अदो केण वि कारणेण होदव्वं त्ति तक्केमि।

कुन्ती—वच्छे ! को वा असस्स दोसलेसो अह्माणं भग्गं ज्जेव एत्थ अवरज्झदि अण्णधा कधं णु क्खु, तं ज्जेव सव्वकल्लाणणिदाणं साहसं जाणिअ इत्थिआसुलह चवलदाए सा मे वहू कुमारी अ भीमसेणो गङ्गाह्नाणपुण्णफलं विअ अवन्तीराअं गेह्निअ अअरं आअदा।

रुक्मिणी—(सहर्षं) जुत्तं णाम इदं सुकलत्तिअवहुणो कुमारस्स अ भीमसेणस्स। एदं सुणिअ अजादसत्तुणा किं भणिदं ?

कुन्ती—किं णु जुत्तं अजुत्तं वा त्ति ण आणामि ; किन्दु जुहिट्ठिरेण वि ताणं कज्जेसु सम्मदी दिण्णा।

रुक्मिणी—सुगहीदणामा धम्मराअणन्दणो अजुत्तं अधम्मं अ आचरदि त्ति कहं सङ्गच्छदि ? अदो एव्वं विभावेमि ; इध सुह-परिणामं सव्वं भवेत्ति।

कुन्ती—तहवि अस्सिं समरे किं त्ति परिणामो भवेत्ति ण विभावेमि।

रुक्मिणी—अज्जे ! विस्सद्धा होहि भत्ताधीणमाणसो भअवं ण उण भत्तेसु कदा वि तेल्लोअ संहारअं अत्थं ण णिक्खिवेदि।

कुन्ती—सव्वं सुमरेमि किन्दु जावजीवनं दुग्गदिपरिपीड़िदाए मए खिउणं चिन्दअन्दीए वि ण विस्ससीअदि।

रुक्मिणी—समस्सदिदु समस्सदिदु अज्जे ! अवि णाम ण सुदं जं हि पुरा भत्तअणरक्खत्थं जो पुरिसोत्तमो पह्लादस्स विसणं अमिदी करोदि। ध्रुवं वणे वणे अ अनुसपन्दो महद्दुक्खं अणुहोदि ! सो णाम पाण्डवाणं उवरि कुविदो त्ति विलोअअन्दी वि ण विस्ससेमि। ता विरमदु विरमदु इमादो दुब्विन्दादो भअवदो।

नेपथ्ये—भो भो महारुद्रपुरःसराः ! सर्व्वातिशयितसारा दिक्-पालकाः ! पीयूषधारालालनोचिता महाबलपराक्रमाखिलदशाधि-पतयः ! शस्त्रास्त्रग्रामप्रयोगसंहारवेदितारः प्रबलप्रतापानलनिराकृत भास्वद्भास्करगभस्तयश्च यादवधुरन्धराः ! आकर्णयन्तु भवन्तः ; एष खलु चराचरगुरुर्भगवान् द्वारकाधिपतिर्वः समाज्ञापयति—

क्षत्रोन्मूलकभीमभार्गवजयी भीष्मः स सत्यव्रतो
द्रोणाचार्य्यमुखाश्च कौरवचमूनाथा यदग्रे स्थिताः
येर्ष्वेवाहितभास्वरास्त्रनिकरैष्वाकम्पते मेदिनी
दुर्व्वाराः खलु पाण्डवाः सुकृतिनः क्षत्रौजसामाश्रयाः।

तत् सावधानाः सन्तो विपक्षानिर्व्वान्वितवेगप्रसरास्तीक्ष्णधारोज्ज्वलास्त्र-शस्त्रभीषणदर्शनाश्चतुरङ्गबलसमन्विताश्चादैव कुरुक्षेत्राभियानाय सज्जी-भवन्तु भवन्त इति। यतो हि

वज्रं वज्रेश्वरस्य त्रिभुवनलयकृच्छूलपाणेस्त्रिशूलं
पाशः पाशीहस्तस्य ज्वलदनलनिभो दण्डपाणेश्च दण्डः।
चक्रं श्रीचक्रपाणेरमरबलपतेः शक्तिनाथस्य शक्ति-
रत्नेशस्याद्यस्त्रं चिरनिहितबलानीह युद्धे विदन्तु॥

रुक्मिणी—सुदं अज्जे ! जं क्खु अज्जउत्तनिद्देसेण सम्महो उग्घोसदि ठाणे ठाणे ; तेण का कधा माणवाणं देवेहिं वि दुज्जआ पण्डवा (परिजनं प्रति) विज्जुल्लदे ! सम्महाह कधेहि एसा दे मादा आआरेदि।

विदुल्लता—जं आणवेदि भट्टिणि ! (प्रस्थिता)

रुक्मिणी—इमं ज्जेव आआरिअ अज्जउत्त दंसणसुहं सुणामि।

विदुर—(प्रविश्य) इदो इदो एदु कुमारी; महादेइ इध ज्जेव पण्डवजणणीए सद्धं किं वि मन्तअन्दी चिट्ठदि; णं उवसप्पदु।

मन्मथः—(प्रविश्य, स्वगतम्) किन्नु, नामाद्यभवती भगवती पाण्डव-जननी मया द्रष्टव्येति; भवतु; उपसर्पामि। (प्रकाशं) अम्ब! प्रणमामि. आर्य्ये! अभिवादये। किम्प्रयोजनमुद्दिश्य भवत्याहमिदानी-माकारितोऽस्मि।

रुक्मिणी—वच्छ! जधा कज्जबाहा ण होदि तधा कदुअ अस्मिं क्खणे इध एक्कवारं अज्जउत्तं आआरेहि; कधेहि पण्डवमादा भअन्तं सुमरेदि त्ति।

मन्मथः—(स्वगतम्) तनयविपदमाशङ्क्य व्याकुलितमना भगवतीयं युद्धान्निवारयितुमागतेति मन्ये (प्रकाशं) यथाज्ञापयति। (प्रस्थितः)

रुक्मिणी—अज्जे! अज्जउत्तो इध आअच्छिअ जं जं कधेदि तं क्खु सव्वं ज्जेव सुणिअ णिस्संसआ होहि।

कुन्ती—किं ण क्खु, जं णाम मणोगदं अत्थि तं वाआ कधइस्सदि परन्तु अवलम्बिस्सदि ज्जेव त्ति आणामि।

रुक्मिणी—मा क्खु, मा क्खु, दे संसओ होदु।

विदुर—(प्रविश्य) देइ भअवं वासुदेवो कुमारेण समं आअच्छदि।

कुन्ती—(उत्थाय) वच्छे! दानीं गिहन्दरं गच्छेमि।

रुक्मिणी—ता क्खणं विस्समीअदु प्पुओट्ठन्दरं; विज्जुक्कदे! णं मग्गं दंसेहि।

विदुर—जं आणवेदि भट्टिणि! इध इध एदु भअवइ।

(कुन्त्या सह प्रस्थिता)

ततः प्रविशति मन्मथेनानुगम्यमानः कृष्णः

कृष्णः—देवि! कथमाकारितोऽस्मि।

कामः—तात! इच्छामि सैन्यकटकसन्दर्शनाय दुर्गं गन्तुम्।

कृष्ण:—वत्स ! गच्छ ; महामात्यायोद्धवाय निवेदय अयमहमागत एवेति ।

काम:—यथाज्ञापयति तात: (प्रस्थित:)

रुक्मिणी—अज्जउत्त ! एक्कस्सिं कज्जे किम्पि मे विसावणिज्जं अत्थि ; तहिं जइ ण कोवि कज्जोवरोहो होदि तधा कदुअ सुणादु ।

कृष्ण:—देवि ! अत्र मेऽस्तु कार्य्योपरोधो दोषो वा ; तथापि त्वत् प्रार्थनामात्रमप्यवधीरयितुं नाहं प्राबल्येनापि समर्थ:, यतस्त्वं हि प्राणेभ्योऽपि गरीयसी ; न खलु न स्मरामि

पुरा लीलावासे चरणतलघातं द्विजभृगो:
शुचं त्वां वान्वेष्टुं दशमुखहृतां प्राग् जनकजाम् ।
प्रियार्थं राधायास्तव तदभिमानो रहसि वा
सुखं वा दु:खं वा यदपि घटितं तत्तव कृते ॥

तत् कथ्यतामनुकम्पया कथं मदुत्कण्ठा द्विगुणीक्रियते क्षणे क्षणे ।

रुक्मिणी—(स्वगतम्) अज्जउत्त ! सव्वं सुमरामि ; इत्थिआणं इदं हि अहिअं सोहग्गं (प्रकाशं) पदिकरणिज्जे जुत्ताजुत्तविआरो पदिपदसेवामेत्तचरिदाक्खाणं इत्थिआणं दोसावहोत्ति विहाविअ तुह्णीं चिट्ठामि ।

कृष्ण:—देवि !

स्त्रीबुद्धि: प्रलयङ्करीति कथयन्त्यज्ञानिन: संसृतौ
ये वा वीतरसा य एव विकला: पाण्डव्यवृत्ताश्च ये ।
त्वं मे धी: करुणामयी सुखरसामोदो बलञ्चेन्द्रिये
त्वं धर्म्म: प्रणये प्रशान्तिरजरा शक्तिस्त्वमाद्या रमे ॥

तदुच्यतां देवि ! मा ते द्वैधमस्तु ।

रुक्मिणी—पुत्तव्वसणुव्विग्गाए कुन्तीए दुक्खकारणं समेदु भवं त्ति ।

कृष्ण:—किन्तस्या: शोककारणं पृथाया: ; पुत्रवात्सल्यात् ?

रुक्मिणी—सव्वसो भवं ; किं ण आणादि ।

कृष्णः—(विहस्य) आं ; अस्माभिः सह पाण्डवानां सम्प्रहारमुत्प्रे क्षमाणाया अस्या युक्तं शोककारणम्। तत्तत्र किं मया कर्त्तव्यम् ?

रुक्मिणी—इमादो समरादो णिव्वट्टेदु भवं।

कृष्णः—अथ क्व सा पाण्डवजननी भगवती कुन्ती ?

रुक्मिणी—(नेपथ्यमवलोक्य) का इध चिट्ठदि (दृष्ट्वा) विज्जुल्लदे ! आणेहि दाव इध दुवारआ पदिणिद्देसेण पण्डवमादरम्।

विद्यु—जं देइ आणवेदि (निष्क्रान्ता)

कुन्ती—(विद्युल्लतामनु प्रविश्य) जेदु जेदु जदुकुलधुरन्धरो भअवं वासुदेओ।

कृष्णः—अपि कुशलं सानुजस्यार्य्ययुधिष्ठिरस्य ?

कुन्ती—भवारिसे परिवन्थिणि कुदो क्खु कुसलं ताणं मे पुत्तआणं।

कृष्णः—मदधिकृते कान्तारे घोटकीमपहरते दण्डिदेवाय आश्रयं प्रतिश्रुत्य युधिष्ठिरादयो मह्यं स्वेच्छया द्रुह्यन्ति। अतस्तत्र को मे दोषः।

कुन्ती—दानीं ज्जेव सुट्ठु जाणिदं मए दे णाम सअं ज्जेव मरणणारअं अ कासेन्दि।

कृष्णः—न खलु न खलु तत्रभवत्याः पुत्रकाणामन्येषान्तु तदेव भवतु।

कुन्ती—एदं भअवदो वअणं वरो विअ होदु पुत्तआणं। जं होदु, तारिसा निब्बोहा भुअणे दुक्खभाइणो होन्दि त्ति को ण आणादि ?

कृष्णः—यदुक्तमनीतिवेदिन इति तत् सत्यम्। यतः—

आदौ राज्यधुरां पितृक्रमधृतां हित्वा ततो जातुषे
प्रासादे वसतिं विधाय, विपिने भ्रान्त्वा विनष्टश्रियः।
विद्धा लक्ष्यमभेद्यमन्यनृवरान् जित्वा किमन्यन्मया
सार्द्धं योद्धुमपि प्रयान्ति न च तैर्भाव्यं फलं भाव्यते॥

कुन्ती—(सोद्वेगम्) ता को णु क्खु उवाओ हुविस्सदि। भवं

ज्जेव सब्वं जोअलोअं जीवेदुं णासेदुं अ सक्कणोदि । एसो दे अज्जलो, रक्ख रक्ख मं इमादो दुव्विपाआदो । पुरा जाणिदं जं णाम केअ एक्को भोमसेणो ज्जेव मे हठआरो णिब्बोढो सारोरबलमेत्तसारो, किं दानीं पेक्खह्मि सब्वे एण जुहिट्ठिरादओ वि तारिसा, अण्णधा कहं भअदा मह एव्वं विणिद्दिदि ।

कृष्णः—आर्य्ये ! कथं वृथा खिद्यते न कोपि कमपि जीवयितुं वा नाशयितुं वा शक्नोति । तथाच

ये ये ब्रह्माण्डगर्भे वै प्रस्फुरन्ति समन्ततः ।
सकला नियमाबद्धाः को वाहं के च ते सुराः ॥

कुन्ती—एदं क्खु भवारिसाणं महाणुभावाणं जुत्तं णाम उवदेसवअणं । किन्दु अह्मारिसो इत्थिआअणो दुव्वलहिअओ ण अप्पाणं पसमेदुं सक्कणोदि (रोदिति) ।

कृष्णः—किमेतत् ? आर्य्ये ! प्राणप्रियस्य धनञ्जयस्य मातुरपि भवत्याः क एष व्यामोहः ? तत् किमन्यत्—

ये भक्ता मम ये च भक्तसुहृदो ये तेषु बद्धाशयाः
प्रेयांसो रिपवोपि ते कटुकथालापोऽपि तेषां स्तुतिः ।
योत्स्यन्ते य इमे शिवप्रभृतयो मच्छक्तिरूढौजसो
देवास्त्राणि तथाहतानि च यथा पुष्पोपहारा गले ॥

तत्केवलमिदानीं प्राकृतजनप्रबोधनार्थमिह समरमभिनीयते, परमार्थतस्तु यदेते प्रहरणसज्जा वा रथिका वा देवा वा दृश्यन्ते ततसर्वमन्तःसारशून्यं प्रतिभाति । अपिच स्मरतु भवती भगवद्द्वैपायनवचनम् अतस्त्वद्वंशालङ्कारभूतानां तव पुत्राणां यशःप्रख्यापणमिवाभिनयस्यास्य निगूढोर्थः ।

कुन्ती—जइ एव्वं ता आस्सत्थाह्मि ।

कृष्णः—तदधुना विश्राम्यतु भवती (विदुरमुखं प्रति) भद्र विश्रामयैनां राजमातरम् ।

कुन्ती—(विदुरपत्नया सह प्रस्थिता)

कृष्ण:—देवि ! किमिति विस्मितेवावलक्ष्यसे।

रुक्मिणी—अज्जउत्तस्स कज्जदंसणेण विह्मिदाह्मि जदो कुदो वा दण्डिदेआदो उव्वसीए उज्झारो कुदो वा कुन्दीसुदाणं कोत्तिवित्थारो ; एक्कं कारणं फलं अ अस्सं त्ति।

कृष्ण:—देवि ! नाश्चर्य्यमेतत् ; तदङ्गसङ्गादहमपीत्थम्भूत एवास्मि।

प्रतीहारी—(प्रविश्य) जअदु जअदु भट्टा, मन्तिणो समादिसन्ति एसो क्खु, पराहिसन्धाणविणाणत्थं भवदा प्पेसिदो प्पणिही सङ्करो णाम आअदो त्ति भट्टा प्पमाणम्।

कृष्ण:—(विमृश्य) प्रणिधि: शङ्कर: ? आं ; महाभागेनोद्धवेन देवैय समन्त:पुरसन्निहितालिन्दभूमौ तं शङ्करं सङ्गमय। अहमपि तत्रोपगम्य तानवेक्षे।

प्रती—जं आणवेदि भट्टा (प्रणम्य प्रस्थिता)।

कृष्ण:—देवि ! महती कार्य्यपरम्परा मां बाधते तदनुजानीहि मां गमनाय।

रुक्मिणी—अणुग्गहीदजणस्स किमब्भणुण्णादेण।

कृष्ण:—विद्युल्लते ! मार्गमादिशय।

बिदु—एदु एदु देओ।

(सर्व्वे प्रस्थिता:)

---

# उपासना

(पूर्व्वतोऽनुवृत्ता)

लेखकः—श्रीमद्रामकृष्णभट्टाचार्य्यन्यायतीर्थः ।

के नाम तत्रभवन्तो भगवन्तो यत्सन्निधिलाभः परमपस्तु मुक्तिरिति कीर्त्यते। अत्राह भगवान् पतञ्जलिः—

"क्लेशकर्म्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः"।

"अविद्यादयः क्लेशाः क्लिश्नन्ति खल्वमी पुरुषं सांसारिकं विविधदुःखप्रहारेणेति। कुशलाकुशलानि कर्म्माणि, अर्थाद्धर्माधर्म्माः, विपाको जात्यायुर्भोगाः, तदनुगुणा विपाकानुगुणा वासनाः, तांश्चित्तभूमावाशेरत इत्याशयाः"। * ततश्च अविद्यादिभिः क्लेशैर्धर्म्माधर्म्मरूपैः कर्म्मभिर्जात्यायुर्भोगैर्विपाकैराशयैश्च तदनुगुणवासनाभिरपरामृष्टोऽसम्बद्धः पुरुषविशेषः पुरुषान्तरेभ्यो विलक्षणः ईश्वर ऐश्वर्य्यशाली सत्यसङ्कल्प इति सूत्रार्थः फलितः। जीवास्तु नेदृशाः, यतस्ते क्लेशकर्म्मविपाकाशयैः स्पृष्टा एवेति। भगवत उपास्यत्वं जीवानामुपासकत्वमामनन्ति। भगवतो वर्णनान्तरं वायुपुराणे दृश्यते—

"सर्व्वज्ञता (१) तृप्ति (२) रनादि बोधः (३)
स्वतन्त्रता (४) नित्यमलुप्तशक्तिः (५)।
अनन्तशक्तिश्च विभोर्व्विधिज्ञाः
षड़ाहुरङ्गानि महेश्वरस्य ॥"

एतेनापि भगवतो जीवेभ्यो विलक्षणत्वमुपपन्नम्। तथाहि महेश्वरस्य सर्व्ववस्तुविषयकमेकं नित्यं समूहालम्बनं ज्ञानं प्रत्यक्षात्मकं सर्व्वदैव विराजत इति सर्व्वज्ञताशब्दस्यार्थः फलितः, जीवानां ज्ञानन्तु नेदृशं, यतस्तेषां ज्ञाने सर्व्वाणि वस्तूनि विषयतया नावभासन्ते,

---

* तत्त्ववैशारदी।

अतः सर्व्वविषयकमैकं ज्ञानं जीवानामलौकमेव, परन्तु तज्ज्ञानं प्रत्यक्षानुमानादिभेदेन नानारूपं कादाचित्कञ्चेति जीवानामसर्व्वज्ञता स्वेभ्यो भगवन्तं व्यावर्त्तयति। तदेतद् व्याख्यातं भगवता पतञ्जलिना

"तत्र निरतिशय सर्व्वज्ञवीजम्"—

इति सूत्रेण। निरतिशयसर्व्वज्ञत्ववीजमीश्वर एव स्वीकर्त्तव्यमिति तस्य पुरुषान्तरेभ्यो विलक्षणत्वम्। न च कपिलादयः साक्षात्कृतधर्म्माणः कर्म्मयोगसिद्धास्तादृशेश्वरलक्षणाक्रान्ताः "तदस्मिन्नना-श्वासा"दित्याद्याचार्य्योक्तेः। तथाहि ईश्वरं विना नान्यस्मिन् पुरुषे समाश्वसिम इति तत्रैव (भगवत्येव) तादृशसर्व्वज्ञत्वादि स्वीकुर्म्म इति फलितम्।

परमेश्वरो नित्यतृप्तः, जीवास्त्वतृप्ताः, एतेनापि जीवेश्वरयोर्विलक्षणत्वमायातं। तथाहि स्वीयसुखेच्छावदन्यत्वमेव तृप्तिपदार्थः। जीवाः स्वीयसुखेच्छावन्तो नत्वीश्वराः, ततश्च स्वीयसुखेच्छावदन्यत्वरूपा तृप्तिर्भगवत्येव सिद्धा, नतु जीवेषु, अतएव भगवतो नित्यसुखवत्त्वं सुखस्वरूपत्वं वेति सिद्धान्तः, तदेतदाम्नातम्—

"आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन।" (१)

"आनन्दं ब्रह्मेति व्यजानात्" (२)।

जीवानां बोधः सादिरनित्यश्च। तथाहि अग्न्यादितो गुरुभ्यश्च तैर्ज्ञानमाप्तम्, भगवतो ज्ञानन्तु नेदृशं, किन्तु अनादिनिधनं परमगुरुत्वस्य तत्रैव विद्यमानत्वात्। तदेतत् सूचितं भगवता पतञ्जलिना

"सपूर्व्वेषामपि गुरुः कालेनानवच्छेदात्"।

स एष ईश्वरः पूर्व्वेषामपि सर्गाद्युत्पन्नब्रह्मादीनामपि गुरुरुपदेष्टा, कालेन दिनमासादिना अनवच्छेदात् अपरिसंख्येयत्वादिति सूत्रार्थः। तथाच "यो ब्रह्माणं विदधाति पूर्व्वं यो वै वेदांश्च प्रहिणोति तस्मै" (१) "हिरण्यगर्भं जनयामास पूर्व्वम्" (२) "ऋषिं प्रसूतं कपिलं यस्त-

मग्रे ज्ञानैर्बिभर्त्ति जायमानञ्च पश्येत्" (३) इत्यादिश्रुतयस्तस्य भगवतः पूर्व्वेषां गुरुत्वे प्रमाणमवगन्तव्यम्, सोऽयं सूत्रार्थ एव योगसूत्रकृता व्याख्यात इत्यप्यवधातव्यम्। अतो भगवतो बोधस्यानादिनिधनत्वं सुस्पष्टमेव।

न च भगवतो ग्रन्थादिभ्यो ज्ञानमिति तज्ज्ञानस्य सादित्वं, तस्य (भगवतः)—

"शास्त्रयोनित्वात्"।

भगवानेव शास्त्रयोनिरिति कथं शास्त्रादितस्तदीयज्ञानम्? तदेतदाम्नातम् "अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदोऽथर्व्ववेदो व्याकरणं निरुक्तं छन्दो ज्योतिष"मिति। तथाच सर्व्वे वेदा यत्पदमामनन्ति सर्व्वाण्येव शास्त्राणि यस्मात् समुद्भूतानि कथं तादृशस्य भगवतो ग्रन्थादिभ्यो ज्ञानमिति सुव्यक्तमेव तदीयबोधस्यानादिनिधनत्वमिति जीवेभ्यो भगवतो विलक्षणत्वमुपपन्नम्।

स्वतन्त्रतापि भगवतो जीवादीन् व्यावर्त्तयति। तथाच स्मर्य्यते भगवता पाणिनिना

"स्वतन्त्रः कर्त्ता"।

यत्र स्वतन्त्रता (स्वाधीनता) नास्ति तत्र कर्त्तृत्वं नास्ति। ईश्वर एव स्वतन्त्र इति तस्यैव कर्त्तृत्वम्, जीवास्तु अस्वतन्त्रास्तथात्वात्तेषामकर्त्तृत्वमेव प्रमाणसिद्धम्। तदेतदाम्नातम् "एष हि द्रष्टा स्रष्टा घ्राता रसयिता मन्ता बद्धा कर्त्ता" (१) "श्रोत्रस्य श्रोत्रं मनसो मनो यद् वाचोऽवाचं स उ प्राणस्य प्राणः" (२) यन्मनसा न मनुते येनाहुर्मनोमतम्, तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" (३) "भयादस्याग्निस्तपति भयात् तपति सूर्य्यः। भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः" (४) "तमेव भान्तमनुभाति सर्व्वं तस्य भासा सर्व्वमिदं विभाति" (५) इत्यादि। स्मृतञ्च "ईश्वरः सर्व्वभूतानां हृद्देशेऽर्ज्जुन तिष्ठति।

भ्रामयन् सर्व्वभूतानि यन्त्रारूढ़ाणि मायया" (१)।

तदेताभिः श्रुतिस्मृतिभिरीश्वरस्य स्वतन्त्रता सुस्पष्टमुपवर्णिता जीवानामस्वतन्त्रता च। युक्तिभिरपि लौकिकीभिरस्वतन्त्रता जीवानां स्फुटैव। तथाहि कामकामिनां तेषां "रूपं देहि जयं देही"त्यादि-नानाप्रार्थना परिलक्ष्यते, किन्तु तेषां तादृशी प्रार्थना प्रायश एवाफला दृश्यते। जीवानामियमवस्था वर्णिता भगवता गीताशास्त्रे

"अनेकचित्तविभ्रान्ता मोहजालसमावृताः।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ॥"

इत्यन्तश्लोकजातेन। अतः स्वतन्त्रता ईश्वरनिष्ठैव, सा जीवेभ्य ईश्वरं व्यवच्छिनत्तीति पुरुषान्तरेभ्यो भगवतो विलक्षणत्वं सूपपन्नम्।

नित्यमलुप्तशक्तिरीश्वर एव। तथाहि जीवानां शक्तिः कदाचि-दाविर्भवति लीयते च, अतस्तेषां शक्तेर्न नित्यत्वम्, तस्माद् लुप्तशक्तयो जीवा इति प्रत्यक्षमेतत् सर्व्वजनीनम्। सेयमीश्वरशक्तिः सतत-मघटनघटनपटीयसी मायेति नाम्ना व्यपदिश्यते, मायाया अपि शक्तिद्वयमावरणविक्षेपाभिधेयं प्रमाणीक्रियते वेदान्तिभिः।

तदेतदाम्नातम्—"स एकाकी नारमत द्वितीयामैच्छत् (१) एकोऽहं बहु स्याम् नामरूपे व्याकरवाणि (२) "तत ऐक्षत अजायत" (३) यतो वा इमानि भूतानि जायन्ते" (४) इत्यादि। स्मृतञ्च—"आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्। अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्व्वतः। ततः स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदं। महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः। योऽसावतीन्द्रियोऽग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः। सर्व्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ। सोऽभिध्याय शरीरात स्वात् सिसृक्षुर्विविधाः प्रजाः। अप एव ससर्ज्जादौ तासु वीजमपा-सृजत्। तदण्डमभवद्धैमं सहस्रांशुसमप्रभं। तासु जज्ञे स्वयं ब्रह्मा सर्व्वलोकपितामहः"।

पूर्वोक्तासु श्रुतिस्मृतिषु भगवतः सर्गस्थितिसंहारकारणत्वं सुव्यक्त-

मिति नित्यमलुप्तशक्तिर्महेश्वर इति सिद्धम् । एतेन भगवतो नित्यमकुण्ठशक्तित्वमपि व्याख्येयम् । भगवच्छक्तिर्न कुत्रापि कुण्ठिता भवति, जीवशक्तिस्त्वेतद्वैपरीत्यं प्रत्यक्षसिद्धमेव । सुप्रवर्णितमिदमाचार्य्यपादेन

कारं कारमलौकिकाद्भुतमयं मायावशात् संहरन् ।
हारं हारमपीन्द्रजालमिव यः कुर्वन् जगत् क्रीड़ति ॥ इति

एवं बहुधा श्रुतिस्मृतिपुराणादिषु भगवत्स्वरूपवर्णनमनुसन्धेयम्। अतो यस्तावद् भगवान् सर्व्वशक्तिमान् सर्व्वस्वरूपः सर्व्वमूलं तस्योपास्यत्वं जीवानाञ्चोपासकत्वमित्यत्र किमु वक्तव्यम् ? मुक्तिप्रापिका क्रियैवोपासनेति वर्णितम्, उपपादितञ्च सर्व्वदुःखोच्छेद एव मुक्तिः सैव परमपुरुषार्थ इति । यत इयमुपासना सर्व्वदुःखच्छेदिमुक्तिदायिका, ततः सर्व्वेषामेवेयं सर्व्वात्मना कर्त्तव्येति स्वीकर्त्तव्यमेव यतो न हि कश्चित् सचेता आत्मनो दुःखाय प्रवर्त्तते ।

(क्रमशः)

---

## शारदप्रकृतिः

लेखकः—श्रीयामिनीकान्तसाहित्याचार्य्यः

जहिहि जननि ! मोह-मवनि ! मुञ्च नयन-मुद्राम्
प्रकृतिरिहहि रहयति निज-विकृति-ममित-रुद्राम् ।
विरमति सति ! भीषण-गति-जलधरजल-धारा
त्रास्यसि किमु ? शाम्यति चिरमन्धतमसकारा ।

ऊर्ज्जित-घन-गर्ज्जित-गुरु तर्ज्जित-वनभीता
कथय भवति ! मोह-वसति-मद्दह किमसि नीता
पतत्र विषम-विद्युतमतिदुर्द्दम-यम-पाशम्
शोणित-गति-शोषण-रति-मलघुकलितनाशम् ।
वर्षण-गुरुहर्षण-पर वर्हि-निकर-रावः
कर्ण कुहर-मयि न विशति खरतर इव दावः ।
एति जगति शरदतिशय-सौम्य-सरसमूर्त्तिः
सम्प्रति नव-भाव-विभव-रचित-भुवन-पूर्त्तिः ॥
विकसित सित-काश-कुसुम-राशि-विमल-वासा
निखिल-नयन-लोभन-घन-सित-शतदल-हासा ।
चन्दमल-कुन्दधवल-चन्दन-चित-भाला
कण्ठ-कलित-कोमल-रुचि-तारक-वरमाला ॥
विलय-मतति वारिदपति-रनुचितरतिमूलं
तटिनीकुल-माकुल-मति न कषति निजकूलम् ।
ननु विहरति हरिति हरिति सरिति रचितखेला
शंसित-नव-वंश-विभव-हंस-मिथुन-माला ॥
अन्तर-मद-मन्थर-गति रसितकमल-दृष्टिः
मृदु गायति गोपयुवतिरसकृदमृतवृष्टि ।
मृगकुलमति-निश्चलमति न चपलयति पादं
न हि कलयति हंस-नृपतिरपि जित इव नादम् ॥
तीरग-वन-ममल-भुवन-दर्पण-हृदि भान्तीं
लोचयदिह लोचनयुग-लोभन-निजकान्तिम् ।
हसति कुसुमकसितैरथ वदति विहगरावैः
मन्दपवन-वन्दित-तनु नृत्यति ननु भावैः ।

———

# वनवासः ।

(लेखकः—आर् श्रीगुरुस्वामीशास्त्री)

सरलहृदयाः सामाजिकाः ! किञ्चिदिवावधानं दीयतां यदद्य विषयविमुखैः सादरमाराधितो वनवासः सहृदयानां सविधे समुपन्यस्यते ।

इह हि समन्ततः समाक्रान्तसप्तसागरे भूतले विशेषतश्च सकलभोगभाग्यजुषि भारतभुवने सुखमनुबुभूषतां प्राणिनां तत्साधनसमालोचनचातुर्यधौरेया मानवा एव जीवलोकस्य आत्यन्तिकसुखलाभं प्राप्नुवाना इतीदं नाविदितचरं सर्व्वेषाम् । तत्र विषयविशेषकलुषितान्तरङ्गा मानवाः प्राकृतैरेवोपभोगैः परितृप्ताः न पारमार्थिकतत्त्वावगमाय सर्वेऽपि यतन्ते । कतिपय एव परं सुकृतिविशेषा गृहीतविग्रहा इव तपोधनाः जीवनस्य आत्यन्तिकं फलमात्मतत्त्वमवगन्तुं सान्तपनाद्यैः कृच्छ्रैः कायं सन्तापयन्ति । ते हि मनीषितफलोदयाय वनमेवावसथीकुर्वाणाः समग्रफलैर्धितां पुरीमपि तृणाय मन्यन्ते । अनुभूतैहिकभोगसर्वस्वा विषयोन्मुक्ता नृपतयोऽपि समयेषु तथैव वनवासं भोगिजनभाग्यरत्नमितरदुर्लभमनुभवेनावतंसयन्ति । अतश्च वनवासोऽयं तापसजनैः समं सहृदयानामपि हृदयानन्दसन्दायीति मन्दस्पृहमपि मां उपन्यासेषु उन्मुखयति ।

अथ वनवासः कदा सुखावहः ? वायस्थयः समीहितसिद्धिं वनवासेन साधयन्ति । नृत्यगीतादिभिरुपभोगैः कदा सञ्जाततोषैरपि सानुगैर्वनवासं प्रतीक्षमाणैः किमन्यादृशं फलं प्रतिपाद्यते ? इत्येवमाद्या विषया अहंपूर्विकयोपतिष्ठन्ते । अत्र उत्तरवचनेन यथा किञ्चित् समादधे । वनवासोऽयं पर्वतपरिसरपरिश्रान्तेषु अभ्रंलिहैरनोकहैर्निबिडितेषु दण्डकादिप्रसिद्धस्थानेषु निवसनमित्यसाधारणेन

विज्ञायमानोपि "यावच्चिरपरिचितपुरवासमहिम्नां प्रतीचितसमयविशेषेषु तत्र गमनेनान्तरङ्गान्सुखयति न तथा वनेषु आजन्मलब्धप्रसराणां वनेचराणा"मिति मे मतिः। ननु परिस्पृशन्तु भवन्तः। प्रशस्तविभवानामपि निरन्तरवर्षधारासम्पातपङ्किलप्रान्तदेशे वर्षर्त्तौ किं वनवासः सुखाय हिताय वा भवेदिति मन्येयाः। तथा शिशिरशिशिरे हेमन्तेऽपि हिमालयाद्यद्रिपरिसरारण्येषु नागरिकाणां तेषां दुःसहां शारीरीं व्यथामेव ध्रुवमुपनयेत्। अतश्च वनवासोऽयं वसन्तादिषु कतिपयेष्वेव ऋतुषु नागरिकजनप्रार्थनीयो भवति। परं, तपोधनानां पुनरयं वनवासः स्वाधीनवपुषान्तेषां जितेन्द्रियतया वा, आबाल्यादतिपरिचययाद्वा, तपस्विद्या वा प्राकृतजनानां कष्टप्रदेषु वर्षादिष्वपि ऋतुषु दुःसहो न भवति।

तापसानां वनवासे हेतुरयमेव। ते हि तपस्सिद्ध्यर्थमेव वनमाश्रयन्ति। तपःसिद्धिश्च नान्यथा इन्द्रियनिग्रहाद् घटते। नगरे पुनर्निवसतां रागद्वेषादिभिरुपप्लुतमानसानां स चेन्द्रियनिग्रहो न सुलभः। निसर्गसिद्धं खलु मानवानां विषयविकारैरङ्कुरितमिन्द्रियलौल्यं नाम। एवं हि श्रूयते—

पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात् पराङ् पश्यति नान्तरात्मन्।
कश्चिद्धीरः प्रत्यगात्मानमैक्षत्, आवृत्तचक्षुरमृतत्वमिच्छन्। इति।

अत्रायमर्थः। स्वतन्त्र ईश्वरः अधीनानामिन्द्रियाणां शक्तिमात्मसाक्षात्कारोपयोगिनीं प्रतिरुध्य बाह्येष्वनात्मभूतेषूपभोगेषु तच्छक्तिमुपायोजयत। एवं सति कश्चिदेव धीमान् बाह्येभ्यः प्रतिसंहृत्येन्द्रियाणि नित्यमात्मानं साक्षात्करोतीति। अतश्च एवं प्राकृतिकैर्मनुष्यैरध्युषितं नगरं कथं तत्र तैस्सह निवसतां तपोधनानां तपसिवद्धदीक्षाणामपि मनो न विचालयेत्। किमिदं श्रुतिपथमनारूढम् "यन्नैसर्गिकमपि गुणं सहवासः प्रवासयतीति"। तपःप्रभावज्ञातमहिमा त्रिकालज्ञः दिनमणिसममरीचिर्मरीचिर्नाम महर्षिः अरण्य-

मात्मानमुपगतया वेशाभिजनया काममञ्जर्य्या प्रलोभितः कतिपयै-रेवाहोभिर्भूतपूर्वमहर्षिः समजनीति इदं विचित्रदशकुमारचरितमिदं नापूर्वं निदर्शनम्। अहो आरण्यकस्य महर्षेः पौरजनसहवासक्षतोऽयं महिमा! अतश्च चित्तप्रलोभकैरुपप्लवहेतुभिरिवाशालतायास्तैस्तैर्वित्त-विकारैरधिजुष्टं नगरं न तापसजनमनीषितपरिपोषकमित्यतः शम-प्रधानास्ते वनमेवाभीप्सितमावासं मन्वत इति सिद्धं तापसानां वनवासहेतुत्वम्। जीवलोकस्य समग्रमपि सुखमनुभवितुं प्राप्तजनुषां धनिनाञ्च नगरेषु सुखमलमनुभवतामपि सत् सत्यं समयेषु वनवासे भवति अनन्यसाधारणो मानसोल्लासः। अत्रापि वनस्य अन्यादृशं रामणीयकमेव हि निदानं, अतिपरिचितविविधव्यापारेषु व्यापृतमन-सोऽपि नगरवासिनः कदापि वनदिदृक्षया गहनमवगाहन्त एव। तत्र हरितायमाना वनराजीश्चक्षुष्मतां दर्शनीयतमाः समीक्षमाणानां, नवनवा-नदृष्टपूर्वान् कुसुमविशेषान् लताकुञ्जांस्तरुपुञ्जान् तेषामक्लिम-सन्निवेशांश्च मुहुर्मुहुः नेत्रपुटैरापिबतां, मनोहारिणां हरिणानां स्वैर-विहारेषु उत्प्लवनान्युत्प्रेक्षमाणानामकुतोभयानां कण्ठीरवाणां जृम्भारवं प्रतिध्वनिमुखरितं वनाभोगं स्तनितगम्भीरं स्तनयितुमुत्प्रेक्षयतां वनौकसां पतत्रिणां श्रोत्रहरेषु कूजितेषु मनसि वीणानादमाकलयतां तथा नानाविधकुसुमसम्पर्कसुरभिगन्धीन् गन्धवहानासेवमानानां अन्यादृशः कोऽपि मानसिको भावः समुदेतीत्ययं सकृदप्यरण्यं प्रविश्य सन्तुष्टान्तरङ्गाणां न हृदयेषु गोपनीयतामाधत्त इति तथ्यवादिनो विदां कुर्वन्तु। अनवरतमैहिकसुखैकशरणा गन्धर्वादयोऽपि स्निग्धगम्भीर-मरण्यमेव भोगयोग्यं समुचितं देशं मन्वानास्तत्रैव वसन्तीति पुराण-कथाकोविदा आमनन्ति। अत्र कालिदासः हिमवद्वर्णनाप्रसङ्गे

य: पूरयन् कीचकरन्ध्रभागान्दरीमुखोत्थेन समीरणेन।
उद्गास्यतामिच्छति किन्नराणां तानप्रदायित्वमिवोपगन्तुम्॥ इति

उत्तररामचरितेऽपि चित्रदर्शनावसरे—

'जाने पुनरपि प्रसन्नगम्भीरासु वनराजीषु विहृत्य पवित्रनिर्मल-शिशिरसलिलां भागीरथीमवगाहिष्ये।' इति सीतावचनमुपवर्णयता भवभूतिनापि अतिविपुलवैभवविराजितमाङ्गल्याद्राज्यादपि वनवासि किमप्यनन्यसुलभं सुखं तया प्रतीचितमिति वनवासस्योत्कर्षः प्रतिपादितः। किं बहुना, रसिकाग्रेसरो भगवान् वासुदेवोऽपि गोपीगत-परिवृतो वृन्दावनेषु विजहारेति इतिहासविदां विदितमेवेदम्। अतश्च वनवासोऽयं विस्रम्भविहाराणामास्पदमिति विषयविमुखैस्तापसैः सम्भोगतत्परैः पौरैरपि समाद्रियमाण इत्यत्र न केषामपि विप्रतिपत्ति-मुद्भावयमानानामप्युपलब्धये। वनवासिनां सन्निहितानीमानि फलानि। वनावस्था अनन्यादृशं रामणीयकं हि दुःखशतदग्धहृदयानपि सञ्जीवनीव सद्यः सन्तोषयति। नगरेषु धनिनामावासेषु च विश्रामार्थं सुपवनं परिपाल्यते। तद्धि कृत्रिमं वनमिति सार्थं नाम वहति, तत्र गृहीतविश्रामाणामियानानन्दोदयश्चेत्, अकृत्रिमसन्निवेशविशेषरमणीयं वनं कीदृशं सहृदयानां हृदि सन्तोषसन्दोहमुत्पादयेदिति विचारयन्तु भवन्तः। आरण्यकाणां श्वापदानां क्रोधप्रसादभरेषु भावानुरूपं चेष्टा-दिकमपि वनवासिभिस्सम्यक् विज्ञायेत। एतद्धि शाकुन्तले मृगया-फलत्वेन समीरितं।

सत्वानामपि दृश्यते विकृतिमच्चित्तं भयक्रोधयोरिति।

तद्धि मृगयां विनैव सेत्स्यति। इदञ्च वनवासिनां महदुपकारकं, यत्पुनर्ज्योतिर्लताद्या ओषधयः नक्तमन्धकारं निवर्त्तयन्ति। नगरे पुनर्निवसतां तैलव्यय एव परमवशिष्यते। तथाहि

भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः इति कालिदासेनोक्तं। किञ्च नगरवासिनस्ते स्ते वनवैद्यश्चिकित्स्यैरामयैरभिद्रुताः भीरुजनसमाश्रितं दैन्यमासेवमानाः परं खिद्यन्ते। साङ्क्रमिक-रोगदुरासदं वनं पुनरधिवसतां नैवेदृशः क्लेशो भवति। परन्तु दिव्यौषधि--निलयेष्वरण्येषु निवसन्तः अनन्यसुलभेनारोग्येण

संयुज्यन्ते । अति दुर्लभा अप्योषधयः वनराजिषु अनायासेनैव लभ्यन्त इति सद्वैद्या वनेभ्यस्ताः प्राप्नुवन्ति । अतश्च वनावलिरोषधि-प्रदानेन नागरिकाणां भृशमुपकरोति । अतिमधुरं मधु च वनेषु बहुलभ्यम् । बहुमूल्यं मुक्ताफलादिकञ्च वंशस्तम्बेभ्यः वन्यद्विप-कुम्भेभ्यश्च अनायासलभ्यं भवति । गन्धेषु प्रशस्तो मृगमदश्च भवति वनवासिभिरेव सुलभः । उत्सवेषु मान्यान् सभाजयितुं ख्यातोत्साहैः नागरिकैरभिनवैरेलालवङ्गजातिफलाद्यैर्विशेषितं ताम्बूलीदलमागतेभ्य समर्प्यते, तच्च लवङ्गादि वन्यमेवेति न बहु वक्तव्यम् । एवञ्च रूपरसगन्धेषु यदयत् प्रशस्तं नागरिका मन्वते प्रायस्तद्वन्यमेव भवतीति नागरिकाणामपि नागरिकत्वाधायि वनमेवेति सर्व एववागच्छन्तु । किञ्च वनेष्वेव मानुषाणां अकृत्रिमा गुणाः परिपोषं प्राप्नुवन्तीति गुरु-कुलादिविद्यास्थानं वनेष्वेव प्रतिष्ठाप्यन्ते । आर्यजातीयाः पुरातन-भारतीया अपि उदग्रफलप्रार्थनीयेषु वनेष्वेव न्यवसन्निति नव्य-विमर्शकाः केचिन्मन्वते । अतिविचित्रपवित्रचरित्राणां रामनलपाण्डवा-दीनामयं वनवासस्सुखावसानकः समजनीति तेऽपि वनवासं समयेषु बहुभ्यनन्दयन्निति च चरित्रतो वयं जानीमः । आधुनिका अपि नीलगिरिकोभिकानल् (औषधिपर्वत) कुत्तालम् (त्रिकूटाचल) प्रभृती-न्यद्रिपरिसरारण्यानि शरीरहितायादरापि सेवन्त इतीदं सार्वजनीनमेव ।

अतश्च ऐहिकमामुष्मिकं वा फलमभीप्सुभिर्लब्धजन्मभिर्मानुषै-र्नूनं स्निग्धश्यामेष्वरण्येषु कादाचित्कावासेनापि जन्मनः साफल्यं सम्पादनीयमिति ।

---

## प्रतीक्षा

(लेखकः—श्रीजानकीनाथशाण्डिल्यशास्त्री।)

गतं बाल्यं हेलाकलितरजसो मे सहचरै-
रहो कामोल्लासैर्युवतिजनतो यौवनमितम्।
इदानीं प्रौढोऽहं स्वजनपरिपोषाकुलमतिः
प्रतीक्षे श्रीमातश्चरमगतिमेकां तव दयाम्॥

---

## दुर्गेशनन्दिनी

लेखकः—श्री.........

### षोड़शपरिच्छेदः

### "चरणगता दासी"

अभूत् तस्यामेव रजन्यां कतलुखानस्य विलासगृहमध्ये नृत्यानुष्ठानम्। नासीत् तत्र अपरा कापि नर्त्तकी, न वा अपरः कश्चित् प्रेक्षकः। जन्मतिथौ मोगलसम्राजः पारिषदचक्रमध्यवर्त्तिनो यथामोदपरायणा बभूवुर्न तथा कतलुखानः। चित्तं तस्य स्वसुखपरायणम् इन्द्रियदत्यभिलाषि च। अद्य निशायामभूत् स एकाकी स्वविलासगृहनिवासिनीगणपरिवृतस्तासां नृत्यगीतकौतुकेषु प्रमत्तः। नासीत् तत्र प्रवेशानुमतिर्वर्षवरेभ्यः अन्येषां जनानाम्। कापि रमणी नृत्यति, कापि गायति, कापि वा वादयति वाद्यम्। अन्याश्च सर्व्वाः कतलुखानं परिवृत्य आसीनाः समाकर्षनरताः बभूवुः।

वर्त्तन्ते तत्र प्राचुर्य्येण इन्द्रियमोहकराणि द्रव्यजातानि। प्रविश्यतां तावत् कक्षमध्ये। प्रविष्टमात्रे एव निरन्तरसिक्तगन्धवारिमधुरघ्राणेन शरीरम् सर्व्वथा शीतलायते। असंख्यानां राजतानां द्विरद-निर्म्मितानां स्फाटिकानाञ्च कुसुमाधाराणां तीव्रोज्ज्वला प्रभा द्योतयति नयनम्। अपरिमेयकुसुमराशिः क्वचिद् मालाकारेण, अन्यत्र रमणी-केशकलापेषु, कुत्रचिद्वा ललनाजनकण्ठेषु प्रकाशयति स्निग्धतरां प्रभाम्। कस्याश्चित् पौष्पं व्यजनं, कस्याश्चित् पौष्पम् आभरणम्, काचिद्वा प्रेरयति अन्यां प्रति पुष्पमयीं क्षेपणीम्। पुष्पसौरभेण, सुरभि-वारिसौरभेण सुगन्धलिप्तदेहानां विलासिनीनाम् अङ्गसौरभेण च सर्व्व-त्रैव सञ्जाता सा पुरी सौरभमयी। वर्त्तते तत्र प्रदीपानां दीप्तिः पुष्पाणां दीप्तिर्ललनानां रत्नालङ्कारदीप्तिस्तथा च निरन्तरकटाक्षवर्षिणीनां कामिनीनामुज्ज्वला नयनदीप्तिः। सप्तस्वरमिश्रो मधुरो वीणादिवाद्य-ध्वनिः व्याप्नोत्याकाशमण्डलम्। ततोपि रमणीया मधुरनिनादिनी रमणीकण्ठगीतिस्तेन सह भिन्ना उत्तिष्ठति। सहैव तानलयसमन्वितं पादन्याससञ्जातं नर्त्तकीनामलङ्कारशिञ्जितं मोहयति मानसम्।

पश्य असौ सरोजकानने समीरणोत्थेषु तरङ्गभङ्गेषु नृत्यतीव राज-हंसी। प्रफुल्लपङ्कजवदनाः सर्व्वाः परितो वर्त्तन्ते। पश्य, पश्य अमूं परिहितनीलवसनां कानकतारकावलीखचितनीलवाससं रमणीम्, दृश्यतां याऽसौ दृश्यते ललना सीमन्तपार्श्वे धृतहीरकतारका; निरूप्यतामस्याः प्रशान्तः प्रशस्तो निर्म्मलो ललाटप्रदेशः। किमेतादृशे ललाटे लिखितो विधात्रा विलासगृहवासः? यासौ दृश्यते अपरा शशाङ्क-पुष्पाभरणभूषिता कथमसौ शोभते पुष्पाभरणेन? रमणीनामङ्ग-शोभार्थमेव मन्ये कुसुमानां बभूव सृष्टिः!

अन्यासौ दृश्यताम् ईषत्कुञ्चितारक्ताधरोष्ठी। निर्म्मलनीलाम्बर-मध्ये पूर्णचन्द्रालोकवत् अस्या वर्णप्रभा नीलवसनं निर्भिद्य निष्क्रामति। इयमसौ निन्दितमरालग्रीवाभङ्गी स्मेरमुखी भावे

निरूप्यतामस्याश्चञ्चलं कुण्डलयुगलम्। का त्वं सुकुन्तले? कथं त्वयावक्षो लम्बितः कुञ्चितकुन्तलकलापः? किं दर्शयसि सरोजहृदये कृष्णसर्पवेष्टनप्रकारम्?

का त्वं सुन्दरि, कतलुखानस्य पार्श्वदेशनिषण्णा वर्त्तसे हेमपात्रं सुरया पूरयन्ती? का त्वम्, यत् विहाय सर्व्वं कतलुखानस्तव लावण्यमयं देहं प्रति निरन्तरं व्यापारयति दृष्टिम्? का त्वमव्यर्थेन कटाक्षपातेन भिनत्सि कतलुखानस्य हृदयम्? ज्ञायतेऽसौ मधुरः कटाक्षः। विमला त्वम्! कथं पातयसि एतावतीं मदिराम्? पातय, भूयोपि पातय। किं नाम वर्त्तते कृपाणिका वसननिहिता? वर्त्तत एव। तदा कथमेवं हससि? दृष्टिं व्यापारयति कतलुखानस्तव मुखं प्रति। किमेतत्? कटाक्षपातः! किं पुनरपि? पश्य, उन्मत्ततां नीतोसौ सुरास्वादप्रमत्तो यवनस्त्वया। मन्ये, अनेनैव कौशलेन त्यक्तसकलललनाजनस्य कतलुखानस्य जाता त्वं प्रियतमा। न वा कथं भविष्यसि? यादृशं हसितं यादृशी अवयवभङ्गिर्यादृशं वाक्पाटवं यादृशो वा कटाक्षः। पुनरपि पीयते मदिरा। अवधेहि कतलुखान! अथवा किं नाम कतलुखानः करिष्यति? यादृशेन कटाक्षेण विमला तस्य हस्ते ददाति सुरापात्रम्! क एष ध्वनिः? केयं गायति? किमेतत् मानुषसङ्गीतमुत गायति काचित् सुरललना? गायति विमला सह गायिकाभिः। अहो स्वरसंयोगः, अहो कण्ठध्वनिः, अहो लयपरिचयः। किमेतत् कतलुखान? कुत्र ते मानसम्? किन्तावत् दृश्यते? विहस्य कटाक्षं करोति विमला। कृपाणिकाया अधिकं प्रवेशयति ते हृदयम्। तदेव दृश्यते?

केवलः कटाक्ष एव हरति प्राणान् किं पुनः सङ्गीतसन्धिसम्बद्धः? दृष्टं किं कटाक्षेण सह ईषन्मस्तकान्दोलनम्? लक्षितं किं कुण्डलकम्पनम्? पुनरपि मदिरया पूरय पात्रम्। देहि मदिराम्। देहि

मदिराम्। किमेतत्? विमला समुत्थाय नृत्यति। अहो रमणीयता अहो देहभङ्गिः। देहि मदिराम्। अहो अङ्गलावण्यमहो शरीरसौष्ठवम्। राजन्, कतलुखान, स्थिरतां गच्छ। स्थिरतां गच्छ अहो प्रज्ज्वलितं कतलुखानस्य शरीरं कामाग्निना। "पावम्—दी सुरापात्रम् प्रियतमे,"। किं पुनरपि? अथापि हसितम्, अथापि कटाक्षः? मदिरां देहि मदिराम्। उन्मत्ततां गतः कतलुखान विमलां सम्बोध्य प्रोवाच—"कुत्र त्वं प्रियतमे"।

विमला कतलुखानस्य स्कन्धे भुजमेकं संस्थाप्य प्रत्यभाषत—"दासीयं चरणगतैव।" अन्यस्मिन् करे वर्त्तते कृपाणिका। तदा कतलुखानः कृतभीषणार्त्तनादो विमलां दूरे निचिक्षेप। स्वयं च बभूव भूतलशयितः। आमूलं प्रवेशिता विमलया तस्य वक्षसि तीक्ष्णा कृपाणिका।

पिशाची, दानवीत्येवं कतलुखानो भृशं चुक्रोश। "नाहं पिशाची, न वा दानवी। वीरेन्द्रसिंहस्याहं पत्नी" इत्युक्त्वा विमला कक्षात् द्रुतं पलायाञ्चक्रे। कतलुखानस्य भाषणशक्तिर्झटिति लोपमगमत्। तथापि स यथाशक्ति उच्चैराक्रन्दत्। अवरोधजना अपि यावच्छक्यमार्त्तनादं चक्रुः। विमला च सचीत्कारमधावत्। कक्षान्तरमासाद्य श्रुतस्तया आलापशब्दः। विमला सोच्छ्वासमधावीत् परस्मिन् कक्षे दृष्टास्तया रक्षिणो वर्षवराश्च। आर्त्तनादं श्रुत्वा विमलायाश्च सन्त्रासमवलोक्य ते पप्रच्छुः—किं वृत्तम्?

प्रत्युत्पन्नमतिर्विमलाभाषत—समुत्पन्नः सर्व्वनाशः। त्वरितं गच्छत। कक्षमध्ये प्रविष्टा मोगलाः। मन्ये हतो नवावः।

रक्षिणो वर्षवराश्च सोच्छ्वासं तदभिमुखं धाविताः। विमला अक्लेशेन निश्वसती अन्तःपुरद्वाराभिमुखं पलायिता। द्वारदेशे प्रतीहारः प्रमोदक्लान्तो निद्रां गतः। विमला निर्बाधं द्वारदेशमतिचक्राम। दृष्टं तया एवं सर्व्वत्रैव। सा निर्बाधम् अधावीत्

बहिर्द्वारे दृष्टा द्वारपालाः प्रबुद्धाः। तेषां कश्चित् विमलामवलोक्य पप्रच्छ—का त्वं, कुत्र वा गच्छसि ?

तदा अन्तःपुरमध्ये सञ्जातो महान् कलकलः। सर्व्वं एव जना जागरितास्तस्यां दिशि धावनरताः बभूवुः। अतो विमला प्रत्युवाच —अन्तःपुरे सञ्जातो विपत्पातः। नवावः समाक्रान्तः।

द्वारपाला द्वारं परित्यज्य धाविताः। विमला निर्विघ्नं निष्क्रान्ता।

द्वारदेशात् कियद्दूरमागत्य विमलावलोकितवती कमपि जनं वृक्षतले अवतिष्ठमानम्। दृष्ट्वैव विमला तमभिरामस्वामिनं परिज्ञातवती। विमलायां सन्निहितायामेव अभिरामस्वामी अभाषत—"महान्तमुद्वेगं गतोऽहम्। दुर्गमध्ये किङ्कृतोऽयं कलकलः ?

विमला प्रत्युवाच—कृतो मया वैधव्ययन्त्रणायाः निर्य्यातनम्। नात्र कार्य्यं पुनरधिकालपनम्। त्वरितमागम्यतामाश्रमपदम्। पश्चात् सविशेषं निवेदयिष्यामि। किमाश्रमं गता तिलोत्तमा ? अभिरामस्वामी प्रत्यभाषत—तिलोत्तमा अग्रत एव गच्छति सह आसमान्या। शीघ्रमेव दर्शनं भविष्यति। एवमुक्त्वा उभौ द्रुतं चलितौ। अचिरात् कुटीरमध्ये उपस्थाय अवलोकितम्। पूर्व्वमेव आयेषानुग्रहेण तत्र समागता आसमानीसहाया तिलोत्तमेति। तिलोत्तमा अभिरामस्वामिनः पादयोः प्रणता रोदनपरायणा तस्थौ। अभिरामस्वामी तां समाश्वास्य अवादीत्—भगवदिच्छया युवां मुक्तिं गते दुरात्मनो हस्तात्। पलायनमत्र पुनर्न स्थातव्यम्। यवनाः प्राप्तोद्देशाः सर्व्वथा प्राणैर्निहत्य प्रभोर्मृत्युशोकं निवारयिष्यन्ति। अद्य निशायामेव स्थानमेतत् परित्यज्य गन्तव्यम्।

सर्व्वैरेव अस्मिन् मन्त्रणे सम्मतम्।

---

# दुर्गोत्सवः

लेखकः—श्रीशानकीनाथसाहित्यशास्त्री।

वर्षावर्त्तेन साम्प्रतमतीता वर्षाः समुपचिता रोगशोकदैन्यदूना
वङ्गीयानां नयनासारवर्षैः। तदनुपदमेव निहितपदवङ्गवसुधा
मालोक्यते नयनाभिरामा शारदलक्ष्मीरग्रदूतिकेव दिशि दिशि सूचय
जगदम्बायाः शारदायाः शुभागमनलक्ष्माणि। तथाहि वयं कोकन
तस्याम्बरणशोणिमानं, विकाशातसीदलेषु सुवर्णगौरिमाणं प्रफुल्लक
कुमुदारविन्देषु विमलाम्बरधवलिमानं, धवलितचराचरसितकार
निकरकरम्बितकाशकुसुमेषु, सुस्मितमधुरिमाणं, वीतजलदजाल
स्तले कुन्तलकलापनीलिमानं, धीरसमीरान्दोलितश्यामलशस्यसौ
चेलाञ्चलचञ्चलिमानं, सुदर्शादर्शनीकाशसारसनीरेषु, मानसप्र
दरकम्पितकमलाकरमारुतामर्शविगलच्छेफालिकासु स्निग्धाङ्गपरिम
विनायाससमनुभवामः।

समान्ते पुनरदूरभाविनी वङ्गेषु—'पूजा' दशभुजायाः प्रती
वर्षमेव निरन्तरमावालवृद्धवनिताभिः। पूजाबहुलेष्वपि वङ्गेषु 'पू
शब्दोयमत्रत्यः शारददुर्गापूजायामेव रूढ़तया वर्त्तते—यथाहि "पू
वकाशः" "पूजोपहारः" "पूजाविपणि"रित्यादिषु। कियन्तो नव
सन्ति वङ्गेषूत्सवाः, न पुनस्तेषु उत्सवशब्दो नियतं प्रयुज्यते,
तु शारदपूजायां 'दुर्गोत्सव' इति—नित्यसमासोयमिति
जानीमः। भवति वसन्तेऽपि दशभुजा पूजिता—तत्र तु सा
दुर्गाप्यद्वैता 'वासन्ती'ति पृथङ्निर्दिश्यमानास्ते साधारणैः, शर
पुनर्दुर्गेति निख्यायते।

नूनं मन्वयं शरत्; यत्र खलु जगन्मूर्त्तिरपि नित्यापि जगद

भगवती श्रीदुर्गा सन्तानेषु करुणारसेन विग्रहपरिग्रहलीलामभिनयति। धन्यतरा च वङ्गधरा, यया पतितश्यामलशस्यासनया करकलितकमलमालया च परमेश्वरीपादपयोजस्पर्शपूतया शारदमहोत्सवाधारसौभाग्यं विशेषेणानुभूयते। धन्यतमाश्च वयमिह वङ्गाङ्गजाता ये पुनरकृतिनोऽपि दीना विश्वमातुर्लब्धकरुणा विश्ववन्द्ये तदीय पदारविन्दे श्रीफलदलजवाकुसुमानि सहर्षमुपहर्त्तुमर्हन्तो जन्मजन्मार्जितसुकृतभाग्यभाजमात्मानं जानीमः।

आसन्नमहोत्सवाय वङ्गभूमिः प्रमोदभरमन्थरं नृत्यन्तीव सर्व्वतः सुतरां विभाति। नगरे नगरे, ग्रामे ग्रामे, अधिपूजमेव संवादाः प्रवर्त्तन्ते। संस्क्रियन्ते सुधालेपैश्चण्डीमण्डपाः, सम्मार्ज्यन्ते च सावधानं गृहप्राङ्गनप्रान्तभूमयः सत्पूजकानाम् सम्भवति प्रचुरमायोजनं धनशालिनामालयेषु, दुर्गता अपि दुर्गतिहारिणीमाराधयितुं यथाशक्त्युपचाराणामाहरणे अनलसा वर्त्तन्ते। रचयन्ति शुचिव्रता गृहिण्यो लाजादिभिः विविधमधुमोदकादीनि जगन्मातुर्निवेदनाय। आवर्त्तयन्ति सप्तशतीं शिक्षन्ते च पूजासूत्रम् गुरूणां पुरतो याजनिकब्राह्मणवटवः।

सनातनधर्म्मकर्म्मशर्म्माणो गृहस्था विस्मृत्येव सम्प्रति दुर्भरपरिवारभरणभारं, पूजोपकरणसमाहारे व्याप्रियमाणाः, केचन वा धीरस्वभावाः परिजनानां दुर्ग्रहपूरणप्रयासाः समन्तात् ससम्भ्रमं भ्रमन्ति। अनुदिनमीप्सितं दीर्घमनध्यायमाप्नुवन्तः सहर्षहासजल्पिनो विद्यार्थिनः स्वस्वभवनमभिधावन्ति। वत्सला जननी प्रोषितं नयनमणिमात्मजं दयिता तरुणी वा हृदयदैवतं कान्तं निश्चितमायान्तमद्य प्रतीक्षमाणा प्रवासादागतिपथं मुहुरुद्ग्रीवमालोकयति। नृत्यद्भिर्नववेशोन्मदकुमारकुमारीनिकरैः समं युवयुवतयोऽपि अभिनववसनभूषणाशया माद्यन्मनसो दृश्यन्ते।

प्रवहति पण्यवीथिकासु तदुपरिस्थायिराजपथेषु च कलकलायितो

जनसागरप्रवाहः । अत्यधिकविक्रयात् द्रव्याणां मूल्यातिरेकाच्च श्रेष्ठः क्षणोऽयं वणिग्जनानामर्थलाभाय । विविधपण्यसम्भृतानामापणानां रुचिरसन्निवेशभासो बलादाकर्षन्ति नयनमानसानि पान्थदर्शकानाम् । स्वस्वकृत्येषु सत्वराः क्षणिकमप्यवसरं विफलं मन्यन्तो विक्रयिकाः क्रयिकाश्च । समये सर्वस्वं मुष्णन्तोऽनवधानजनपदजनान् प्रचरन्ति छद्मसद्मानो वणिग्वीथिषु नागरिकधूर्त्ताः ग्रन्थिभेदकाश्च । सुवर्णयोगोऽयमुत्सवः पश्यतोहराणां, सुकालः कुशलानां, माहेन्द्रक्षणः पुरोहितानां, श्रमविश्रामो भृतकजीविकानां, समागमसमयो विरहार्दितानां, विलासविस्तारो व्यसनिनां, पूर्णोदयो रहस्यव्ययानां, महानन्दो भक्तानां, चरमभूमिका च साधकानाम् । भवेन्नूनं राजसोऽयमुल्लासविशेषः क्रियाशक्तेरादिमायाः ।

समायाता नित्यानन्दखनिर्जननी ; विश्वं जगदेव तदानन्दलोलितमालोक्यते । सत्यमुद्घोषयति नित्या श्रुतिः —"एतस्यैवानन्दस्य भूतानि मात्रामुपजीवन्तीति । समायात त्रितापतापितजीविता भारतसन्तानाः वङ्गानामस्मिन् महानन्दमहोत्सवे । सुखं हि समसुखदुःखेषु जनेषु संविभक्तभोगमधिकमनुभूयते । अस्ति नस्तावदा जन्मनो मरणावधि संसारे विविधो निरानन्दसन्दोहः, केवलमियन्ति दिनानि यातमेव विचिन्त्य सहजातं दुःखजातं, मातरमानन्दमयीमर्चयन्तो वयं परानन्दरसार्णवमवगाहामहे ।

अहो दर्शनीयता सपरिवारमातृप्रतिमायाम् ! मध्ये—जटाजूटसमायुक्ता चन्द्रार्द्धकृतशेखरा कनकगौराङ्गी दशभुजा दुर्गा—सच्चिदानन्दमयी परा शक्तिः परशिवात्मिका—

"यत् पादपङ्कजरजोऽमरवृन्दवन्द्यं
यद्योगतः परशिवः परमेश्वरोऽभूत् ।
या सृष्टिपालनलयं तनुते त्रिमूर्त्या
सा शाम्भवो विजयते जगदेकमाता ॥" इति शम् ।

वाहनं तावत् महाशक्तेर्महाशक्तिर्निर्भीको मृगराजः सततमुद्यत-विक्रमः पृष्ठे मातुर्दक्षिणं पादपद्मं वहन् पुरतः सुप्रकाशमवतिष्ठते। वीरैरेव निर्विकल्पोऽयमेः शाक्तम् पदमधिगन्तुं शक्यमित्यागमिकाः प्रतिजानते ; श्रूयते च नायमात्मा बलहीनेन लभ्य इति। वामपादश्च भगवत्या महासुरं पृष्ठे दृढं नियन्त्रयदास्ते ।

अथ दक्षिणतः श्रीदुर्गायाः प्रथमं कमलालयचरणकमला निखिल-धनाधिदेवता कमला, ततश्च प्रतूहव्यूहसायको गणनायकः सिद्धिदाता विराजेते। वामतो मातुः श्वेतसरोजराजिता सकलकलेता सर्व्वश्वेता वाग्देवता धृतवीणा विद्योतते—यद्धि सारस्वतं प्रतीकं शब्दब्रह्म-वादिभिर्वाङ्मयविज्ञानाय ध्यानैकतानमाराध्यते तत्सव्ये च पार्श्वतो-पयोधरपयसा पोषितकलेवरो महावीरः शक्तिधरो देवसेनानीः कुमारः ज्ञातपरिकरं प्रकाशमाप्नोति। ऊर्द्ध्वञ्च चित्रभित्तौ स्मरहरो गङ्गाधरः क्षणमपि शक्त्या पृथगनास्थितो योगीश्वरः शङ्करः प्रसादसुमुखो निर्विकार-माभाति। समन्तादालिखिता दृश्यन्ते तत्रैव भगवन्नारायणब्रह्मेन्द्रा-दयो देवाः। एकापि लीलाप्रपञ्चितविभूतिवर्गा विभाति सर्व्वदेवमयी दुर्गा। पूज्यते सकामश्चेत् सैका, सिद्ध्यति विश्वेषां पूजा, फलन्ति च सर्व्वे कामाः। यद्यकामं, स्फुरति विज्ञानं पुरो यन्निर्वाणम्। श्रुतिरेतत् समर्थयति यदेकविज्ञानात् सर्व्वविज्ञानम्। स्मृतिरपि—आराधिता सैव नृणां भोगस्वर्गापवर्गदेति।

एहि मातर्दुर्गे दीनदयामयि! श्रीपादनखचन्द्रिकया प्रकाश-मालोकय नैराश्यतामसवङ्गमन्दिराणि, शीतलय चरणकमलपातेन रोगशोकपारवश्यदावदग्धानि वङ्गहृदयानि ; दवय कमलया दैन्यं, सारस्वतेन मौर्ख्यं, गाणपत्येन विघ्नान्, कौमारेण चानुद्यमान्। दशभिः सायुधभुजैरव मातर्दुर्व्वलवङ्गान् समन्तात् वीभत्सं नृत्यतो-ऽसुरस्तोमात्। सञ्चारय बाहुषु सैंहीं शक्तिं, प्रचारय चित्ते लक्ष्मीं भक्तिं, स्फुरतु च हृदये नित्यं क्षयया ते शक्तिमयं तत्त्वम् शिवाद्वैतम्।

यदेतत्ते दुर्गे चरणपुरतो मे प्रलपितं
न तद्व्यर्थं मन्ये त्वमसि यदि माता शिशुरहम्।
शिशोर्वाग्भिर्मातुः सुखमतितरां, नो यदि तथा
पदाघातं नित्यं रचय हतमन्तोः शिरसि मे ॥

---

# जातिबाधकविचारः।

(पूर्वतोऽनुवृत्तः)

लेखकः—श्रीकालीपदतर्काचार्य्यः।

अथ तथापि घटादौ पटादिवृत्तित्वविशिष्टपृथिवीत्ववान्
इत्यादिभेदस्य वर्त्तमानतया पृथिवीत्वादिषु व्यापकजातिषु व्यभिचा-
स्तदवस्थः। न च प्रतियोगितावच्छेदकेन समं भेदस्य विरोधित
पृथिवीत्ववति घटादौ विशिष्टपृथिवीत्वावच्छिन्नभेदो न पदं करोति
वाच्यं भेदो यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताकः तादृ
प्रतियोगितावच्छेदकधर्म्मेणैव तस्य विरोधात् सामान्यधर्म्मावच्छि
प्रतियोगिताकभेदस्य सामान्यधर्म्मेण विरोधित्वे वर्त्तमानेऽपि विशि
प्रतियोगितावच्छेदकाकभेदस्य वैशिष्ट्येनावच्छिन्नेनैव प्रतियोगिता-
वच्छेदकेन विरोधस्य अनुभवसिद्धतया घटादौ पटादिवृत्तित्ववैशिष्ट्या
वच्छिन्नपृथिवीत्वस्य विरहेण तादृशधर्म्मावच्छिन्नप्रतियोगिताकभेद
घटादौ पृथिवीत्वरूपसामान्यधर्म्मवत्यपि निष्प्रत्यूहस्थितिक एव
प्रतियोगितावच्छेदकत्वादीनां घटो नास्ति पटो नास्ति नीलरूपवा
नास्तीत्यादिप्रतीतिसाक्षिकस्वरूपसम्बन्धरूपतया पटवृत्तित्वविशि
पृथिवीत्ववद्भेदीयप्रतियोगितावच्छेदकत्वयोः पृथिवीपृथिवीत्वयोरि

पटवृत्तित्ववैशिष्ट्ये प्रतियोगितावच्छेदकतावच्छेदकत्वस्य अपलपितुमशक्यत्वात्। एतेन पटवृत्तित्वविशिष्टपृथिवीत्ववान् न इत्यादि प्रतीतौ पटवृत्तित्वविशिष्टपृथिवीत्वाभाव एव भासते, नतु तादृशभेदोऽपि, पृथिवीत्वरूपप्रतियोगितावच्छेदकवत्यपि तादृशभेदस्य प्रतीतिसिद्धत्वात् प्रतियोगितावच्छेदक-तदवच्छिन्नभेदयोर्व्विरोधस्य सुतरामवसादादिति परास्तम्। यदि च विशिष्टस्य केवलादतिरिक्तत्वम् अभ्युपेत्य शक्यते दोषो वारयितुं तदा प्रागुक्ताव्यापकत्वकल्पे लाघवेन प्रतियोगिवैयधिकरण्यपरिहारतः स्वसमाधिकरणाभावप्रतियोगित्वमात्रमेव ग्रहीतुमुचितं विशिष्टाभावमादाय दोषाभावात् प्रतियोगितायां व्यासज्यवृत्तिधर्म्मावच्छिन्नभिन्नत्वनिवेशेन उभयाभावादिकमादायापि व्यभिचारासम्भवात् इति चेत् प्रकृते भेदप्रतियोगितावच्छेदकतायां वैशिष्ट्याद्यनवच्छिन्नत्वस्य स्वसामानाधिकरण्यघटकीभूते स्वाधिकरणे प्रतियोगितावच्छेदकानधिकरणत्वस्य प्रवेशेन वा तद्वारणस्य सुकरत्वात्। न च पूर्व्वकल्पापेक्षया नैतावता लाघवसम्भावनेति वाच्यं पूर्व्वतो लाघवविरहेऽपि अत्यन्ताभावप्रतियोगिताघटितवत् भेदप्रतियोगितावच्छेदकत्वघटितमपि अव्यापकत्वं सम्भवतीत्यावेदयितुं तथोपन्यासस्य शास्त्रकारीयरीत्यवहिर्भूतत्वात्, इत्थञ्च पृथिवीत्ववत्तद्व्यक्तिर्न इत्यादिप्रतीतिसिद्धभेदीयप्रतियोगितावच्छेदकतायाः पृथिवीत्वे सत्त्वे असत्त्वे वा न क्षतिः, सत्त्वपक्षे स्वाधिकरणस्य घटादेः प्रकृतभेदप्रतियोगितावच्छेदकाधिकरणत्वात् असत्त्वपक्षे च तत एव सुतरां निरुक्ताव्यापकत्वस्य तत्रावर्त्तमानत्वात्।

अथ प्रतियोगितायां वैशिष्ट्याद्यनवच्छिन्नत्वनिवेशपक्षे पृथिवीत्ववत्तद्व्यक्तिर्न इत्यादि भेदप्रतियोगितावच्छेदकत्वस्य पृथिवीत्वे स्वीकारे कुतो व्यभिचाररोधः ? पृथिवीत्वतद्व्यक्तित्वयोः प्रत्येकमेवावच्छेदकतायाः वैशिष्ट्यानवच्छिन्नत्वात् तादृशभेदस्य घटादिवृत्तित्वाच्च इति चेदत्र केचित् सावच्छिन्नावच्छेदकत्वानिरूपकप्रतियोगिताकभेद

प्रकृते भेदपदेनाभिधीयते, तथाच पटवृत्तित्ववैशिष्ट्यादवच्छिन्नाया पृथिवीत्वादिगतभेदप्रतियोगितावच्छेदताया: सावच्छिन्नतया तत् तत्र प्रतियोगिता न सावच्छिन्नावच्छेदकत्वानिरूपिका, एतेन नि वच्छिन्नावच्छेदकतानिवेशे तद्व्यक्तित्ववत्पृथिवी न इति भेदमाद व्यभिचारवारणासम्भव इत्यपि परास्तम् तादृशभेदीयप्रतियोगिताया पृथिवीत्वनिष्ठनिवच्छिन्नावच्छेदकतानिरूपकत्वेऽपि तद्व्यक्तित्वनिष्ठ सावच्छिन्नावच्छेदकत्वानिरूपकत्वविरहात् व्यभिचारस्य वारणात् इति व्याकुर्व्वते तन्न मनोरमं उपेच्चात्वशरीरत्वादीनां उपेच्चात्वत्वशरीरत्व त्वादिरूपेणैव प्रतियोगितावच्छेदकतया उपेच्चात्ववान् न शरीरत्वव न इत्यादिभेदप्रतियोगित्वानां सावच्छिन्नावच्छेदकत्वानिरूपकत्व सम्भवे असम्भवेन तत्र तत्र जातित्वबाधसाधने स्वरूपासिद्धेः सद्भाव मात्रेण अनिवार्य्यत्वात्।

अथ वदन्ति अवच्छेदकतायां प्रतियोगितायाञ्च प्रत्येकमवच्छे दकताद्वयानिरूपकत्वं निवेश्यते, ननु अवच्छेदकतायां वैशिष्ट्याद नवच्छिन्नत्वं, एवञ्च पटवृत्तित्वविशिष्टपृथिवीत्ववान् न इति प्रतीति सिद्धभेदीयप्रतियोगितावच्छेदकताया वैशिष्ट्यनिष्ठावच्छेदकता-नि रूपकत्वस्य पृथिवीत्वत्वनिष्ठावच्छेदकतानिरूपकत्वस्य च सत्त्वे अवच्छेदकताद्वयानिरूपकत्वविरहात् तद्व्युदासः। पृथिवीत्ववत्तद् व्यक्तिर्न तत्पृथिवी न इत्यादिप्रतीतिसिद्धभेदीयप्रतियोगिताय पृथिवीत्वतद्व्यक्तित्वादिनिष्ठावच्छेदकताद्वयनिरूपकतया तत्परीहा सुसमञ्जस एव।

न च प्रतियोगितायां अवच्छेदकताद्वयानिरूपकत्वमेवासिद्धं सर्व्वस्य मेव प्रतियोगितायां धर्म्मनिष्ठावच्छेदकताया: संसर्गनिष्ठावच्छे दकतायाश्च निरूपकत्वस्य वर्त्तमानतया अवच्छेदकताद्वयनिरूपकत्व यत्किञ्चिदवच्छेदकताद्वयानिरूपकत्वस्य च अतिप्रसञ्जकत्वात् इ वाच्यं धार्म्मिकसांसर्गिकावच्छेदकत्वयो: संसर्गावच्छिन्नत्वानवच्छिन्न

लक्षणवैलक्षण्यवत्तया तदुभयसाधारणस्य अवच्छेदकतात्वस्य निर्वक्तुमशक्यत्वेन प्रकृते संसर्गावच्छिन्नधार्म्मिकावच्छेदकताद्वयप्रवेशात् प्रतियोगितामात्रस्य धार्म्मिकसांसर्गिकभेदेन अवच्छेदकताद्वयनिरूपकत्वेऽपि सर्व्वत्र धार्म्मिकावच्छेदकताद्वयनिरूपकत्वविरहात् नासिद्धिः ।

नच प्रतियोगितायां अवच्छेदकताया इव अवच्छेदकतावच्छेदकताया अपि निरूपकत्वस्य अभ्युपगमात् तावतापि उपेत्वात्ववान् न इत्यादिभेदीयप्रतियोगिताया अवच्छेदकताद्वयनिरूपकतया असिद्धिरिति वाच्यं, साक्षान्निरूपकताया एव तत्र प्रतियोगिविधया उपादानात्; तेन उपेत्वात्ववान् न इत्यादिभेदीयप्रतियोगिताया उपेत्वात्वत्वनिष्ठावच्छेदकतां प्रति परम्परया निरूपकत्वेऽपि उपेत्वात्वत्वावच्छिन्नावच्छेदकतां प्रत्येव साक्षान्निरूपकतया न क्षतिः । एतेन अत्यन्ताभावप्रतियोगित्वघटितलक्षणापेक्षया भेदप्रतियोगितावच्छेदकत्वघटितलक्षणस्य वैशिष्ट्यव्यासज्यवृत्तिधर्म्मानवच्छिन्नत्वगर्भतया महागौरवात् प्रागुक्त एव कल्पः श्रेयानितप्रपि प्रत्युक्तम् । (क्रमशः)

## सन्देशाः ।

**सभापतेरस्वास्थ्यम्**—संस्कृतसाहित्यपरिषदो जन्मनः प्रभृति नायकपदमधितिष्ठतां महामहोपाध्यायश्रीकालीप्रसन्नविद्यारत्नभट्टाचार्य्याणामुत्तरोत्तरपीड़ावृद्धिश्रवणाद् भृशमुद्विग्ना वयम् । तेऽधुना वरिसालान्तःपातिनि उजीरपुराभिधाने स्वग्रामे शिरसि वातव्याधिना शय्यालग्नास्तिष्ठन्तोऽनेकदा स्वजनमपि प्रत्यभिज्ञातुं न पारयन्तीति महदाशङ्कास्थानम् । सर्व्वात्मना प्रार्थयते करुणावतो नारायणस्तेषामचिरस्थमारोग्यम् ।

**परिषत्पुस्तकालयः**—'सालिकिया'वास्तव्यः स्वनामधन्यो-वदान्यवरः परिषदोऽकपटसहायकः श्रीमान् तुलारामगोयेङ्कामहाशयः सार्द्धशतरूप्यकेभ्योऽधिकार्घं मध्वसम्प्रदायप्रसिद्धं समस्तं ग्रन्थजातं 'कुम्भकोणा'दानाय्य परिषत्पुस्तकालये प्रादादिति तस्मै भूयोभूयः साधुकारानर्पयामः । एतद्धि तस्य द्वितीयं दानम् यत्पूर्व्वं रूप्यकशत-त्रयार्घां ग्रन्थानवहस्तेन दत्तो बभूव ।

अन्यच्च—सम्प्रति वराहनगरनिवासिना खुलनान्तर्गुरुग्रामाभिजनेन श्रीयुतरसिकचन्द्रभट्टाचार्य्यमहाशयेन तत्पितृपितामहैः पीताम्बर-विद्याभूषणजानकीनाथतर्कालङ्कारादिभिः पण्डितवरैः सञ्चितहस्त-लिखितपुस्तकानां चत्वारिंशत्संख्यकसम्पुटकानि परिषत्पुस्तकालये विसृष्टानीति तं निर्भरं प्रशंसामः ।

**पारलौकिकम्**— वाँकीपुरमध्युषिवान् परिषत्सदस्यो विमर्शवान् ब्रह्मविद्या-न्यतरसम्पादको रायबाहादुरोपाह्वः पूर्णेन्दु-नारायणसिंहः सम्प्रति परलोकमगादिति सातिशयं दुःख-मस्माकम् । भगवान् तदात्मनः शान्तिं, शोकाकुलानां तद्बान्धवानाञ्च प्रबोधं विदधातु ।

**मासिकमधिवेशनम् अभिनयश्च**--विगते भाद्रपदीयाधिवेशने राजकीयशिक्षाविभागाध्यक्षाः श्रीमन्तो हर्नेलमहोदयाः कृपया परिषद-मागमन् अन्ये च बहवो विबुधजनाः । तेषां मनोविनोदाय परिष-च्छात्रैस्तर्काचार्य्यकृतिं 'स्यमन्तकोद्धारं' भासप्रभवं 'दूतघटोत्कच'ञ्चेति रूपकद्वयमभ्यनायि । सहृदयाः सामाजिकाः परमतुष्यन्नाट्यकलया साध्ववदंश्चाभिनायकान्, विशेषतश्च स्यमन्तकोद्धारे सुकुमारकं दूत-घटोत्कचे च धृतराष्ट्रम् ।

एतन्मासीयमधिवेशनञ्च अत्रैव मासि विंशदिवसे रविवासरे सम्पन्न-मभूत् । तत्रोपस्थितानां महामहोपाध्यायश्रीगुरुचरणतर्कदर्शनतीर्था-

युर्व्वेदशास्त्रि-श्रीताराचरणभट्टाचार्य--श्रीसुरेशचन्द्रशास्त्र--प्रभृतीनां पण्डितानां पुरतः श्रीमता चिन्ताहरणचक्रवर्त्तिना "संस्कृतसाहित्ये धर्म्मप्रधानता"भिधः भूयःशास्त्रदर्शनसञ्चितः कश्चिन्निबन्धो वाचितः, समालोचितश्च पण्डितवरैश्छात्रैश्च गवेषिततत्त्ववैचित्र्यात् प्रशंसामापत्। सभापतये धन्यवादानन्तरं सभा विशेषमाप्ता।

**संस्कृतोन्नतये प्रयत्नः**—कलिकाता संस्कृतमहाविद्यालयस्य तथा संस्कृतोन्नतिपराणां परिषदामधिकोन्नतये किं विधेयमिति निर्द्धारणाय वङ्गराष्ट्राधिकृतैः काचित् विद्वत्समितिराकारिता। तत्र निमन्त्रितया नः परिषदा श्रीमान् गोष्पतिकाव्यतीर्थरायचतुर्धुरीणः प्रतिनिधिर्वृतः। स हि भौमिकोऽपि पुरुषानुक्रमेण संस्कृतपरो युक्तिवचनप्रयोगनिपुण इति जानन्तो वयमाशास्महे यत् स नूनं यथाशक्ति तथा यतेरन् यथा हि तद्विद्यालयस्य, विविधसंस्कृतसमितीनां, चतुष्पाठीनां विशेषतश्च संस्कृतशिक्षापद्धतेरुन्नतिविधानं तत्र समितौ स्यात्। विषयोऽयं गुरुतरः, चिन्तनीयश्चानवहेलं सर्व्वैः पण्डितैः संस्कृतपरायणैः। अत्र विशेषविदुषां पृथक् चिन्तितफलानि परिषत्पत्रिकायां सादरं प्रकाशयितुमिच्छन्ति। कृपया सत्वरैस्तैर्भवितव्यम्।

**पितृदयिता**—मुद्राप्यते संस्कृतपरिषदा महाराजश्रीवल्लालसेनगुरुश्रीमदनिरुद्धभट्टरचिता पितृदयिता नाम श्राद्धपद्धतिः। साग्निकानां वङ्गीयब्राह्मणानां न विद्यते काचिदपि श्राद्धपद्धतिः प्रचलिता। सर्व्वा एव दृश्यमानाः श्राद्धपद्धतयः निरग्निकानां ब्राह्मणानामुपयोगिन्यः। स्मार्त्तचूड़ामणिना श्रीरघुनन्दनभट्टाचार्य्येण पदे पदे पितृदयिता प्रमाणतया समुदाहृता। अतएव अस्या मुद्रणे परिषद एष यत्नः। परिषद्ग्रन्थागारे केवला एव पितृदयिता वर्त्तते। तामेव आश्रित्य मुद्रणं समारभ्यते। यदि नाम केषाञ्चन समीपे अस्या आदर्शान्तरं वर्त्तते तदा सानुग्रहं वयं विज्ञापनीयाः।

---




# ভারতবর্ষমধ্যে সর্ব্বাপেক্ষা বৃহৎ, অকৃত্রিম ও সুলভ

# আয়ুর্ব্বেদীয় ঔষধালয়

হেড আফিস--পটুয়াটুলী ষ্ট্রীট, ঢাকা। কারখানা--স্বামীবাগ রোড, ঢাকা

কলিকাতা হেড আফিস— ৫২।১ বিডন ষ্ট্রীট। টেলি ঃ— "শক্তি" ঢাকা।

প্রত্যেক শাখাতেই সুদক্ষ কবিরাজ নিযুক্ত আছেন ; তাঁহারা বিনামূল্যে ব্যবস্থা দেন।

ভারত-রাষ্ট্রীয় মহাসভার সভাপতি

## দেশবন্ধু চিত্তরঞ্জন দাশ মহাশয় বলেন ঃ—

ঢাকা শক্তি ঔষধালয়ের কারখানার কার্য্যকলাপে আমি পরম প্রীত হইয়াছি, পরিচালনা কার্য্য বিশেষ নিপুণভাবে, সুশৃঙ্খল ও সুব্যবস্থার সহিত নির্ব্বাহিত হয়, পরিদর্শন-প্রণালী যেরূপভাবে সম্পাদিত হইতেছে তাহা হইতে উৎকৃষ্টতর প্রণালী কল্পনায়ও আনা যায় না।

(স্বাক্ষর) সি, আর, দাশ।

| | | | |
|---|---|---|---|
| দশনসংস্কার চূর্ণ | ৶০ কৌটা। | ম্যালেরিয়া ও সর্ব্ববিধ জ্বরের কুলাস্তক— | |
| দাদমার | ৶০ কৌটা। | জ্বরাস্তক যোগ | ।০ সপ্তাহ |
| বৃহৎ খদির বটিকা | ৶০ কৌটা। | অমৃতারিষ্ট | ৸০ শিশি |
| ১ ডজন ১৸০ আনা, ৩ ডজন ৪ ০ আনা। | | কলেরান্তক | ॥০ কৌটা |

শক্তি বা কর্ম্মযোগ এবং আয়ুর্ব্বেদীয় চিকিৎসা-প্রণালী সম্বলিত ক্যাটালগ পত্র লিখিলে বিনামূল্যে পাইবেন।



গুণে অদ্বিতীয়, গন্ধে অতুলনীয়, শিরোরোগের মহৌষধ এক শিশি ১৲ টাকা, ৩ শিশি ২৷৷৹, ৬ শিশি ৫৲ টাকা, ১২ শিশি ৯৷৷৹ টাকা, এক গ্রোস ১০৮৲ টাকা, ডাকমাশুল স্বতন্ত্র।

---



রক্তদুষ্টির মহৌষধ। শরীরের দুর্ব্বলতা দূর করিয়া কান্তি ও পুষ্টি বর্দ্ধনে অদ্বিতীয়। ১ শিশির মূল্য ১৷৷৹ দেড় টাকা, ৩ শিশি ৩৵০ আনা। ৬ শিশি ৭৷৷৹ সাড়ে সাত টাকা, ডাকমাশুল স্বতন্ত্র।

## সি কে সেন এণ্ড কোং লিমিটেড।

২৯নং কলুটোলা ষ্ট্রীট, কলিকাতা।

---

প্রকাশকো মুদ্রাপকশ্চ—শ্রীজানকীনাথকাব্যতীর্থঃ।
সংস্কৃতসাহিত্যপরিষদ্ভবনম্, শ্যামবাজার ব্রীজরোড, কলিকাতা।
মুদ্রণস্থানং—শ্রীপ্রেস, ১০৭ কর্ণওয়ালিস ষ্ট্রীট, শ্যামবাজার, কলিকাতা।

१८४५ शकाब्दे
कार्त्तिके
November 1923.

Reg. No. C. 1073.

६ष्ठ खण्डः
७म संख्या
Vol. VI. No. 7




संस्कृतसाहित्यपरिषदो मासिकं मुखपत्रम्।

सम्पादकौ— महामहोपाध्यायश्रीदुर्गाचरणसांख्यवेदान्ततीर्थः
श्रीकालीपदतर्काचार्य्यश्च

सहकारिसम्पादकः—श्रीजानकीनाथसाहित्यशास्त्री।



[प्रतिखण्डमूल्यं ।० चतुराणकम्] [वार्षिकमूल्यं ३) रूप्यकत्रयम्।

Foreign price 7s. yearly including postage.

কেশরাশিকে কুঞ্চিত ও কোমল করিবার জন্যই



# কে-শ-র-ঞ্জ-ন-তৈ-ল

এই আসমুদ্র ভারতের সর্ব্বত্রই কেশরঞ্জনের শতমুখে সুখ্যাতি। নিত্য স্নানকালে কেশরঞ্জন মাথায় মাখিলে সমস্ত দিনটী চিত্ত প্রফুল্ল থাকে। কেশরঞ্জন নিত্য মাথায় মাখিলে মাথা ধরা, মাথা ঘোরা, অনিদ্রা, গা হু হু করা প্রভৃতি উপসর্গ বিদূরিত হয়। দেশের রাজা মহারাজা হইতে সামান্য গৃহস্থ গৃহেও কেশরঞ্জনের সমাদর। আপনিও ব্যবহার করুন। মূল্য প্রতিশিশি এক টাকা, ডাকব্যয় সাত আনা।




## স্নায়বিক দুর্ব্বলতার আশু প্রতিকার।

বলবর্দ্ধক, মেধাবর্দ্ধক ও স্মৃতিবর্দ্ধক মহৌষধ। আমাদের "সঞ্জীবন রসায়ন" যা দুর্ব্বলতার জন্য যাঁহাদের উদ্যম-উৎসাহশক্তি-স্ফূর্ত্তি ও স্মৃতিশক্তি বিনষ্ট হইয়াছে, অগ্নিমান্দ্য প্রভৃতি স্নায়বিক উপদ্রব উপস্থিত হইয়াছে তাঁহাদের পক্ষে সঞ্জীবন অমৃতের ন্যায় উপকারী। বিশেষতঃ ইহাদ্বারা বমন, বমনেচ্ছা, উদ্গার, হিক্কা, (পেট ফাঁপা) ও পেট ভুটভাট করা প্রভৃতি পেটগরমের উপদ্রবসমূহ অচিরে নি হইয়া থাকে। এক কথায় বলিতে হইলে, অজীর্ণ, অগ্নিমান্দ্য ও স্নায়বিক দুর্ব্বলতা জন্য এবং ছাত্রগণের মেধাবৃদ্ধি করিতে "সঞ্জীবন রসায়নের" ন্যায় অব্যর্থ ঔষ বিরল। এক শিশির মূল্য ১৲ টাকা। মাশুলাদি ৶০ আনা।

পরিবর্ত্তিত **সচিত্র কবিরাজ-শিক্ষা।** পরিবর্দ্ধিত

শ্রীযুক্ত নগেন্দ্রনাথ সেনগুপ্ত প্রণীত।

সমগ্র আয়ুর্ব্বেদ শাস্ত্রের সার সঙ্কলন। বড় বড় আটটী খণ্ডে সমগ্র পুস্তক বি অতি সরল ভাষায় লিখিত হওয়ায়, কেবল চিকিৎসকের নয়—সাধারণ গৃহস্থের ইহা একখানি নিত্য-ব্যবহার্য্য গ্রন্থ। নাড়ী পরীক্ষা হইতে আরম্ভ করিয়া সমস্ত নিদান, চিকিৎসা-প্রণালী আয়ুর্ব্বেদীয় ঔষধ, তৈল, ও ঘৃতাদি-প্রস্তুত-বিধি, এবং দীর্ঘজীবন-লাভের উপায়স্বরূপ স্বাস্থ্যকারক স্থানসমূহের পূর্ণবিবরণ, রোগীর পথ্য দ্বিতীয়খণ্ড মহর্ষিদের গৌরবস্বরূপ—সুশ্রুত-সংহিতা এই সংস্করণে সন্নিবেশিত হই মূল্য ২॥০ টাকা। ডাকমাশুল ও প্যাকিং ৸০ বার আনা।

**কবিরাজ নগেন্দ্রনাথ সেন এণ্ড কোং, লিমিটেড্।**

১৮।১ ও ১৯ নং লোয়ার চিৎপুর রোড, কলিকাতা।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

१८४५ शकीय कार्त्तिके, ६ष्ठ-वर्षस्य ७म-संख्या


## विजया

(लेखकः—श्रीयामिनीकान्तसाहित्याचार्यः)

यदि यास्यसि शीघ्रमीदृशमसमाप्ते सुतदैन्यवेदने ।
कथमेत्य चिराद् दिनत्रयं चिरसुप्तान् तनयानबोधयः ॥ १
अथवा भवती किमुच्यतां सुतभागो भजते विशिष्टताम् ।
जननीवारुणा सुतेऽन्यथा कथमेवं मृगतृष्णिकायताम् ॥ २
यदि नैव विलोकसे सुताः सुखिता वा गुरुदुःखिता इति ।
कथमेत्य मुधा महेश्वरि चिरदग्धानतिदग्धुमीहसे ॥ ३
अयि भारतवर्षवत्सले तव वात्सल्यमिदं किमात्मकम् ।
सति सान्त्वयितुं स्व-वैभवे तनयानां रुदतां प्रयाति का ? ४
प्रतिवर्षमतीव हर्षतः सुतवर्गस्तव मार्गमीक्षते ।
मनुते मनसेति शङ्करी तनयानां किल शं करिष्यति ॥ ५
बत ते न विदन्ति तत्त्वतः तव पाषाणजनिं जडात्मिके ।
अथवा पतिपक्षभेदतो विषमूर्च्छा त्वयि मूर्च्छति ध्रुवम् ॥ ६
यदि 'मे तनया दुराशया' इति मत्वा परिलोकसे न नः ।
अयि शासन-पालनक्षमे कुरु दण्डोचितदण्डयोजनम् ॥ ७

असुरैः सहवासवैभवादसुरत्वं तनयेषु चेन्मतम्।
महिषासुरमर्दिनी ततुर्न कथं ते पुनरद्य जृम्भताम्॥ ८
विजया लभतां लयं जया यमवासे वसतिं विभावयेत्।
समुदेतु तयोः पदे पुनः क्षुधयार्त्तौ तव डाकिनीद्वयी॥ ९
तव सिद्धिदशक्तिदौ सुतावयथार्थौ यदि भारते मतौ।
अशिवे! सततं शिवेतरं सहरोगं प्रलयं समाह्वय॥ १०
त्वरितं कुरु ते यदीप्सितं मरणं वा तरणं हि दुःखतः।
तव नीरवतां सुतान् प्रति वयमित्थं नहि सोढ़ुमीश्महे॥ ११
न शिवे! स्वप्नेऽपि कल्पितं भवितेत्थं तव भारतं क्वचित्।
अयि पश्य सकृत् श्मशानतो नहि भेदः खलु तस्य विद्यते॥ १२
सततं शिवसामशब्दितं यदभूत् शान्तरसं तपोवनं।
तदिदं मुखरं शिवारुतैः वत जीर्णं गहनं विगण्यताम्॥ १३
तटिनीकुलसाकुलस्वनं प्रतिपादे जननीशुभागतिं।
स्वरते नहि वत्समद्य तत् पथि शीर्णं गुरुसेतुबन्धनैः॥ १४
कलनादसधीरधीषणा कुरुते नो कलहंससंहतिः।
जठरक्षुधयाधरीकृता परदेशं परि सा पलायिता॥ १५
नहि काशविकाशशोभनं तटिनीसैकतमद्य जायते।
न च गोपविलोललोचना कुरुते तच्चलपद्मसङ्क्रमम्॥ १६
अथ यत्र निकेतने कृही निजदेहं क्षुधिताय दत्तवान्।
अतिथिः प्रतियाति निःश्वसन् वत शून्यात्तत एव साम्प्रतम्।
सुतदैन्यमिदं भयङ्करं यदि दृष्ट्वाऽपि न दृश्यति त्वया।
कथयामि चिराय गम्यतां पुनरत्रागमनं न याच्यते॥ १८
वयमम्ब! हृदीति कुर्महे जननो नः सुतरक्षणाक्षमा।
अतले सुरदीर्घिकाजले गुरुशोकादसृजत् कलेवरम्॥ १९

---

# उपासना

लेखकः—श्रीशरत्कमलभट्टाचार्य्यन्यायस्मृतितीर्थः।

तत्रोपासना त्रिविधा। तथाहि—

यत्र कर्म्मणा अर्थात् कर्म्मद्वारा भगवानुपास्यते सा उपासना कर्म्मात्मिका। तदिदमुक्तम्—

"सायाह्नं प्रातरारभ्य सायाह्नात् प्रातरन्ततः।
यत् करोमि जगन्नाथ! तदेव तव पूजनम्॥"

अहमुपासकः प्रातरारभ्य सायाह्नं यावत् सायाह्नमारभ्य प्रातर्यावत् यत् करोमि हे जगन्नाथ! तत् सर्व्वमेव तव पूजनमुपासनमेवेति समुदितार्थः। एतदेव व्याख्यातं गीताशास्त्रेण

"यत् करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय! तत् कुरुष्व मदर्पणम्॥"

उपासकानां सर्व्वमेव कर्म्म भगवद्भावपूर्णमित्यत्र नास्ति सन्देहलेशोऽपि। तथाहि प्रातरुत्थाय गुरुस्मरणात्मस्वरूपचिन्तनप्रातःस्मरणीय--मन्त्रपाठस्नानसन्ध्या--तर्पणपूजाहोमपाठादि-कर्म्मभिर्व्विश्वात्मा भगवानेवोपास्यते।

"नमोऽस्तु गुरवे तस्मै इष्टदेवस्वरूपिणे" (१)

"अखण्डमण्डलाकारं व्याप्तं येन चराचरम्" (२)

इत्यादिना गुरौ कीदृशी चिन्तोपदिष्टा तत् साधकानां सुविदितमेव। अतो गुरुमन्त्रदेवतानामैक्यं विभावनीयमामनन्ति। "आत्मनस्तु कामाय सर्व्वं प्रियं भवति"—इति श्रुत्युक्तदिशा निरतिशयप्रियत्वमात्मनः प्रमाणीकृतमेव सुव्यक्तम्। "यस्य वाक्यामृतं हन्ति विषं संसारसंज्ञकम्" (१) "चक्षुरुन्मीलितं येन ज्ञानाञ्जनशलाकया (२) तादृशे परमकारुणिके गुरौ निरतिशयप्रियात्मबुद्धिरुपासकानां सर्व्वथा

कथं न कर्त्तव्या भवति ? तथाहि पितनुग्रहेण जननीगर्भे जीवजन्म लाभवद् गुर्व्वनुग्रहेण गायत्रीगर्भे मानवानामुपासकजन्मलाभः अत एव "वेदमाते"ति गायत्र्या "द्विज" इत्युपासकानां "वीज"मिति मन्त्राणामन्वर्थता चोपपद्यते । गुरुमन्त्रदेवतानामैक्यविभावनया तेषु निरतिशयप्रियात्मबुद्धिर्न सम्भवत्येव । अत एव "सोऽह"मिति भावनाया अप्युपदेशः श्रूयते । विना हि तादृशीमैक्यबुद्धिमुपा प्रति प्रेमोदयोऽसम्भव एव । प्रेमशून्या तूपासना विड़म्बनाविशेष नाटकभूमिकाभिनयवत् प्रतिभाति । तदिदमुक्तम् पतञ्जलिना—

"स तु दीर्घकालादरनैरन्तर्य्यसत्कारासेवितो दृढ़भूमिः"

"सत्कारासेवित"इत्यनेन प्रेम्नः सर्व्वथा आवश्यकत्वमुपदिष्ट तथाहि भगवता गीतायामभ्यासयोगे उक्तम्—

यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥

एतेन भगवति मनःसंयमोपायो व्याख्यातः । भक्तियोगेऽप्युक्तम्

"मय्येव मन आधत्स्व मयि वुद्धिं निवेशय
निवसिष्यसि मय्येव अत ऊर्द्धं न संशयः ।
अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम्
अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ।"

"आ सम्यक् सेवितं आसेवितः । सम्यक् सेवा प्रेमास्पदे दृश्यते, यथा लोके सत्याः पतिसेवा । प्रेमास्पद एव मनःसंयोगः स भवति । उदाहरणमस्य लौकिकं वर्णितं कविना—"वामे विनिहितवदना (शकुन्तला) आत्मानमपि न विभावयति, किं रागन्तुकम् ।" प्रेमास्पदम् एव दीर्घकालासेवितम्, निरन्तरासेवि सत्कारासेवितम् भवति सत्याः पतिसेवैवात्र दृष्टान्तः । स अभ्यासस्तपसा ब्रह्मचर्य्येण विद्यया श्रद्धया च सम्पादितः सत्कार दृढ़भूमिर्भवती"ति भाष्यकारव्यासदेवव्याख्यानेनाप्युपासनायां

आवश्यकत्वमुपलभते यतः प्रेमास्पदप्राप्त्यर्थमेव तपस्यादि प्रवर्त्तते, स तु प्रेमा आत्मन्येव निरुपाधिरतो निरतिशयः, आत्मैव भगवानिति श्रुतिसिद्धान्तनयेनोपासनायां प्रेम्न आवश्यकत्वमुपपन्नम्। गुरुस्मरण-मन्त्रजातैरपि भगवानुपास्यत इति सुव्यक्तम्। तथाहि—

"ब्रह्मा मुरारिस्त्रिपुरान्तकारी"

इत्यादिमन्त्रेण ब्रह्मसूर्य्यादीनां सविधे सुप्रभातप्रार्थना। सा तु प्रार्थना भगवत्सविध एव, यतः—

"यतो वा इमानि भूतानि जायन्ते"

इत्यादि श्रुत्या

"तत्सवितुर्व्वरेण्यम्"

इत्यादिमन्त्रेण च ब्रह्मादीनां सूर्य्यादीनाञ्च ब्रह्मस्वरूपत्वमेव।

स्नानमपि भगवदुपासनम्।

तथाहि "गङ्गे च यमुने चैव गोदावरि सरस्वति" इत्यादिमन्त्रैः कस्य आवाहनमित्युपासकानां सुविदितमेव। नहि जात्वपि जड़ाना-मावाहनं सम्भवति। नहि जड़ात्मकं जलं "भगवति! स्वर्गारोहण-वैजयन्ति!" इत्यादिनाम्ना महर्षिणा वाल्मीकिनाह्वयते? अत एव "यो वः शिवतमो रसः" (१) "उशतीरिव मातरः" (२) "भवाय जल-मूर्त्तये नमः" (३) इत्यादिभिर्बहुभिर्मन्त्रैर्जलरूपे नारायणे सुस्पष्टमेव ब्रह्मचिन्तनमुपासनमायाति। तदेतत् स्मृतम्—

"योऽयं निरञ्जनो देवश्चित्स्वरूपो जनार्द्दनः।
स एव द्रवरूपेण गङ्गाम्भो नात्र संशयः॥"

तर्पणमपि भगवदुपासनम्, यतस्तर्पणेन जीवे शिवभाव उपजायते सर्व्वभूतेषु शिवभावानयनमेव उपासनायाः फलमुक्तं स्वयमेव भगवता वराहपुराणे यथा

"यावत् सर्व्वेषु भूतेषु मद्भावो नोपजायते।
तावदेवमुपासीत वाङ्मनःकायकर्म्मभिः॥

सर्व्वेषु भूतेषु भगवद्भावो यावन्नोपजायते तावदुपासना सर्व्वात्मना कर्त्तव्येति यस्तावदुपदेशो भगवद्वाक्यादवगतः स खलु तर्पणरूपायामुपासनायां फलवान् दृश्यते। तथाहि—तर्पणे तीर्थस्मरणमादौ विहितम्—

"कुरुक्षेत्रं गयागङ्गाप्रभासपुष्कराणि च।
तीर्थान्येतानि पुण्यानि तर्पणकाले भवन्त्विह॥"

"अहमुपासकः साम्प्रतमाब्रह्मस्तम्बपर्य्यन्तं जगज्जलैस्तर्पयामि, अतो मदनुष्ठेयतर्पणकरणजलानि पावयितुं कुरुक्षेत्रगङ्गादितीर्थानि जलेऽस्मिन्नाविर्भवन्तु"—इति तादृशप्रार्थनाया अभिप्रायः स्फुट एव। तीर्थानि खलु भगवत्स्थानानि, तेषु भगवद्विभूतिराजिं मूर्त्तिमतीं पश्यन्तो मानवा भगवत्प्रेमविह्वलाः सम्पद्यन्त इति तर्पणकाले भगवत्प्रेमानयनार्थं तीर्थस्मरणं कुर्व्वतश्चिन्तनीयमेवमुपासकस्य यद् भगवत्प्रतीकगङ्गादितीर्थाधिष्ठितमदनुष्ठेयतर्पणसलिलैः

"तृप्यतां भगवान् भूतैर्व्विश्वात्मा पितृभिः सह।" इति

एवं तीर्थस्मरणात्मकध्यानध्वस्तरजस्तमःसमुद्भूतविशुद्धसत्त्वेन खलु साधकेन "देवा आगच्छन्तु"—इत्यादिमन्त्रैर्देवानाहूय ब्रह्मादितर्पणं कर्त्तव्यम्। "जन्माद्यस्य यतः"—इत्युक्तनयाद् ब्रह्मादीनां तटस्थलक्षणलक्ष्यब्रह्मत्वमेवेति ब्रह्मादितर्पणेन भगवत्तर्पणमेव फलितमिति भगवदुपासनमेवायातम्। ततो "देवा यक्षास्तथा नागा" इत्यादिमन्त्रेण देवानां यक्षाणां नागानां गन्धर्व्वाणामप्सरसामसुराणां क्रूराणां सर्पाणां सुपर्णानां तरूणां जिह्मगानां खगानां विद्याधराणां जलाधाराणां सागरसरित्प्रभृतीनां प्राणिनामाकाशगामिनां निराहाराणां जीवानां पापिनां पुण्यवताञ्च सर्व्वेषामेव तर्पणं विहितम्। देवादिपुण्यवदन्तेषु सर्व्वेष्वेव भूतेषु सूत्रात्मरूपेण परमप्रेमनिकेतनविश्वात्मैव राजत इति यथा तेषामपि आप्यायनाय (तृप्त्यर्थम्) सलिलमेतद्दीयत इति मन्त्रार्थमग्नं साधकचित्तं कीदृशरसपरिप्लुतमाभातीति

---

The Gurjar Prabhat Printing Press, 27, Amratola Street, Calcutta.

द्योयत द्वात मन्वाथमग्न साधकाच्त पादृमस्तपारलुनानामा

सुविदितमेव सर्व्वेषाम्। अपि च ये पापे रता ये च धर्म्मे रता ये चापि क्रूरास्तेषामपि आप्यायनाय मया सलिलमेतद्दीयत इति मन्त्रे कीदृशी समदृष्टिः परिस्फुटा तदपि चिन्तनीयम्। भगवता गीतायां यदुपदिष्टम्—

विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः॥

भागवते च भक्तचूड़ामणिना प्रह्लादेन यदुपदिष्टम्—
"सर्व्वत्र दैत्याः समतामुपेत समत्वमाराधनमच्युतस्य।"

तस्यैव फलमेतन्मन्त्रार्थे परिदृश्यते। तथाहि—"आत्मनस्तु कामाय सर्व्वं प्रियं भवति"—इत्युक्तदिशा निरतिशयप्रेमभाजनत्वमात्मन आम्नातम्। यथा मदीय आत्मा मम निरतिशयप्रियस्तथैव सर्व्वभूतानामात्मा, कथमन्यथा तर्पणार्थमेतेषां मे प्रवृत्तिर्जायते नाम? अतः परमप्रेमास्पदभगवदभिन्नमदात्मैव सर्व्वभूतनिकाये विविधमूर्त्त्या विराजततरामिति दृश्यते मे सर्व्वभूततर्पणे प्रवृत्तिः। ततश्च

स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्
स एव विष्णुः स प्राणः स कालाग्निः स चन्द्रमाः।
स एव सर्व्वं यद्भूतं यच्च भव्यं सनातनम्
ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये॥

... ... ... ...

... ... ... ...

त्रिषु धामसु यद् भोग्यं भोक्ता भोगश्च यद् भवेत्।
तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः॥
मय्येव सकलं जातं मयि सर्व्वं प्रतिष्ठितम्।
मयि सर्व्वं लयं याति तद् ब्रह्माद्वयमस्म्यहम्॥

इति यत् सर्व्वात्मस्वरूपपरमात्मोपासनमाम्नातं तदेवाद्यापि पूर्वोक्तर्प गमन्वकदम्बकद्वारेति साधकानां सुविदितमेवैतत्। (क्रमशः)

---

# लीला।

लेखकः—श्रीभवभूतिविद्यारत्नः।

मयमनसिंहं मतेन गृहीतं मया स्वहस्तन्यस्तं कार्य्यम्। सर्वेषां मनोरञ्जनमेवात्मनो महाव्रतत्वेन गृहीत्वा परमसतर्कतया च प्रारब्धः स्वकीयकर्त्तव्यनिचयः, येनाहं मासाभ्यन्तर एव सुदक्षाधिकरणिकरूपेण तत्र सर्व्वत्र परिज्ञातो बहुमानितश्च। प्रथममासलब्धसार्द्धद्विशतरूप्यकमितवेतनादात्मनो वस्त्राच्छादनाद्यावश्यकव्ययव्यपदेशेन यत् किञ्चिन्मात्रं संरक्ष्यावशेषं सर्व्वमेव मातुलचरणेषु मया प्रेषितम्। तावपि मदन्तिकादात्मजतुल्यमभीप्सिताचरणं संप्राप्य परमानन्दं गतौ।

एकस्मिन्नवकाशदिवसे मध्याह्नभोजनात् परं तदानीं हिमर्तुनिमित्तशैत्यप्रभावहेतोः सूर्य्यातपदत्तपृष्ठस्तापवस्त्रसमावृतपादकण्ठः शयनोचिते वेत्रासने लीलया सुखं शयानस्सर्व्वग्रामाणताम्बूलसहितवसीयसंवादपत्रपाठरत आसं, यदा मम भृत्यो मामुपागत्याघोषयदागमनवार्त्तां कस्याप्यभ्यागतनारीजनस्य। तत्प्रवेशनाय समादिष्टः सः ससम्भ्रममेव तां रमणीं मदन्तिकमानैषीत्। धनिजनपरिचारिकाकृतिः सा मां व्यजिज्ञपत्—"अस्माकं जननीतुल्यया भूस्वामिन्या न तावद् वैषयिककर्म्माभिज्ञया लोकमुखात् श्रीमतां चरित्रवत्त्वकार्य्यनैपुण्यादिविविधप्रशंसावचनानि समाकर्ण्य कस्यचित् सुजटिलकर्म्मणः समाधानाय भवदुपदेशप्रसादमाकाङ्क्षन्त्या मन्मुखेन भवदामन्त्रणं कृतम्। यदि सहृदयतया श्रीमन्तस्तदीयालये पादार्पणं विधाय

तामनुगच्छेयु:, सा हि सम्यक् कृतार्था भविष्यती"ति। सर्व्वजन-सन्तोषणैकव्रतोऽहं तस्या भूस्वामिन्या नामवंशादिपरिचयजिज्ञासायां न तावत् समुत्सुक: केवलमबलायास्तस्या मदुपदेशेन यदि काप्यु-पकृतिर्भवेदिति हितसाधनबुद्ध्या पराह्न एव तद्गृहगमनमङ्गीकृतवान्। सा सेवकाप्ये तावदल्पकालेनैव सुफलीभूतात्मप्रयासा चरितार्थम्मन्या महाहर्षेण स्वस्थानं प्रस्थिता।

अथ समागतेऽपराह्णे नि:शेषिततत्कालोचितकर्त्तव्यनिचय: गृहीतमद्वेशस्तद्दासीकथितं भूस्वामिनीगृहमगच्छम्। बहिर्द्वारि प्रागेव मदीयागमनसमवेता भृत्यजना दृष्ट्वा मां ससम्मानं प्रासादा-भ्यन्तरं निन्यु:। मम विस्मय: खलु नावधिं गतो यदाहमपश्यं सर्व्वे ते जनास्तत्रत्ये निर्ज्जने कस्मिंश्चित् सुमनोरमे प्रकोष्ठे मामेकलं संवेश्यैव तत्स्थानात् शनैरपसृता:। तस्मिन् प्रकोष्ठे अपरप्रकोष्ठ-संयोजकमन्तर्द्वारमेकमासीत्। यदाहमेकाकी मनसि क्रियमाण-विविधवितर्कस्तत्र समासीन आसं, तदैवाकस्मात् तदन्तर्द्वारं समु-द्घाटितम्। अतीवविस्मयाप्लुतनयनोऽहमपश्यं भूतलावतीर्णां मम चिराराध्यदेवतां वागीश्वरीमिव, मूर्त्तिमतीं शुभ्रशारदज्योत्स्नामिव, परिगृहीतनारीरूपां मम तद्देशलब्धां सुविमलयश:प्रभामिव परिहित-श्वेतवस्त्रामेकहस्तेन धृतविविधभोग्यपूर्णहैमपात्रां विधवाकृतिं मम शैशवसहचरीं लीलाम्। सहसा लोचनचन्द्रिकां तां लीलामवलोक्य व्यचिन्तयं—किमियं सा लीला यैकदा मद्गतप्राणा बहिश्चरं जीवित-मिवासीत्, माधवमुखाद् यस्या: पूर्व्वदेशीयेन केनचिद् भूस्वामिप्रवरेण सह परिणयकथामाकर्ण्याभिमानभरेण मया न जिज्ञासितं मम हृदय-धनापहारकस्य नामधामादिकं, सेयं किमकल्यभूस्वामिन एव गृहिणी साम्प्रतं दारुणवैधव्यदशामापन्ना ? अहो! हतभाग्याया ललाटे पतिसेवनसुखमपि विधात्रा न लिखितम्।" तत: किं तां ब्रवीमीति निर्णेतुमक्षमेण मया यदा कियत्क्षणं तूष्णीभावोऽवलम्बित:, स्मित-

वदना सा मदन्तिकमुपागत्य तत्सुवर्णपात्रं मत्समक्षं संरक्ष्यावादी —"किं विस्मृतवानसि सुशीलकुमार तव शैशवसखीमेनां लीलां हीदानीमत्र भूस्वामिनी वर्त्तते। पश्चिमवङ्गवास्तव्यः श्रीयुतसुशील कुमारचक्रवर्त्तिनामधेयः कोऽपि सदाशयो जनः साम्प्रतमत्राधिकरणि पदमधितिष्ठतीति परिजनमुखान्निशम्य किं स मम बाल्यबन्धुः सुशील कुमार इति ज्ञातुकामा वैषयिककर्म्मनिष्पादनार्थं नित्याधिकरणगामि मम कर्म्मचारिणं सविशेषं तस्य परिचयं पृष्ट्वा तन्मुखाच्चन्दननगरत तस्यागमनकथामाकर्ण्य त्वमेव सः सुशीलकुमार इति जातप्रत त्वद्दर्शनपिपासुर्वैषयिककार्य्यच्छलेन विश्वस्तां तां परिचारिकां प्रेषि वती। तन्मुखात् पुनस्त्वदीयाकृतिविषयकं परिचयं प्राप्य ल प्रत्यभिज्ञाने सन्देहलेशरहिता पराह्न एव त्वमत्रागमिष्यसीति च सुधाकरकिरणमिव चकोरी त्वद्दर्शनं सोत्कण्ठमपेक्षमाणा अत्रा धिकरणिकपुरुषो हि सम्पर्कतो मम भ्रातेति परिजनवर्गं पूर्वं विज्ञाप्य, तं च त्वदभ्यर्थनाय द्वारदेशे संरक्ष्याहं गृहमध्ये स्थित यदि सञ्जातमत्र ते शुभागमनं, परितर्पय मां मदर्पितैतत्फलमा शनग्रहणेने"ति तत आत्मनो वैधव्यलक्षणं प्रदर्शयन्ती विषण्णव पुनरब्रवीत् — "नारीजनस्यैतामनाकाङ्क्षणीयदशां संप्राप्तां यदि मा बन्धुस्त्वमन्तरान्तरा दर्शनदानेनानुगृह्णीयाः, तर्हि दुःखान्धकारमध्ये कमपि सुखालोकमधिगच्छेयम्। तत् सनिर्बन्धं ब्रवीमि तावद सत्रागन्तव्यमिति।"

बहुकालात् परं लीलादर्शनात् प्रबुद्धपूर्व्वप्रणयस्मृतेर्मे सा भावोदयात् सर्व्वाङ्गव्यापी कोऽपि वेपथुरजायत, यतो हि अधरका लीलया सह बहुलसम्भाषणमिच्छतोऽपि न मे तावद् वाक्स्फु मभूत्। केवलं "लीले! इदानीमपि स्मरसि ते हतभाग्यं बाल्य ईदृशीं दशां त्वं समापन्ने"त्येवंविधानि कतिचित् क्रमरहि वाक्यानि स्खलिताक्षरमभिधाय तत्प्रदत्तमशनञ्चागन्तुकलज्जाति

किञ्चिन्मात्रं गृहीत्वा तद्विवरणीयलीलासाक्षात्कारव्यापारं कथमपि समपादयम्। गृहप्रत्यागमनकाले तया पुनरेवाङ्गरुद्धः सावकाशं तद्भवनमागन्तुम्।　(क्रमशः)

---

# चन्द्रालोके

लेखकः—श्रीधूर्जटिप्रसादकाव्यतीर्थः

## पञ्चमोऽङ्कः

(पटीक्षेपणानन्तरं कर्णः पुनः प्रविशति)

कर्णः—(परिक्रम्य)

योद्धुं यामि न लैर्हि पाण्डवगणैर्युद्धं तु कीर्त्तिस्तुति-
र्वैक्लव्यानि तथापि मानसपटं सोत्साहतं कुर्व्वते।
हस्तोऽमङ्गलशङ्कया प्रशिथिलो यत्नः प्रणाशं गत-
स्तद्वार्त्तां वदितुं वचोऽपि गलितं शङ्कोपि मूकश्चिरात्॥

तथापि दुरापास्तं किल देवकार्य्यं येन चेदृशीमवस्थां गतो मदेक-परायणैः सह पाण्डवैरपि योद्धुं कृताध्यवसायोऽस्मि।

(विचिन्त्य) अथवानेन सम्प्रहारेण नवाम्भोधरधारासम्पर्केण महीरुह इव तत्तेजो नूनमुज्जीवत्येव।

निशम्य सिंहध्वनिमेककुत्त्रावितस्ततो यत् पशवो द्रवन्ति।
तद्विक्रमज्ञानमिहैव हेतुर्य्यं नाहुरेनं पशुराजसंज्ञम्॥

प्रतीहारी—(प्रविश्य) एसो क्खु प्पणिह्नी सङ्करो णाम देवेहिं मन्तिणा अ सद्धं इध आअच्छदि।

कर्णः—गच्छ प्रवेशय। त्वमपि स्वकार्य्यमशून्यं कुरु।

प्रतीहारी—जं आणवेदि भट्टा।

ततः प्रविशन्ति देवाः मन्त्री नारदश्च

मन्त्री—विजयतां प्रबलप्रतापः सुचरित्रो द्वारकाधिपतिः।

देवाः—विजयतामनन्तज्ञाननिधिर्भगवान् विश्वेश्वरः।

कृष्णः—अयि भो देवाः! अमात्यप्रधान! स्वं स्वमासनमलङ्कुर्वन्तु भवन्तः।

शङ्करः—देव! प्रणमामि।

कृष्णः—शङ्कर! स्वागतं, अपि कुशलं तव।

शङ्करः—भगवत्प्रसादात् सर्व्वमनामयम्।

कृष्णः—तत् कथय यथादृष्टं पाण्डवानां वृत्तजातम्।

शङ्करः—देव! महतीयं वार्त्ता; श्रूयतां संक्षेपतः कथयामि।

मन्त्री—अवहिताः स्मः।

शङ्करः—देव! देवपादारविन्दद्वन्द्वमभिनन्द्य सन्न्यासिवेशमि अवारितप्रवेशं स्वीकृत्य नानातीर्थग्रामाटवीदेवायतनादीनि क्रमं परिभ्रम्य नदीरुत्तीर्य्य पर्व्वतांश्चोल्लङ्घ्य कदाचिद् गतोऽस्मि भूतलं प्रतिबिम्बितामिवामरावतीमवन्तीनगरीम्। तत्र यदुकुलकटका हृतसकलमहीतलमवलोक्य समन्ताद्विचरन् कञ्चिदाकारानुमेयमा भिजात्यलक्षणं पुरुषं कस्मिंश्चिदुद्यानप्राकारसविधे सचिन्ता विचरन्तं व्यलोकयन्। शनैः शनैरुपगम्यावदञ्च, भद्र! देशस्य राजा कः, किन्नामधेयः सः; कथं वेयं नगरी योद्धृभिः परिवेष्टिता मयैवमुक्तः स पर्य्यागलदश्रुसिक्तकपोलतलः क्षणं निपुणमवलो किञ्चिदिव ध्यात्वा विनयावनतः सगद्गदं दण्डिराजोपाख्यानमा सर्व्वमाचचक्षे। अथ तञ्च तथाविधं कातरमवलोक्य स्नेहकोमल वाचा सान्त्वयित्वा तदुपनीतलोपचारैरध्वक्लान्तिमपनीय स्वस्तिवादा दिभिस्तमनुगृह्य चाभिपुरं प्रतस्थे।

मन्त्री—अपि जानासि भगवन्तमाततायिनमिव मन्यमानाः किं किं व्याहरन्ति।

शङ्करः—(स्वगतम्) कथं नाम भगवन्निन्दां भगवत्समीपे कथयामि।

कृष्णः—अलं वाक्पल्लवेन ; कथ्यतां संक्षेपतो यद्दृष्टम्।

शङ्करः—अथ यादवभटकटकपरिवृता रथ्याः परिभ्रमन् चण्डाश्वसेनमधुशक्तिशाम्बप्रभृतिभिः परिवेष्टितां पुरमगमम्।

कृष्णः—तत्र तत्र च किमप्यनिष्टं ननु दृष्टं पौराणाम्?

शङ्करः—तत्र—

क्वचित् काव्यालापः क्वचिदपि रसामोदपटुता
क्वचित्तूर्य्यध्वानः क्वचिदपि विलासः क्व च रतिः।
क्वचिद्विद्यागोष्ठी क्वचिदपि सुखोत्सप्रवहणं
सुखेनेत्थं कालं गमयति सदा स्वर्गसुलभम्॥

कृष्णः—(स्वगतम्) हन्त! जीविताः स्मः

देवाः—सदृशमेवैतद्भगवतो द्वारकाधिपतेः

कृष्णः—ततस्ततः?

शङ्करः—ततोऽहं जनालयमागम्य पौरान् जानपदांश्च व्यलोकयम्। तत्र च तेषां मुखाद्भगवद्गुणानुकीर्त्तनं दरिद्रराजाभावेन लोकदुःखमात्रप्रपीड़नञ्चाकर्ण्य त्रीणि दिनानि गमयित्वा प्रतिनिवृत्तो देशाद्देशान्तरं परिभ्रमन् स्यमन्तपञ्चकसविधं गतवान्। अथ तत्र कदाचित् पाण्डवाश्रमपदसमीपगामिनि वर्त्मनि भ्रमणार्त्तेन मया कस्मिंश्चित् स्निग्धवटतरुच्छाये क्षणमुपविश्य विचिन्तितम्; को मामस्मिन् स्थाने क्षुत्तृष्णापरीतं तर्पयिष्यतीति।

मन्त्री—(साग्रहं) ततस्ततः?

शङ्करः—ततश्चैषा व्याहृतिः कस्माच्चिदुच्चस्थानात् प्रावृषेण्यघनगर्ज्जितमिव कृषीवलानां मम प्रादुरासीत्।

सर्व्वे—किं किं?

शङ्करः—

ये दूरान्तिकचारिणोऽत्र नितरां क्षुत्तृट्परीता जना
विप्रक्षत्रविशस्तथाच वृषलाः काङ्क्षन्ति पानाशने ।
आगच्छन्त्विह सन्त आश्रमपदं देवोपमाभ्यर्हिताः
सम्यक् ते भवितार एव सदयं बद्धाञ्जलिः प्रार्थये ॥

सर्व्वे—(विस्मयं नाटयन्ति)

शङ्करः—इत्येवमाकर्ण्य बहवस्तन्मार्गानुसारिणो जनाः पर्य्याकुलमिव तत्स्थानं चक्रुः। अथ क्रमेणाहमपि तानन्वसरम्।

मन्त्री···देव ! क इमे भाग्यवन्त आतिथेयाः ?

कृष्णः—(सहासं) क्रमेण ज्ञास्यति भवान्;

(शङ्करं प्रति) भद्र ! ततस्ततः ?

शङ्करः—अथ तत्र समानसौन्दर्य्यशालिनः समतेजसः शान्तान् विनीतान् दिव्यदेहान् पञ्चदेवतावत् पञ्चपुरुषसिंहानभ्यागतान् विनीतवेशेन परिपश्यतो व्यलोकयम्। अथ ते चातुर्व्वर्ण्यविभागक्रमेणाभ्यागतांस्तपस्वियोग्यस्थानेषूपावेशयन्। क्रमेण च काचिदन्नपूर्णेव कृष्णा सौभाग्यवती वरवर्णिनी चर्व्यचूष्यलेह्यपेयाहार्य्यादिभिर्नः पर्य्यतोषयत्। अस्मिन्नेवावसरे "विजयतां सानुजः कुरुकुलगौरवमणिर्महाराजो युधिष्ठिर" इत्यनेन शतकृत्वो जयध्वनिना दिगन्तरालं प्रतिशब्दयन्तः सर्व्वे भोजनं समाप्य स्वं स्वं स्थानं प्रतस्थिरे। अथाहमपि तानेवावलोक्य पुनः पुनस्तन्माहात्म्यञ्च मन्यमानः कार्य्यसिद्धेर्बीजमिवावस्थानोपायमन्विष्यन्नतिष्ठम्।

मन्त्री—अहह ! अप्रवरमेतच्छ्रुतयशोगीतकम्। तथाच

गर्हणामिव बन्धूनां न जपेच्छ्रुतगीतिकाम्।
येन विमलिना बुद्धिर्भवेन्मलस्विनामपि ॥

कृष्णः—(स्वगतम्) अयि पण्डितम्मन्य ! तादृशजनदरवगाहः खलु पाण्डवसिन्धुः (प्रकाशं) भद्र ! कथ्यताम्;

शङ्कर:—ततः सर्व्वेषु प्रस्थितेषु धर्म्मराजनन्दनमेकाकिनं निरीक्ष्य गुरुशोकभारगर्भेणेव मनसा तत्पादयोरपतम्। किं किमिति तेनाहं पृष्टः "महाराज! अहमस्मि वनवासी कश्चित् क्षत्रियब्रुवः। कदाचित् क्षेत्रे शस्यसम्पद्दर्शनार्थं गतस्य मम कुटीरं प्रविश्य मातृहीनं बालं तनयमाक्रम्य कश्चिद्व्याघ्रः काननं प्रतस्थे। अथ दैवात् प्रतिनिवृत्तस्तादृशीमात्मनोऽवस्थामवलोक्य प्राणांस्त्यक्तुं कृताध्यवसायोऽपि महारौरवमात्मघातिनामिति मन्यमानः परिव्राजक इव भारतं पर्य्यटामि। अद्य त्विह परिजनमुखाज्ञवद्विधमहाजनदर्शनोत्सवमापन्नः कृतार्थोऽस्मि। अतो नान्यत्र गन्तुमुत्सहे यद्यनुग्राह्योऽहमिति मन्यते भवान्। स च महामनास्तदाकर्ण्य राजकुले मत्स्थानं निरूपयामास।

कृष्णः—(स्वगतं) इदमधिकमस्तृतश्रावणमितेषु पुरुषसिंहेषु (प्रकाशं) ततस्ततः?

शङ्करः—ततश्च तद्दिनावधि राजभोगमुपभुञ्जानो रहसि समन्तात् परिभ्रम्य गर्भगृहान्तर्व्वर्त्तिनं सौर्व्वशीकं दरिद्रराजमस्त्रागारादीनि च पश्यामीत्यनेन मे पञ्चषाण्यहानि व्यतीयुः। अस्मिन्नेवावसरे दूतमुखादुपश्रुत्य वृत्तान्तजातं जरासन्धादयो भगवद्विद्वेषिणो भीमपराक्रमा राजानः सोत्साहं समुपागताः सन्तः कुरुक्षेत्राभियानाय सज्जीभवन्ति; वदन्ति च—

त्रैलोक्यसृष्टिस्थितिनाशहेतवो हुताशनाद्याः स्थविरा अनीश्वराः।
असंयता अप्रणता बहुश्रुताः किन्नो विधातुं प्रभवन्ति विग्रहे॥

मन्त्री—अहो तेषां सर्व्वङ्कषो भूयान् गर्व्वो येन च भगवन्तमप्येवमास्कन्दन्ति ते।

कृष्णः—मन्त्रिन्! त्रिदशपतयः! अपि श्रुतं भवद्भिरेषां वचनं?

देवाः—भगवत्समाहितचेतसां नैवम्विधाः प्रसरन्ति वाचः।

मन्त्री—पुरा के नाम जानन्ति तादृशाः पाण्डवा एव नीचाशया नीचवृत्ताश्च संवृत्ता इति? यथा किल—

गन्धं समाघ्राय वनेषु दूराद् उड्डीय गृह्णन्ति मधु प्रसूनात्
नष्टे रसे प्रेष्य पदे प्रयान्ति तथैव पार्था मधुपा धरण्याम्।

कृष्णः—(स्वगतम्) अयि विवेकमूढाः! न केवलं पार्था अहमपि तादृश एव (प्रकाशं) भद्र! शङ्कर! ततस्ततः?

शङ्करः—ततोऽहं तीर्थभ्रमणव्याजेन तस्मात् स्थानादपसृत्य द्वारकामागच्छन्निवसिग्भिः सह भगवत्पादमूलमुपागतः।

कृष्णः—आर्य्य! सुवर्णादिभिरेनं परितोषयतु भवान्

(इति मन्त्रिमुखं प्रेक्षते)

मन्त्री—यथा ज्ञापयति देवः। (शङ्करेण सह प्रस्थितः)

कृष्णः—हन्त भो देवाः! तत्समराभियानाय कथं न त्वर्यते

देवाः—अथ किं किं करणीयमस्माभिरिति पृथक् पृथक् निर्दिश्यतां भवता।

कृष्णः—मेघान् मुञ्चतु मेघवाहन इमान् भूतांश्च भूताधिपः
सिन्धून् सिन्धुपतिर्विधिर्हुतभुजं स्कन्दः सुरानीकिनीः
स्वां स्वां शक्तिममी प्रवीरनिचयास्तूर्णं तथा बिभ्रताम्
आच्छन्नाश्च दिशो भवन्ति युगपदुद्दार्कतेजो यथा

देवाः—यथा ज्ञापयति भगवान् (प्रस्थिताः)

नारदः—(जनान्तिकं) अहमपि तावदिदानीमिमां वार्त्तां धर्मराजनन्दनायावेदयनन्दयामि (प्रकाशं) भगवन्! प्रणमामि। (प्रस्थितः)

कृष्णः—(परिभ्रमन् आकाशे लक्ष्यं बद्ध्वा)
रुद्रब्रह्मदिवस्पतिप्रभृतयो गच्छन्तु ते सङ्गरे
शूलाद्यस्त्रसमस्तशक्तिनिवहान् मुञ्चन्तु काङ्क्षन्ति ये
सूर्य्यतेजः प्रहतौजसां करधृतं शक्त्यादि तेषां सदा
पार्थैरुज्ज्वलं भवेन्मनसि मे कीदृक् सुखं स्यात्तदा।

(निष्क्रान्ता)

(क्रमशः)

# जातिबाधकविचारः ।

(पूर्वतोऽनुवृत्तः)

लेखकः—श्रीकालीपदतर्काचार्यः ।

न च तथापि पृथिवीत्वेन जलं न इत्यादिव्यधिकरणधर्म्मावच्छिन्न-प्रतियोगिताकभेदमुपादाय प्रतियोगितावच्छेदकव्यधिकरणभेदाटि-घटितकल्पे व्यभिचारो दुर्निवार एवेति वाच्यं प्रतियोग्यवृत्तिधर्म्मस्य प्रतियोगितावच्छेदकत्वानङ्गीकर्त्तृनयमाश्रित्यैव तादृशकल्पस्य अव-तारणात् । अथवा अवच्छेदकं प्रतियोगितासमानाधिकरणमेव विवक्षणीयम्, तेन प्रकृतभेदीयप्रतियोगिताया अवच्छेदकत्वस्य पृथिवीत्वे सत्त्वेऽपि तत्र प्रकृतप्रतियोगितासामानाधिकरण्याभावेन न क्षतिः । प्रतियोगितासामानाधिकरण्यञ्च अवच्छेदके स्वरूपेण प्रति-योगित्वाधिकरणे प्रतियोगितावच्छेदकताघटकसम्बन्धेन वृत्तित्वरूपं निर्व्वचनीयम्, तेन कालिकादिसम्बन्धेन निरुक्तभेदीयप्रतियोगिता-वच्छेदकानां पृथिवीत्वादीनां तादृशभेदप्रतियोगितासामानाधि-करण्येऽपि न व्यभिचारस्य शङ्कापि । प्रतियोगितावच्छेदकताघटक-समवायसम्बन्धेन प्रतियोगिनि जले पृथिवीत्वादेरभावादिति ।

परे तु समवायविशेषणताविशेषान्यतरसम्बन्धावच्छिन्नभेदप्रति-योगितावच्छेदकत्वप्रवेशे अन्यतरत्वस्य भेदद्वयावच्छिन्नप्रतियोगिताक-भेदरूपतया गौरवात् तादृशभेदप्रतियोगितानिरूपितसमवायसम्बन्धा-वच्छिन्नावच्छेदकताशून्यसमवेतभिन्नत्वमेवाव्यापकत्वं प्रकृते व्याचक्षते, तथाहि उपेक्षात्वशरीरत्वादीनां स्वमते चाक्षुषत्वपृथिवीत्वादिसमाना-धिकरणभेदीयप्रतियोगितानिरूपितसमवायसम्बन्धावच्छिन्नावच्छेदकता-शून्यत्वेऽपि समवेतत्वविरहात् विशिष्टभेदस्तौल्येन न स्वरूपासिद्धिः ।

भूतत्वमूर्त्तत्वादौ च समवेतत्वसत्त्वेऽपि परस्परसमानाधिकरणभेदीय-प्रतियोगितानिरूपित--समवाय--सम्बन्धावच्छिन्नावच्छेदकतावत्त्वेन विशेषणाभावप्रयुक्तविशिष्टभेदस्य सुघटतया न क्षतिः। अत एव अनुमितिग्रन्थे गदाधरः—"विशिष्टभेदस्य पक्षस्य समवेतत्वे असमवेतत्वे च अक्षतत्वा"दिति व्याचष्ट।

न च तादृशावच्छेदकताशून्ययत्किञ्चित्समवेतसत्त्वादिप्रतियोगिकभेदस्य पृथिवीत्वादौ सत्त्वेन व्यभिचारतादवस्थ्यं तादृशावच्छेदकताशून्यसमवेतं यत् यत् तत्तत् प्रतियोगिकभेदकूटस्य तादृशसमवेतसामान्यभेदस्य वा प्रवेशेन तदाशङ्काया अभावात्, पृथिवीत्वादौ न तादृशभेदकूटं सामान्यभेदो वेति।

व्याप्यजातौ व्यापकजातिनिरूपितसाङ्कर्यस्य व्यभिचारवारणाय स्वव्यभिचारित्वदलम्, तेन घटत्वादौ पृथिवीत्वादिसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वस्य पृथिवीत्वादिसामानाधिकरण्यस्य च अक्षतत्वेऽपि पृथिवीत्वाद्यभाववद्वृत्तित्वाभावान्न क्षतिः। यदि च घटत्वादेः पार्थिवतैजसघटादिसाधारणतया घटत्वादिकं पृथिवीत्वादिव्यभिचरितमपि निर्बाधमेवाङ्गीकर्त्तव्यम्, अन्यथा "पृथिवीत्वतैजसत्वादिना साङ्कर्यात् घटत्वं यदि नाना" इति जगदीशलिखनासङ्गतेरिति समनुसन्धीयते तथापि यावत्पार्थिवघटादिवृत्तेरेकस्य घटत्वादेः यावत्तैजसघटादिवृत्तेश्चापरस्य घटत्वादेर्जातित्वस्वीकारस्य तत्रापि मते लाघवानुरोधेन स्वीकृततया तत्र तत्रैव व्यभिचारवारणाय तदुपादानस्य करणीयत्वादिति। किञ्च तद्दलानुपादाने सत्तादिनिरूपितसाङ्कर्यस्य पृथिवीत्वादौ व्यभिचारो नितरामेवानिवार्य्यतां धत्ते।

प्रकृतव्यभिचारित्वघटकीभूतोऽभावः समवायसम्बन्धावच्छिन्नप्रतियोगितानिरूपको वक्तव्यः, अन्यथा संयोगादिसम्बन्धावच्छिन्नप्रतियोगिताकपृथिवीत्वाद्यभाववति घटादौ घटत्वादेर्वर्त्तमानतया व्यभिचारस्य दुरपनेयत्वात्। सम्बन्धनिवेशे च समवायसम्बन्धावच्छिन्नप्रतियोगिताक-

पृथिवीत्वाभाववान् न घटादिः किन्तु जलादिरेव तन्निरूपितवृत्तित्वञ्च न घटत्वादाविति न च्युतिः।

प्रतियोगितावच्छेदकधर्मविधया च स्ववृत्तिद्वयावृत्तिधर्ममात्रं प्रवेशनीयं, तेन पटवृत्तित्वविशिष्टपृथिवीत्वपटवृत्तित्वविशिष्टतद्व्यक्ति-विरहादिकमादाय नोक्तदोषस्तदवस्थः। प्रथमाभावस्य द्वयावृत्ति-पृथिवीत्वत्वेनावच्छिन्नाया: प्रतियोगिताया: द्वितीयाभावस्य च द्वया-वृत्तिस्ववृत्तितद्व्यक्तित्वेनावच्छिन्नाया: प्रतियोगिताया: निरूपकत्वेऽपि तदितरपटवृत्तित्ववैशिष्ट्ये नाप्यवच्छिन्नाया: प्रतियोगिताया निरूपकत्वेन स्ववृत्तिद्वयावृत्तिमात्रावच्छिन्नप्रतियोगितानिरूपकत्वविरहात्। पृथिवीत्वं नास्ति तद्व्यक्तिर्नास्ति इत्यादीनामभावानामेव तादृशतादृशधर्ममात्रा-वच्छिन्नप्रतियोगिताकत्वेन तद्वति जलादौ घटत्वादेरवृत्त्या व्याप्यजातौ व्यापकजातिनिरूपितसाङ्कर्यस्य न व्यभिचारः। द्वयावृत्तित्वञ्च स्वप्रति-योगिवृत्तित्वस्वानुयोगिवृत्तित्वैतदुभयसम्बन्धेन भेदविशिष्टान्यत्वं सम्बन्धघटकवृत्तित्वञ्च विशेषणताविशेषसम्बन्धेन प्रकृते वक्तव्यम्, तेन पृथिवीत्वत्वपृथिवीत्वगततद्व्यक्तित्वादेरपि कालिकादिसम्बन्धेन यत्-किञ्चिद्घटादिभेदप्रतियोगिघटादिवृत्तित्वतदनुयोगिपृथिवीत्वादिवृत्ति-त्वैतदुभयसम्बन्धेन भेदविशिष्टतासम्भवेऽपि न भेदविशिष्टान्यत्वाप्रसिद्धि-निबन्धना च्युतिः पदं कुरुते। वस्तुतस्तु संसर्गावच्छिन्नावच्छेदकता-द्वयानिरूपकत्वमेव प्रतियोगितायां निवेश्य व्यभिचारवारणं सुकरमिति विभावनीयम्। न चैवं भूतत्वमूर्त्तत्वयोः साङ्कर्यमसिद्धमिति स्वमते भूतत्वमूर्त्तत्वयोः आत्मावृत्तिविशेषगुणनिकृष्टपरिमाणरूपतया तत्तद-भावानां आत्मावृत्तिविशेषगुणो नास्तीत्यादिरूपाणामवच्छेदकत्वद्वय-निरूपकप्रतियोगिताकतया द्वयावृत्तिधर्ममात्रानवच्छिन्नप्रतियोगिताक-तया च स्वपदेनान्यतरस्य उपादातुमशक्यत्वात् इति वाच्यम् तत्र द्वया-वृत्तिस्ववृत्तिधर्ममात्रावच्छिन्नाभावस्य भूतत्वादिप्रतियोगिकस्य अलाभे-ऽपि वस्तुतस्तु-कल्पोक्तस्य अवच्छेदकताद्वयानिरूपकप्रतियोगिताकस्य

अभावस्य आत्मावृत्तिविशेषगुणत्ववान् नास्ति निकृष्टपरिमाणत्ववान् नास्तीत्यादिप्रतीत्या सिद्धेरप्रत्यूहत्वात्।

स्वाभाववत्त्वञ्च विशेषणताविशेषसम्बन्धेन स्वाभावाधिकरणत्वं, तेन कालिकादिसम्बन्धेन स्वाभाववत्त्वमादाय घटत्वादौ न पृथिवीत्वादि साङ्कर्य्यव्यभिचारः। जन्यमात्रस्य कालोपाधित्वानङ्गीकर्त्तृनये तु सत्ताभावस्य कालिकसम्बन्धेनाधिकरणे महाकाले वृत्तित्ववति द्रव्ये सत्तानिरूपितसाङ्कर्य्यव्यभिचारवारणाय तदुपादेयम्। अथवा स्वाभाववद्वृत्तित्वमित्यस्य स्वाधिकरणभिन्नवृत्तित्वमर्थः। तेन घटपटादौ समवायेन पृथिवीत्वाद्यधिकरणतया पृथिवीत्वाद्यवच्छिन्नप्रतियोगिताक भेदशून्यत्वेन तद्वृत्तिघटत्वपटत्वादौ न साङ्कर्य्यव्यभिचारः। अ स्वाधिकरणगर्भप्रविष्टायामाधेयतायां संसर्गावच्छिन्नावच्छेदकताद्य निरूपकत्वं प्रवेशनीयम्; तेन पूर्व्ववत् पटवृत्तित्वविशिष्टपृथिवीत्वा धिकरणं न इत्यादिभेदमादाय न व्यभिचारः। अथवा स्वनिष्ठाधेयता निरूपिताधिकरणत्वावच्छिन्नसामान्यभेदानुधावने न विशेषेण तन्निवेश सुतरामावश्यकता। अथ अभावाधिकरणकाभवास्य अधिकरणस्वरूप नये घटादिवृत्तिपृथिवीत्वादिभेदस्वरूपस्य समवायसम्बन्धावच्छिन्न पृथिवीत्वाद्यभावस्य अधिकरणे घटादौ घटत्वादेर्वृत्त्या स्वव्यभिचारित दलनिवेशेऽपि व्याप्यजातौ व्यापकजातिसाङ्कर्य्यस्य व्यभिचारापत्ति रनिवार्य्या इति चेन्न, स्वाभाववद्वृत्तित्वस्य व्यभिचारपदार्थत्वाङ्गीकार समवायसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नाधेयतानिरूपित धिकरणतावद्वृत्तित्वस्य निष्कृष्टार्थत्वात् पृथिवीत्वाभावस्य घटादि वृत्तिपृथिवीत्वभेदस्वरूपत्वेऽपि न पृथिवीत्वाभावत्वेन रूपेण तस्य घटादि वृत्तित्वं परं पृथिवीत्वभेदत्वेनैव रूपेण पृथिवीत्वाभावत्वावच्छिन्न पृथिवीत्वाधिकरणत्वेन सह विरोधितया तादृशस्य तत्र वृत्त्यसम्भवात्।

अथ व्यभिचारघटकं वृत्तित्वं केन सम्बन्धेन विशेषणीयं? यदि समवायसम्बन्धेन तदा उपेक्षात्वशरीरत्वादीनां औपाधिकसामान्य

मते समवायेन सम्बन्धेन वृत्तित्वविवक्षात् साङ्कर्य्यावसादेन नैव तव शक्यो जातित्वबाधः सम्पादयितुम्, यदि च विशेषणताविशेषसम्बन्धेन तदा भूतत्वमूर्त्तत्वयोः परस्परं साङ्कर्य्यव्याघातः, तयोर्जातित्वास्वीकर्त्तृनये गुणरूपतया स्वरूपेण वृत्तित्वस्य सुतरामभ्युपगन्तुमशक्यत्वात्। व्यापकविरुद्धजातिषु व्यभिचारवारणाय दलान्तरद्वयनैरर्थक्याच्च इति चेन्न स्मर्य्यतामत्रापि निरुक्ताव्यापकत्वघटकीभूतावच्छेदकताघटकः सम्बन्धः, तथाहि यथा तत्र दैशिकविशेषणतासमवायान्यतरसम्बन्धावच्छिन्नावच्छेदकता निविष्टा तथा अत्रापि तादृशान्यतरसम्बन्धावच्छिन्ना वृत्तिता निविशत इति न क्षतिः।

अथवा स्वाभावाधिकरणनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तिताशून्यसमवेतभिन्नत्वमेवात्रापि पूर्व्वकल्पदिशा अर्थो वाच्यः। तेन उपेक्षात्वशरीरत्वप्रभृतीनां समवायसम्बन्धावच्छिन्नतादृशवृत्तित्वविरहेऽपि समवेतत्वासत्त्वेन भूतत्वमूर्त्तत्वादेश्च समवेतत्वसत्त्वेऽपि स्वाभावाधिकरणनिरूपितसमवायसम्बान्धावच्छिन्नवृत्तिताशून्यत्वविरहेण नासिद्धिः। सर्व्वजनानुभवसिद्धो हि नीलघटत्वाद्यवच्छिन्नप्रतियोगिताको भेदः पीतघटादौ नीलपटादौ च, पीतघटे प्रतियोगितावच्छेदकनीलत्वाभावेन, नीलपटे च घटत्वाभावेन, तद्वदत्रापीत्यदोषः। विरुद्धजातीनां घटत्वपटत्वादीनां परस्परसाङ्कर्य्यापत्त्या व्यभिचारवारणाय स्वसामानाधिकरण्यदलम्। तेन घटत्वादेः पटत्वाद्यव्यापकत्वव्यभिचारित्वोभयवत्त्वेऽपि पटत्वादिसामानाधिकरण्यविरहेण न साङ्कर्य्यापत्तिः। तत्र स्वाधिकरणत्वं समवायसम्बन्धेन वक्तव्यम् अन्यथा घटत्वादेरपि कालिकेन सम्बन्धेन पटत्वाद्यधिकरणे घटादौ वर्त्तमानतया अभिप्रेतासिद्धेः। (क्रमशः)

---

# दुर्गेशनन्दिनी

लेखकः—श्री.........

## सप्तदशः परिच्छेदः

### अन्तिमः कालः

क्षणान्तरे कश्चिद् राजपुरुषः सत्वरं जगत्सिंहाधिष्ठितं कारागृहमागत्य समुवाच—कुमार, समायातो नवाबस्य मरणसमयः। स खलु भवन्तमाकारयति।

युवराजः सञ्जातविस्मयोऽवादीत्···कथमेतत्?

राजपुरुषः समभाषत—अवरोधप्रविष्टः प्रभुर्नवाबं निहत्य पलायितः। न खल्वधुनापि स त्यक्तजीवितः। परं न विद्यते तत्र विलम्बः। सत्वरमागम्यताम्। न चेद्दर्शनं न भविष्यति।

राजपुत्रः पप्रच्छ—किं प्रयोजनमिदानीं मम दर्शनेन?

दूतः प्रत्यभाषत—न जाने। अहं वार्त्तावह एव।

कुमारः सह दूतेनान्तःपुरं प्रविश्य अवलोकयामास तं निर्व्वाणप्रायजीवनप्रदीपं कतलुखानम्। न विद्यते विलम्बः प्राणत्यागस्य। समन्तात् वर्त्तन्ते ओसमान, आयेषा, कतलुखानस्य बालाः पुत्राः, पत्न्यः भोगिन्यः दास्यः, अमात्यादयश्च। उत्थितश्च रोदनरवः। प्रायः सर्व्वे एव उच्चैः क्रन्दन्ति। शिशवः कारणमज्ञात्वैव रुदन्ति। आयेषा तु उच्चैर्न विलपति। प्लावितं तस्या वदनमश्रुधाराभिः। सा पितुः मस्तकं उत्सङ्गे धारयन्ती निःशब्दं वर्त्तते। दृष्टा जगत्सिंहेन सा स्थिरा, गम्भीरा, निःस्पन्दा मूर्त्तिः। ख्वाजा ईशो नाम कश्चिदमात्यः कृतप्रवेशमेव कुमारं करे धृत्वा कतलुखानमुपनिनाय। वधिरमिव उच्चैः सम्भाष्य च तमुवाच युवराजो जगत्सिंहः समुपागतः।

कतलुखानः क्षीणस्वरेणोवाच—अहं वैरी, म्रिये ; क्रोधो द्वेषश्च त्यज्यताम् ।

जगत्सिंहः समधिगम्य प्रोवाच—ईदृशे समये त्यज्यते मया सर्वमेव ।

कतलुखानः पुनरपि तादृशेन स्वरेणाभाषत—याचे, प्रतिपद्यताम् ।

जगत्सिंहः पप्रच्छ—किं मया प्रतिपत्तव्यम् ?

कतलुखानोऽपि भूयो बभाषे—सर्व्वे बालकाः युद्धेन—महती तृष्णा ।

आयेषा मुखे सशर्करं जलं ददौ ।

"अलं युद्धेन—सन्धि"रित्युक्त्वा कतलुखानो नीरवतां भेजे । जगत्सिंहः किमपि न प्रत्यभाषत । कतलुखानश्च उत्तरप्रत्याशया तन्मुखं प्रति दत्तदृष्टिरवर्त्तत । उत्तरमनासाद्य च कृच्छ्रेणोवाच—किं न स्वीकृतम् ?

युवराजोऽभाषत—पाठानैः स्वीकृते दिल्लीश्वरप्रभुत्वे अहं सन्धये प्रार्थयिष्ये इति प्रतिश्रूयते ।

कतलुखानः पुनरपि अर्द्धस्फुटेन स्वरेणोवाच—उड़िष्या ?

राजपुत्रः समभिज्ञायाभाषत—अनुष्ठिते सन्धिकार्य्येणि भवतः पुत्रा उड़िष्यातो न च्युता भविष्यन्ति ।

प्रदीप्ता बभूव कतलुखानस्य मृत्युक्लेशनिपीड़िता मुखकान्तिः ।

मुमूर्षुः समभाषत—बन्धनान्मुक्तो भवान् । जगदीश्वरो मङ्गलं विदधातु ।

गमनोद्यते जगत्सिंहे आयेषा मुखमवनमय्य पितरं किमप्युवाच । कतलुखानश्च खाजा ईशं प्रति दृष्टिं दत्त्वा पुनरपि प्रतिगमनकारिणं राजपुत्रं निरीक्षाञ्चक्रे ।

खाजा ईशश्च राजपुत्रं समुवाच—मन्ये, वर्त्तते भवता सह वचनान्तरम् ।

राजपुत्रः प्रत्यागतः । कतलुखानश्च उवाच 'कर्णं देहि' ।

राजपुत्रेण ज्ञात्वा मुमूर्षोः समीपतरे प्रदेशे अवस्थाय तस्य मुख-समीपे कर्णोऽवनमितः।

कतलुखानश्च अस्फुटतरेण स्वरेण समभाषत—वीर—क्षणं स्तब्धः स्थित्वावोचत्—वीरेन्द्रसिंहस्य त्वषा! आयेषा पुनरपि मुखे जलं ददौ।

"वीरेन्द्रसिंहस्य कन्या"

दष्ट इव राजपुत्रो वृश्चिकेन। चकित इव ऋज्वायतः सन् स कियद्दूरे तस्थौ। कतलुखानोऽवादीत्—पितृहीना—अहं पापिष्ठः—अहो त्वषा।

आयेषा पुनः पुनर्मुखे पानीयं सिषेच। परं दुष्करं बभूव पुन-र्वाक्यस्फुरणम्। दीर्घं निश्वस्य सोऽवादीत्—दारुणः खलु तापसन्ताप:—साध्वी—त्वया अवेक्ष्यताम्।

राजपुत्रः पप्रच्छ—किम्? कतलुखानस्य कर्णे एष प्रश्नो मेघ-गर्जनवत् प्रतीतः। सोवादीत्—इयं कन्या इव पवित्रा—त्वम्—अहो त्वषा—एष गच्छामि आयेषे।

भूयो वाक्यं नासरत्। सञ्जातः सामर्थ्यातीतः परिश्रमः श्रमातिरेकात् दुर्बलं मस्तकं भूमौ लुठितम्। दुहितुर्नाम उच्चा-रयन्नेव कतलुखानः पञ्चत्वं गतः। (क्रमशः)

---

योगीन्द्रनाथविद्याचुञ्चु विरचितः

## रासविहारः ।

काशप्रकाशविशदाम्बररम्यलक्ष्मीः कुन्दप्रसूनदशनैर्विलसत्स्मिताभा ।
संसक्तभृङ्गनलिनायतनेत्रकान्तिर्भूमौ शरन्नववधूः समुपागतेयम् ॥ १

शेफालिकाकुसुमसौरभलोभनीया
ज्योत्स्नोत्तरीयविलसत्कमनीयकान्तिः ।
नारीव यौवनवती सरसस्वभावा
लोकान् विमोहयति सा व्रजमण्डलेऽस्मिन् ॥ २

तुलारूढे सूर्येऽस्तकरचयोद्भासितदिशि
सुधारश्मौ याति गगनतलमुच्चैर्व्रजभुवाम् ।
प्रदत्तो गोपीभ्यो मृदुमधुरवेणुः सुललितं
कुरङ्गाक्षीकामानलबहुलसंवर्द्धनकरम् ॥ ३

निशायां कालिन्द्याः क्वणितमुपकूलादुपगतं
निपीयैता गोप्यो मधुरमुरलीध्वानमतुलम् ।
उपेन्द्रस्य स्नीयान् दयिततनयानुत्सुकतमा
उपेक्ष्यैनं द्रष्टुं निजनिजगृहान्निर्ययुरहो ॥ ४

न तासां दोषायाच्युतगतमतीनां कुलभुवां
सुतस्नेहच्छेदः प्रियतमपतौ रागविरहः ।
तथा नारीचेतःसुलभभयलज्जाविमुखता
विकाराश्चित्तस्था न खलु हरिलाभाय कुशलाः ॥ ५

अरण्ये यं लब्धुं कृतपरिकरा योगनिरता
स्तपस्त्वा तेषां सफलमनसः केचन न वा
अहो पुण्यश्लोकाः कुलयुवतयोऽस्यां व्रजभुवि
स एवासां प्रेमामृतजलनिधौ मग्नहृदयः ॥ ६

अपि त्वं जागर्षीत्यतिमृदुवचाः काचन तथा
स्वपन्तं स्वं नाथं सभयचकितं प्राह ललना।
पिबन्तं काचिद्वा शिशुमविगणय्य स्तनमुखं
तदीयास्यात् हृत्वा द्रुततरगतिं क्षणमगमत्॥ ७

कयाचिद्वा धेनूरकृतपरिचर्य्याश्चलदृशा
विहायैव प्रेम्णा त्वरितगतया धीरमनसा।
प्रतस्थे साटोपं सुरभिदि समाधाय हृदयं
न बाधा बाधन्ते प्रणयिहृदयं प्रेमतरलम्॥ ८

विधृत्यैकं व्यग्रा वलयमधिहस्तं चलमतिः
क्वणन्तं मञ्जीरं कनकमयमेकं पदतले।
समुद्भ्रान्ता काचित् सपदि मणिकाञ्चीं धृतवती
गले द्रष्टुं नाथं झटिति निरगच्छत् कुलवधूः॥ ९

न भीश्चित्ते तासां तिमिरपटलादम्बुदभवा-
च्च गर्ज्जात् सम्भ्रान्तिः क्वचिदपि न वा शङ्कितमहो।
तथारण्याज्जीवात् पथि विचलतस्तन्मयहृदां
कृपानाथे नाथे भवति सदये किं भयमिह॥ १०

यदासां नो जातं मनसि मदमानी कृपणता
त्रपा वा कापट्यं भयविकृतशाठ्यं हरिधियाम्।
तदेतास्तं बन्धुं परमपुरुषं प्रेमनिगडैः
समर्था नो चेत् क्व स्थिय इह भवे कुत्र च हरिः॥ ११

ततः श्रीराधापि स्मृतमधुरवंशीध्वनिरसौ
मनोभूप्रक्षिप्तैः कुसुमविशिखैः पीड़िततनुः।
सखीवृन्दैः सार्द्धं परिहितसुनीलांशुकवरा
ययौ कुञ्जं रम्यं रसमयरसास्वादमुदिता॥ १२

तमःप्रीत्या गोप्यः स्खलितचरणाः सम्भ्रमवशात्
समाश्रित्य च्छायां घनविटपिनामप्यतिभिया।

गुरुभ्यो गच्छन्त्यो मिहिरदुहितुस्तीरसविधं
निकुञ्जं प्रापुस्ताः प्रियतमसनाथं कुसुमितम् ॥ १३
अपश्यंस्तास्तस्मिन् निपतितकठोराच्छगभृतः
सुधाकल्पानल्पांशुचिकरघटा शान्तिनिलये।
समन्तात् पुष्पेभ्यो हृतमधुरगन्धः प्रवहति
समीरः सम्भोग्यो मनसिजमदोद्दीपन इति ॥ १४
मुहुर्गुञ्जद्भृङ्गावलिललितगुञ्जैः सह पिकाः
समुखैः कूजन्ति श्रुतिसुभगमारात् कलकलम्।
कलापी पुच्छाग्रं प्रतिविटपिशाखं विकिरति
प्रनृत्यन् केकाभिर्वनभुवमलङ्कृत्य शतशः ॥ १५
ततस्ता निर्गुण्ठीकुसुमसुरभिं कुन्दपवनं
समाघ्राय प्रीत्या नलिनकुमुदासङ्गसुभगम्।
कलामाला पुष्टावयवमुडुनाथं दिविषदं
समीक्ष्य द्राक् चित्ते स्मरविकृतिभावं हि पुपुषुः ॥ १६
पतिप्राणो गोपीजन इह कथं स्वं प्रियतमं
विहायैवासाधुं श्रयति कुलटादुष्टसरणीं।
जगत्स्वामी योऽसौ भुवनमयमूर्त्तिर्हरिरहो
नियुङ्क्ते यत् कर्त्तुं तदिह नहि दोषाय चरितम् ॥ १७
ततस्ताः प्रोवाचाखिलपतिहरिः कौतुकपरो
बुभुत्सुर्हृद्भावं मृदुमधुरवाचा किमिति भोः।
निशीथेऽस्मिन् घोरे भयबहुलमार्गेण सहसा
समायातास्त्यक्त्वा स्वजनपतिपुत्रान् गुरुजनान् ॥ १८
पतिर्दैवः स्त्रीणां जगति पतिसेवैव परमं
व्रतं धर्म्मः श्रेष्ठः प्रथितमिह सत्यादियुगतः।
कथं तद्भ्रष्टाः स्थे न्द्रियसुखकृते तत्तु सुलभं
फलैश्चातुर्व्वर्गैरपि भवथ जुष्टाः स्वनिलये ॥ १९

अथासां काचित् तं वचननिपुणाचष्ट चतुरा
सुमन्दं मन्दाक्षी प्रियतम विचित्रा तव कथा ।
त्वयं बद्धा रज्ज्वा बहुलगुणया रागपरया
समाकर्षन्नित्यं वदसि किमहो प्रस्फुटमिति ॥ २०
गुणं कं प्रारोप्य त्वमिह मुरलीं नाथ धमसि
अपीय ध्वानं द्राक् हृदयमभवत् व्याकुलतरम् ।
अथाक्लिश्नौदास्यं विरतिपरता कर्मसु गृहे
पतिप्रेम्णि स्नेहे तनयसुहृदि रागविरहः ॥ २१
न जानीमो हेतुं वयमकृतबोधा व्रजपते
त्वदीयो वेणुर्नो जनयतितरामीदृशदशाम् ।
दिवान्या देवार्चा नहि हृदयपीठे तव तनुं
निवेश्य ध्यायामो निशि निशि विनिद्राक्षियुगलम् ॥ २२
अधर्म्मं धर्म्मं वा यदिह चरितं कर्म्म मनसा
सबोधं वाऽबोधं विकृतमतिभिर्वापि वपुषा ।
समुच्चं नीचं वा परवशतया यच्च वचसा
तदस्माभिर्न्यस्तं त्वयि भुवननाथे सकृदिदम् ॥ २३
न विद्मः किं पापं कुकृतिजनकं कार्य्यमपि वा
तवैवैतत् पादाम्बुजयुगलमात्रं सुविदितम् ।
न वा देवप्रीतिस्त्रिदिववसतिर्नन्दनवनं
न वा रोचन्ते नोऽक्षयमपि परं ब्रह्मभुवनम् ॥ २४
न याचन्ते चन्द्रध्रुवमिहिरलोकाः स्थिरतरा
न राज्यं त्रैलोक्ये धनपतिधनं वापि निधयः ।
न वाकाङ्क्षा पुत्रे सुहृदि दयिते नश्वरसुखे
न चित्तं रूपे वा यशसि वपुषि क्लेशनिलये ॥ २५
सुखं यत् तत् त्वं भोस्त्वदितरदहो यत् परिहृतं
धनं त्वं कीर्त्तिस्त्वं त्वमिह परमोऽस्मत्परनिधिः ।

त्वमेवैकं ध्यानं त्वमिह भुवने नाथ शरणं
भयं त्वं त्राता त्वं त्वयि सकरुणे किं भयमिह ॥ २६
त्रिवर्गो मुक्तिश्च त्वयि यदुपते राजति परं
फलं साक्षान्मूर्त्तं त्वमिह भुवने सर्व्वतपसाम् ।
न चार्थित्वं त्वन्यद् भवति भवनाथे परमियं
दृढ़ास्माकं भक्तिर्भवतु भवदीये पदयुगे ॥ २७
ततस्ताभिर्भक्त्या प्रणयगगनोद्दीप्तशशिगु-
र्वधूभिः सम्प्रोक्तः स्मितमयमरीचीः समकिरत् ।
उवाच प्रीत्या च प्रथमरससिन्धुः सविनयं
रहः सख्यो यूयं परमनिधयो दुर्लभतमाः ॥ २८
हृदि न्यस्ता प्रेम्णा मम कुसुममाला सुरचिता
गले हारा मुक्ताप्रकरकलिताः शीर्षमणयः ।
विना पण्यैः क्रीतः सपदि भवतीभिश्चिरमहं
युगान्ते न स्यां वोऽमितगुणगणभ्रष्टहृदयः ॥ २९
न मे तादृक् सौम्यप्रकृतिगुणराशिः कुलभुवो
भवामीत्थं यद्वः प्रणयभयरागास्पदमहम् ।
तथाप्येवं यूयं यदिह मयि रागं कलयथ
स्वकीया युष्माकं गुरुगुणचया हेतुरिह तत् ॥ ३०
अनिन्द्यं वो रूपं त्रिभुवनदुरापं खलु नरैः
स्थिरत्वं प्रापन्ना तड़िदिव भुवि भ्रान्तिजनिका ।
तनुः स्निग्धोद्दीप्ता शशधरकलावन्नयनयोः
परां प्रीतिं धत्ते जनयति च मोहं भुवि नृणाम् ॥ ३१
अपाङ्गस्था भङ्गिर्मदनशरशङ्कां जनयति
भ्रुवौ सज्यौ चापौ प्लवकलसयुग्मं खलु कुचौ ।
नितम्बौ मातङ्गप्रवरगुरुकुम्भौ हततनोः
सदूरू द्वे चैते निहितविजयस्तम्भयुगलम् ॥ ३२

विकाशैः केशानां दमयथ पयोदोद्धतमदं
पदस्थैर्मञ्जीरैर्नमयथ तथा हंसविरुतं ।
नखैरङ्गुल्यग्रे कृतवसतिभिः शीतगुरुचिं
विनिन्दन्त्यो यूयं विचरथ पृथिव्यां स्थिरजयाः ॥ ३
निरीक्ष्यासौ तुङ्गस्तनपरिसरं वो हिमगिरि-
र्विषादादश्रूणि प्रतिदिनममन्दं विकिरति ।
जितात्मायं कट्या मृगपतिररण्यं हि गतवान्
पिकोऽपि स्वं रावं लघयति हि कूच्चारणवशात् ॥ ३
गुणानुच्चैर्भावान् सरलचरितान् स्वार्थरहिता-
नमन्तो नो वक्तुं भवति कुशलः सर्ववदनैः ।
अहं क्षुद्रात् क्षुद्रः किमिति भवतीनां समुदयं
सदाचारं ख्यातुं कथमपि समर्थोऽत्र भुवने ॥ ३५
गुणैः सर्वैर्यूयं भवथ कृतभूषाः सुचरिताः
अहं तैस्तैर्हीनाः प्रकृतिसरला यूयमहह ।
स्वभावात् वक्रोऽहं कपटचरितश्चञ्चलमतिः
प्रकामं रूपाढ्या अहमतिकुरूपो व्यसनभाक् ॥ ३६
समीचीना प्रीतिः कथमिव मम स्याद् व्रजभुवाम्
तमालस्कन्धे किं कनकलतिका राजतितराम् ।
मयूराणां मध्ये प्रणयरसविन्दुर्न हि पते-
न्नवा भेको भोक्तुं प्रभवति नलिन्या मधुकणान् ॥ ३७
ततस्तासामुच्चैर्हसितविकसद्दन्तकिरणै-
र्निकुञ्जे चन्द्राभाभवदतितरां खण्डिततमा ।
सरोजाक्षी काचित् मधुरकलकण्ठा रसमयं
स्फुरद्गण्डावादीन्मृदु मृदु वचो वामनयना ॥ ३८
वचोभङ्ग्या यद् यन्मधुमुररिपो त्वं कथितवान्
स्तुतिव्याजान्नारीस्वरणशरणा बोधरहिताः ।

कथं तास्त्वद्वाचां प्रतिवचनदाने सुनिपुणा
भवेयुर्नैसर्गात् सरलपथसञ्चारनिरताः ॥ ३९
यथार्थं रूपं नस्तनुषु यदि तिष्ठेत् किमपि भो
स्त्वया दृष्टं चाक्ष्णोः स तु तव गुणानां परिचयः।
स्वरोऽस्माकं तावज्जनयति तथा ते श्रुतिसुखं
श्रुतौ तत्ते धत्तो गुणविभवमग्र्यं व्रजपते ॥ ४०
सखे यद्यज्जातं सरलमतिता रागविरहः
प्रशान्तत्वं भक्तिः प्रणयपरता साधुचरितम्।
त्वदीयात् सान्निध्यात् प्रतिफलितमेतद् वपुषि नो
यथा तत्तीरस्थं सरसि विमले पुष्पितवनम् ॥ ४१
त्वया कृता या स्तुतिरस्मदीया चाङ्गेषु सर्वेष्विह वर्णना नः।
स्वभाववृत्तादिषु गौरवं यत् सर्वं तवैतत् खलु विश्वमूर्त्ते ॥ ४२
त्वं निर्गुणो वयमहो सगुणाः प्रकृत्या
सत्यं प्रभो निगदितं किमु तत्र वच्मि। *
अकालयोग्यत्वसहा कथा या
स्वीकर्त्तुमीशो नहि को भवेऽस्मिन् ॥ ४३ (?)
एकान्तसङ्गतमिदं ननु युक्तिहीनं
वाक्यं परन्तु ललनाजनलोभनीयम्।
उक्तं त्वया यदधुना नहि बुध्यते किं
व्यङ्गोक्तिकौतुकमयं परिहासवाक्यम् ॥ ४४
तापिञ्छं पारिजातं गणयसि भुजगीं पुष्पमालां मनोज्ञां
काचं रत्नं महार्घ्यं किमिति तव मतिर्भ्रान्तिमार्गप्रवृत्ता।
किं वा यो यस्य हृद्यः प्रणयजलनिधौ मग्नकायः प्रसन्नः
तस्यासौ कोऽपि दिव्योऽसुलभनिधिवरः पूर्णचन्द्रायमाणः ॥ ४५

---

* अस्मिन् श्लोके प्रथमद्वितीयपादौ वसन्ततिलकेन तृतीयपाद उपेन्द्रवज्रया चतुर्थपादश्च इन्द्रवज्रया रचिता इति अतः कथञ्चिदुपजातिरेषा इति मतम्।

अयं देवो भास्वान् विदिववसतिर्ध्वान्तकरिहा
प्रतापैरालोकैः प्रतिदिनमिदं पाति भुवनं ।
धरासंस्थां पङ्कोद्भवकमलिनीं प्रेमसलिलैः
निंषिञ्चन्वासौ प्रथयति निजां प्रेमपरतां ॥ ४६
महात्मासौ चन्द्रो वियति विचरन् देवचरितो
जगज्जीवान् सम्प्रीणयति निशि शीतैः करचयैः ।
लतामात्रां प्रेम्णानयति स हि तोषं कुसुदिनीं
न पात्रापात्रत्वे गणयति पविता प्रणयिता ॥ ४७
तथा नाथ त्वं भो निजगुणगरिम्णा वितरसि
प्रकामं मूढाभ्यसरणशरणाभ्यः सकरुणं ।
परां प्रीतिं स्नेहं सुरपतिदुरापं पदमिदं
तदेकं कारुण्यं जयति तव दुःस्थं प्रति जनम् ॥ ४८
गतिस्त्वं प्रीतिस्त्वं जगति नियतिस्त्वं जनिमतां
मतिर्भक्तिः क्वान्तिस्त्वमिह ननु मूर्त्तिस्त्रिजगताम् ।
पतिस्त्वं शक्तिस्त्वं रतिरपि परा मुक्तिपदवी
त्वदन्यज्जानीमो नहि किमपि विश्वेश्वर भुवि ॥
तसुजर्त्ता भर्त्ता भुवनमयहर्त्ता त्वमसि भो
जगत्कर्त्ता मर्त्त्यान् नियमयसि धर्म्मे शुभफले ।
निराकर्त्ता धर्त्ता परमपददाता त्वमसि नः
प्रसन्नः श्रीभर्त्तर्भवकुलवधूनां प्रियतमः ॥ ५० (क्रमशः)

श्रीहरिपदभारतीमहाशयेन प्रकाशितं ।

---

# समालोचनम् ।

## यजुःसंस्कारपद्धतिः ।

लेखकः—श्रीआशुतोषस्मृतितीर्थः ।

श्रीगणपतिसरकारविद्यारत्नेन ( एम्, आर्, ए, एस् ) तथा श्रीआशुतोषतर्कतीर्थेन चानूदिता सम्पादिता च। कलिकाता-बेलियाघाटापल्लीतः श्रीनृत्यगोपालसरकारेण प्रकाशं गमिता। मूल्यं रूप्यकमात्रम् ।

दृष्टाऽस्माभिः पशुपतिकृतयजुर्वेदानुसारिसंस्कारदशकपद्धतिग्रन्थस्य नवीनसंस्करणरूपेयं बङ्गाक्षरोपनिबद्धा पुस्तिका। साम्प्रतमुपलभ्यमानानि मुद्रितपद्धतिपुस्तकानि प्रमादबहुलानीति समालोच्यैवैतां पुस्तिकां साग्रहं सामोदञ्च समालोचितास्माभिराशंसितं च यया चिरमनुभूतः कश्चिद् दूरीभूतः समाजस्याभावो नवीनयानया पुस्तिकयेति ; दृष्टञ्च यदत्र बङ्गानुवादो वैदिकमन्त्राणां भाष्यादिकञ्च सन्निवेशितमिति। परमेतावन्मात्रमेवात्र प्रशंसाविषयः। स्वल्पमायासमङ्गीकृत्यापि समालोचयतां बह्वव एवासङ्गतयः स्फुटतयैव प्रतिभान्ति।

आवरणपत्रे एवालोकितं—किञ्चित् विचित्रं वस्तु। तच्च—'श्रीगणपतिसरकारविद्यारत्नेन तथा श्रीआशुतोषतर्कतीर्थेन अनूदिता सम्पादिता च।'

मान्यतराणामेव प्रायश्चोल्लेखः सज्जनानामनुमोदिता रीतिः। तथा च विभिन्नवर्णीयजनसमुदायस्यैकत्र कर्त्तव्ये समुल्लेखे ब्राह्मणानां नामकीर्त्तनमादावेवेति नवीनानां पुरातनानाञ्चार्य्याणां तुल्यमेव मतम्। परं कथमत्र सकलसज्जनविदितस्य तस्य नियमस्य विपर्य्यासेन ब्राह्मणेतरस्य गणपतेः नामोल्लेखः प्राक् कृत इत्यवगन्तुमनीशा वयमाकुलीभूताः। कायस्थस्य तस्य स्वीयं क्षत्रियत्वमेव सर्व्वप्रयत्नेन

प्रतिपादयतोऽपि ब्राह्मणात् पूर्वोक्तं खं न कथमपि समर्थयितुं प्रभवामः।

पुस्तकगता ये तावत् विषया अस्माकं दोषत्वेन प्रतिभातास्ता- निदानीं प्रतिपादयामः। प्रथमतस्तावदेतदेव प्रतिभाति यथा पुस्तक- प्रणयनकाले हस्तलिखिताः शुद्धा आदर्शा न सम्यगालोचिता; येन अन्तरा अन्तरा बहव एव दोषा गृह्यसूत्रविरोधाः प्रयोगविरोधाश्च सम्भूताः।

१। १८शपृष्ठके 'स्त्रियाचारं मुखचन्द्रिकाञ्च सम्भाव्य' इति लिखितम्। नैष पाठो यथार्थतया प्रतिभाति, स्त्रियाचारमिति पदस्य असंस्कृतत्वात्।

२। २२शपृष्ठके 'दक्षिणहस्तानामिकाङ्गुष्ठाभ्यां विलोड्य' इति विहितम्। पारस्करगृह्यसूत्रे तु दक्षिणहस्तानामिकया आलोड- नीयमिति विहितम्।

३। अग्निपर्युक्षणे 'देव सवितः प्रसुव यज्ञं' इत्यादिमन्त्रः प्रदत्तः। किन्तु एष तु सामवेदीयैरेव प्रयोज्यः, यजुर्वेदिनान्तु 'एषोऽदेव' इति पृथगेवास्ते मन्त्रः।

४। लाजहोम—पाणिग्रहणशिलारोहणगाथागान दक्षिणाल- कर्मादीनां लिखितः क्रमस्तु गृह्यविरुद्धः।

५। सप्तपदीगमनात् पूर्वं स्विष्टिकृद्धोमस्ततः [illegible] पवेशनं ततः पुनः स्विष्टिकृद्धोमः इति दृश्यतेऽत्र क्रमः। [illegible] हरिहर- गदाधरप्राचीनहस्तलिखितपशुपतिपद्धतिविरोधाद्धेयः।

६। १०८ तमे पृष्ठे मूलमध्ये एव 'क्षत्रिय ([illegible]) पक्षे ॐ भिक्षां भवन् देहि—ॐ भिक्षां भवति देहि' इत्यादि नियमो निवेशितः। एतदंशस्य पशुपतिग्रन्थे सर्व्वथा असत्त्वात् पादटीकाया- मेवास्य सन्निवेशः साधीयान्, न तु मूलमध्ये एव [illegible]मध्येऽपि।

एवमन्येऽपि बहव एव दोषा वर्त्तन्ते ये प्रबन्धबाहुल्यभिया नाली- ल्लिखिताः। केवलमिदमेव मन्यामहे यथा एतादृशानां ग्रन्थानां संस्करणे

यावान् परिश्रमोऽपेक्ष्यते न तावान् सम्पादकाभ्याम् अवलम्बित इति इदानीमुपलभ्यमानेभ्यः पुस्तकेभ्यः नवीनस्याप्यस्य संस्करणस्य न तथोत्कर्षः सङ्घटितः यथास्माभिराशंसितपूर्व्वो यथा चेदानीं पद्धति-दोषात् समुत्पन्ने ऽल्पलोपव्यतिकरे नितरामेव प्रयोजनीय इति शम्।

---

## विविधवार्त्ता।

**विजयासम्भाषणम्।** विजयान्ते वयं परिषदः सदस्यानामनु-ग्राहकाणामन्येषाञ्च सुरभारतीसेवकानां यथासम्भवं विद्यावयोवृद्धानां नमस्कारान्, कनिष्ठवयसांच सादरसम्भाषणालिङ्गनं कल्याणिनाञ्च साशीराशिषं विज्ञापयामः। सततं सर्व्वत्र विजयताममरवाणी तत्सेवकसार्थश्च।

**दुःखानुभवः**—आदावेव सभानां कथन शोकसन्देशो वितीर्य्यते, यथा फरिदपुरमण्डलान्तर्गतकोटालिपाड़मण्डलालङ्कारभूताः विविधशास्त्र-तत्त्वनिष्णाता विशेषतो न्यायदर्शने लब्धनिष्ठाः सुप्रतिष्ठाः महामहो-पाध्यायकल्पाः आशुतोषतर्करत्नमहाभागाः सर्व्वानात्मजनान् शोकसागरे निमज्ज्य प्रत्यक्षतो देवदर्शनकाम्ययेव स्वर्गमभिगताः। ते हि सुप्रसिद्ध-ब्राह्मणभूपतिकुले जन्म परिगृहीतवन्तोऽपि विद्यागोष्ठीगरिष्ठा आमृत्यु-कालं विद्यानुरागमात्मगतमक्षुण्णं पर्य्यपालयन्, सुचिरमेव च स्वभवन-मधितिष्ठन्त एव यथालाभमन्तेवासिनामध्यापनया कालमत्यवाहयन्, भवतु यथा तथा वा सगर्व्वमिदमत्र वक्तव्यमस्माकं यथाविज्ञानं यथा तथा प्राचीनकालानुरूपश्चिन्ताशुभगः सुप्रशान्ततमःस्तोमः सुदुर्लभतामद्य धत्ते कोटालिपाड़जनपदे विशेषतो भूमिपतिकुलाङ्कुरेषु तदेतेन विरहि-तायाः कोटालिपाड़धरायाः शोकसागरे निमज्जन्त्याः तत्रत्यवर्त्तमान-

विद्वद्गोष्ठीगरिष्ठा अपरे भवन्त्ववलम्बनमित्ययाचितकेनाप्युच्यते। हन्त! इत्थं क्रमेण गुणिगणक्षयदुःखदुर्दिनायितस्य भारतवर्षस्य कियता पुनः समयेन प्रसन्नता भवितेति न सम्भावयितुमर्हामः।

**वृत्तिप्रदाने वैमत्यम्**—अचिरमेषा वार्त्ता समधिगतास्माभिः यथा विद्यासिद्धपीठे नवद्वीपस्थराजकीयसंस्कृतविद्यालये कायस्थजातीयः कश्चिदन्तेवासी वृत्तिलाभं कामयमानः कृताभिप्रायसूचनो विफलमनोरथो जात इति, तदिदं संस्कृतपरीक्षापरिचालनसमित्या कृतनिर्णयञ्चेति। तदत्र वयं पृच्छामः—किमु नवद्वीपविद्यालये केवलमस्ति वृत्तिव्यवस्थापनं ब्राह्मणानामेव कृते परेषामपि वा? यदि प्रथमः कल्पो, नास्ति तत्र किञ्चिद् वक्तव्यमस्माकं, किन्तु यदि द्वितीयः कल्पः, तदा कीदृशो वा मत्सरः कायस्थजातौ, यदि कथञ्चिदन्या जातिस्तद्वृत्तिलाभयोग्या तदा कायस्थजातेस्ततो वञ्चनं न खलु युक्तिसहम्। श्रुतञ्चास्माभिर्यथा ब्राह्मणभिन्ना अपरेऽपि तत्रत्यां वृत्तिमुपभुञ्जाना विद्याम् अभ्यस्यन्ति, तदत्र प्रभुमो वयं यथा तत्रत्या वृत्तिव्यवस्थापकपरिषत् निरपेक्षविचारेणैव व्यवहरन्ती साधारणीं विद्योन्नतिं भारतस्य अनुकूलयेत् इति।

**रूपककार:**—परिषदो भाद्रमासस्याधिवेशने वङ्गीयशिक्षाविभागाध्यक्षाणां (W. W. Hornel M. A, C. I. E.) हर्णेल महोदयानां शुभागमनं जातम्। तत्र श्रीयुक्तकालीपदतर्काचार्य्येण निर्मितं नूतनं रूपकं स्यमन्तकोद्धारं परिषच्छात्रैः प्रयुक्तम्। प्रारम्भ एव परिषत्सम्पादकेन श्रीमता पशुपतिनाथशास्त्रिणा एवमुक्तम्—

"Gentlemen,

It is known to you that the Sanskrit Sahitya Parisat has hitherto staged various Sanskrit Dramas composed by the old poets of India. But to-day we are going to put a new thing before you—a short

piece of composition by the young poet, Pandit Kalipada Tarkacharya, the teacher of the *Tol* attached to the Parisat and the joint-editor of the Journal. Pandit Kalipada has already made a name as a good writer and we have every hope that he will, in future, be esteemed as a good dramatist also. It may not be known to you, gentlemen, that still in the remote corners of India, Sanskrit dramas are being composed by poor pandits, which owing to want of proper recognition, are born unseen, and waste their sweetness in the desert air. It is one of the bounden duties of the Parisat, to introduce such authors to the educated world, and we are making to-day our first attempt.

It is needless to point out the usefulness of such compositions. Recently we acted three dramas at the All-India Sanskrit Conference at Benares, before a learned audience numbering about two thousand gentlemen, coming from various parts of India, and you will be glad to learn that the performances were highly appreciated. That which appeals to the heart of the educated people can, by no means, be called 'a dead thing.' Referring to our performances Pandit Madanmohan Malaviya, in his address to the students of the Tekamani Sanskrit College of Benares, exhorted the students to undertake similar

dramatic performances, 'for,' said he, 'otherwise t students would grow dull and would not enter in the spirit of the language.'

Gentlemen, the new drama will be played to-d only by the students of the Parisat. We are erecti a small stage within this hall. At monthly meetin they may act one or two scenes from any text bo of theirs, which will instruct and amuse them as w as the members present. The scenes will represe specimens of Indian art."

अस्य भावः—

वर्षसप्तकं यावत् प्राचीनरूपकप्रयोगचतुराः खलु परिषदुपदी पारिषदानां मनसामावर्जनाय बहूनां रूपकाणां प्रयोगमुपस्थापितव परमद्यतनेऽनुष्ठाने वर्त्तते किञ्चिद् वैचित्र्यम। यद्यपीदानीं प्रा सर्व्व एव संस्कृतसाहित्ये श्रमविमुखाः यद्यपीदानीं सुरभारत्या दु उपेक्षिता तथापीदानीमपि केचन केचन कोविदजनाः ग्रामेषु गहं वा अवस्थाय अमरवाणीमहिम्ना लोभिताः प्राचीनकीर्त्तिपथमनुसर सुरसगन्धशोभितैः काव्यसुमनोभिर्वाग्देवतामर्चयन्ति। परं ते सम परिचयाभावात् सम्यक् परिपोषकाभावात् च अप्रतिमान् लेख सम्प्रत्यापि सभासमाजेषु अनधिगतप्रतिष्ठाः कालं यापयन्ति। ए संस्कृतोन्नतिकामिन्याः परिषदो विशेषेण कर्म्म वर्त्तते येनैवंविध विद्याभूषणानां सम्यक् प्रतिपत्तिप्रसारः स्यात्। तत एवाद्य नवीन कवेः श्रीमत्तर्काचार्य्यस्य कृतिर्मन्ये परिषच्छात्राणां भरतशिल्पचातु सामाजिकानां मनांसि साधु रञ्जयिष्यति। अपि च, अभिनयसौकर्य मस्माभिः कोऽपि रङ्गमञ्चः प्रतिष्ठाप्यते प्राचीनरीतिमनुसृत्य। पटा निपुणचित्रशिल्पिभिः प्राचीनशिल्पानुसारेणैवाङ्क्यन्ते।

जिज्ञासा — भुय दर्शनविज्ञेषु श्रीमत्सु सविनयं निवेद्यते। अस्त्यस्माकं प्राचीनपुस्तकसंग्रहान्तः कीरदूताख्यं किञ्चन खण्डकाव्यं यस्यायमादिमः श्लोकः —

विद्युद्भासोज्ज्वलनिवसनं श्रीशपादारविन्दं
वक्षोदेशं नवजलधरश्यामसम्भोरुहाक्षम्।
वृजहं श्रीविलसदधरं सुन्दरं स्मेरवक्त्रम्
पूर्णानन्दं किमपि ललितं ज्योतिरालोकयामि ॥ इति

अन्तिमश्च—

दोर्दण्डेन वशीकृताः क्षितिभुजो यस्येह वङ्गावनौ
यस्याशेषगुणप्रदीप्तयशसा प्रच्छादितं क्ष्मातलम्।
वर्त्तन्ते परिषत्सु यस्य कवयः श्रीकालिदासोपमाः
काव्यं कीरवचोहरं वितनुते तस्यैव सभ्यो बुधः ॥ इति

पुष्पिका चास्येत्यमस्ति—

'इति श्रीमद्गोपालकविकृतं कीरदूताख्यकाव्यं समाप्त'मिति। किन्तूपान्त्ये श्लोके 'कविना रामगोपालकेने'तिसत्त्वात् पुष्पिकायां लिपिकरप्रमादाद् 'गोपालेति' लिखितं प्रतिभाति। अत्र नो जिज्ञासा किमभिधानः किंराजधानीको वायं त्रिदशोत्साहो नृपोऽभूद् यस्य परिषदि बुधान्तरैः सार्द्धमयमपि कविः व्यराजत, अस्ति नवास्य कवेर्ग्रन्थान्तरमिति। यदि केचित् पुरातत्त्वरसिका किमप्यत्र विदन्ति तैरस्माकं जिज्ञासापूर्त्तिः सकृपं करणीयेति।

श्रीजानकीनाथभट्टाचार्य्यस्य
सं-सा-परिषत्पुस्तकालयान्यतराध्यक्षस्य।

---

---




ভারতবর্ষমধ্যে সর্ব্বাপেক্ষা বৃহৎ, অকৃত্রিম ও সুলভ

# আয়ুর্ব্বেদীয় ঔষধালয়

হেড আফিস--পটুয়াটুলী ষ্ট্রীট, ঢাকা। কারখানা--স্বামীবাগ রোড, ঢাকা

কলিকাতা হেড আফিস— ৫২।১ বিডন ষ্ট্রীট। টেলি :- "শক্তি" ঢাকা।

প্রত্যেক শাখাতেই সুদক্ষ কবিরাজ নিযুক্ত আছেন ; তাঁহারা বিনামূল্যে ব্যবস্থা দেন।

ভারত-রাষ্ট্রীয় মহাসভার সভাপতি

## দেশবন্ধু চিত্তরঞ্জন দাশ মহাশয় বলেন :—

ঢাকা শক্তি ঔষধালয়ের কারখানার কার্য্যকলাপে আমি পরম প্রীত হইয়াছি, পরিচালনা কার্য্য বিশেষ নিপুণভাবে, সুশৃঙ্খল ও সুব্যবস্থার সহিত নির্ব্বাহিত হয়, পরিদর্শন-প্রণালী যেরূপভাবে সম্পাদিত হইতেছে তাহা হইতে উৎকৃষ্টতর প্রণালী কল্পনায়ও আনা যায় না।

(স্বাক্ষর) সি, আর, দাশ।

| | | | |
|---|---|---|---|
| দশনসংস্কার চূর্ণ | ৵০ কৌটা। | ম্যালেরিয়া ও সর্ব্ববিধ জ্বরের কুলান্তক— | |
| দাদনার | ৵০ কৌটা। | জরান্তক যোগ | ।০ সপ্তাহ |
| বৃহৎ খদির বটিকা | ৵০ কৌটা। | অমৃতারিষ্ট | ৸০ শিশি |
| ১ ডজন ১৸০ আনা, ৩ ডজন ৪০ আনা। | | কলেরান্তক | ।০ কৌটা |

শক্তি বা কর্ম্মযোগ এবং আয়ুর্ব্বেদীয় চিকিৎসা-প্রণালী সম্বলিত ক্যাটালগ পত্র লিখিলে বিনামূল্যে পাইবেন।

---

प्रकाशकः मुद्रापकश्च — श्रीजानकीनाथकाव्यतीर्थः।
संस्कृतसाहित्यपरिषद्भवनम्, श्यामबाजार ब्रीजरोड, कलिकाता।
मुद्रणस्थानं — श्रीप्रेस, १०७ कर्णवालिस ष्ट्रीट, श्यामबाजार, कलिकाता।

१८४५ शकीय | अग्रहायणी | December 1923.
Reg. No C. 1073.
६ष्ठ वर्षस्य | ८म संख्या | Vol. VI. No. 8

ভারতে ভাতু ভারতী।
সংস্কৃত-সাহিত্য-পরিষৎ।

## শোক সভা।

সবিনয় নিবেদন,

সংস্কৃত-সাহিত্য-পরিষদের সভাপতি মহামহোপাধ্যায় মহাত্মা কালীপ্রসন্ন ভট্টাচার্য্য মহাশয়ের ও পণ্ডিতপ্রবর মহাত্মা জয়চন্দ্র সিদ্ধান্ত ভূষণ মহাশয়ের লোকান্তর গমনে শোকপ্রকাশার্থ আগামী ১৪ই পৌষ (৩০শে ডিসেম্বর) রবিবার অপরাহ্ণ ৫ ঘটিকার সময় পরিষদের একটী বিশেষ অধিবেশন হইবে। আপনার উপস্থিতি একান্ত প্রার্থনীয়। ইতি—

নিঃ—
শ্রীপশুপতিনাথ শাস্ত্রী
শ্রীগীষ্পতি কাব্যতীর্থ
সম্পাদক।

...বয়ম্।

পরীক্ষাপাঠ্যভূতানি পুস্তকান্যপরাণি চ।
লভ্যন্তে হ্যাষ্যমূল্যেন পরীক্ষা প্রার্থ্যতে সতাম্॥

কেশরাশিকে কুঞ্চিত ও কোমল করিবার জন্যই

# কে-শ-র-ঞ্জ-ন-তৈ-ল




এই আসমুদ্র ভারতের সর্ব্বত্রই কেশরঞ্জনের শতমুখে সুখ্যাতি। নিত্য স্নানকালে কেশরঞ্জন মাথায় মাখিলে সমস্ত দিনটী চিত্ত প্রফুল্ল থাকে। কেশরঞ্জন নিত্য মাথায় মাখিলে মাথা ধরা, মাথা ঘোরা, অনিদ্রা, মন হু হু করা প্রভৃতি উপসর্গ নিদূরিত হয়। দেশের রাজা মহারাজা হইতে সামান্য গৃহস্থ গৃহেও কেশরঞ্জনের সমাদর। আপনিও ব্যবহার করুন। মূল্য প্রতিশিশি এক টাকা, ডাকব্যয় সাত আনা।

## স্নায়বিক দুর্ব্বলতার আশু প্রতিকার।

বলবর্দ্ধক, মেধাবর্দ্ধক ও স্মৃতিবর্দ্ধক মহৌষধ। আমাদের "সঞ্জীবন রসায়ন" ... দুর্ব্বলতার জন্য যাহাদের উদ্যম-উৎসাহশক্তি-স্ফূর্ত্তি ও স্মৃতিশক্তি বিনষ্ট হইয়াছে, অগ্নিমান্দ্য প্রভৃতি গ্লানিকর উপদ্রব উপস্থিত হইয়াছে, তাঁহাদের পক্ষে সঞ্জীবন রসায়ন অমৃতের ন্যায় উপকারী। বিশেষতঃ ইহার দ্বারা বমন, বমনেচ্ছা, উদ্গার, হিক্কা, ... (পেট ফাঁপা) ও পেট ভুটভাট করা প্রভৃতি পেটগরমের উপদ্রবসমূহ অচিরে ... হইয়া থাকে। এক কথায় বলিতে হইলে, অজীর্ণ, অগ্নিমান্দ্য ও স্নায়বিক দুর্ব্বলতা ... জন্য এবং ছাত্রগণের মেধাবৃদ্ধি করিতে "সঞ্জীবন রসায়নের" ন্যায় অব্যর্থ ঔষধ বিরল। এক শিশির মূল্য ১৲ টাকা। মাশুলাদি ।৴০ আনা।

পরিবর্ত্তিত **সচিত্র কবিরাজ-শিক্ষা।** পরিবর্দ্ধিত

### শ্রীযুক্ত নগেন্দ্রনাথ সেনগুপ্ত প্রণীত।

সমগ্র আয়ুর্ব্বেদ শাস্ত্রের সার সঙ্কলন। বড় বড় আটটী খণ্ডে সমগ্র পুস্তক ... অতি সরল ভাষায় লিখিত হওয়ায়, কেবল চিকিৎসকের নয়—সাধারণ গৃহস্থের ইহা একখানি নিত্য-ব্যবহার্য্য গ্রন্থ। নাড়ী পরীক্ষা হইতে আরম্ভ করিয়া সমস্ত ... নিদান, চিকিৎসা-প্রণালী আয়ুর্ব্বেদীয় ঔষধ, তৈল, ও ঘৃতাদি-প্রস্তুত-বিধি, এবং ... দীর্ঘজীবন-লাভের উপায়স্বরূপ স্বাস্থ্যকারক স্থানসমূহের পূর্ণবিবরণ, রোগীর ... দ্বিতীয়খণ্ড মহর্ষিদের গৌরবস্বরূপ—সুশ্রুত-সংহিতা এই সংস্করণে সন্নিবেশিত ... মূল্য ২॥০ টাকা। ডাকমাশুল ও প্যাকিং ৷৵০ বার আনা।

**কবিরাজ নগেন্দ্রনাথ সেন এণ্ড কোং, লিমিটেড্।**

১৮।১ ও ১৯ নং লোয়ার চিৎপুর রোড, কলিকাতা।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रबोधयतु धीमताम् ॥

१८४५ शकीये अग्रहायणी, ६७-वर्षस्य ८म-संख्या


## अतिथिसेवा ।

लेखकः—श्रीदक्षिणारञ्जनशास्त्री एम्, ए

पञ्चानां महायज्ञानाम् इयमेकतमा । नृयज्ञोऽतिथिपूजनम् । इयमपि नित्या दिने दिने च कर्त्तव्या । गृहस्थानां द्विजानामत्राधिकारः । जायमान एव द्विज ऋणवान् जायते । पञ्च महायज्ञैश्च तानि ऋणान्यपाकर्त्तुं यतन्ते कृतज्ञहृदया द्विजप्रवराः । केचन वदन्ति पञ्चमहायज्ञैरियं तनुः ब्राह्मी क्रियते इति । केचन चैवं मन्यन्ते, "पञ्च सूना गृहस्थस्य वर्त्तन्तेऽहरहः सदा । एतासां पावनार्थाय पञ्च यज्ञाः प्रकल्पिताः ।" इति । देवा ऋषयो बान्धवाः सामाजिकाश्चान्ये पशुपक्षिकीटपतङ्गादयोऽप्यस्मानुपकुर्व्वन्ति । तान् प्रति कृतज्ञा वयमिति प्रकाशयितुं वा, ब्रह्मबोधार्थं वा, पावनार्थं वा अनुष्ठानमेतेषां पञ्चमहायज्ञानां नित्यमेवासीदु भारतीयानामार्य्यकुलधुरन्धराणाम् नास्त्यत्र सन्देहलेशोऽप्यस्माकम् । भारतीयानामिदमेकं वैशिष्ट्यं प्राचीनानामार्य्यवर्य्याणाम् । स्वाधीनभावाश्रयेणैवेति पञ्चमहायज्ञाननुष्ठितवन्तः । तैत्तिरीये चारण्यके दृश्यते 'पञ्च वा एते महायज्ञाः सतति प्रतायन्ते सतति सन्तिष्ठन्ते' । ब्रह्मयज्ञः, पितृयज्ञः, देवयज्ञः, भूतयज्ञः, मनुष्य-

यज्ञश्च । यत् पितृभ्यः स्वधा करोति अपि अपः तत् पितृयज्ञः सन्ति
यदग्नौ जुहोति अपि समिधम् तद् देवयज्ञः सन्तिष्ठते, यद् भूतेभ्यो ब
हरति तद् भूतयज्ञः सन्तिष्ठते । यत् स्वाध्यायम् अधीयीत एका
ऋचम्, यजुः, साम, वा, तद् ब्रह्मयज्ञः सन्तिष्ठते,

"यद् ब्राह्मणेभ्यो अन्नं ददाति तन्मनुष्ययज्ञः सन्तिष्ठते"

मनुष्ययज्ञस्यैवातिथिसेवेत्यपरं नाम । दिवसम् अष्टधा विभ
पञ्चमे भागे सायं, च वैश्वदेवान्ते अस्यानुष्ठानं कर्त्तव्यम् ।

(१) अथ को नामातिथिः यस्य सेवा नित्या दिने दिने
कर्त्तव्या ?

(क) तत्र केचन वदन्ति 'न विद्यते तिथिर्यस्यासावतिथिरिति
तिथिः पर्व्वोत्सवादयो येन महात्मना त्यक्ताः सोऽतिथिः । शेषा
अभ्यागतान् विदुरिति च मन्वादियुगादिप्रभृतिषु तिथिविशेषेषु द्र
लाभमुद्दिश्य ये अभ्यागच्छन्ति ते न अतिथयः । ते तु अभ्यागता ए
तादृशं तिथिविशेषमनपेक्ष्य यदा कदाचित् क्षुत्तृष्णादिपीड़या वा
समायाति स एवातिथिरिति ।

(ख) पराशरेण चोच्यते 'ग्रामान्तरादागतः क्षुत्तृष्णापरिपीड़ि
वैश्वदेवे उपस्थितो ब्राह्मणस्तस्मिन्नेव दिने अतिथिर्नेतरेद्यु
नातिथिः पूर्व्वमागतः । नैकग्रामीणम् अतिथिं संगृह्णीत कदाचन ।

'एकरात्रं च निवसन् अतिथिर्ब्राह्मणः स्मृत' इति मनुवचनम
पराशरमतमेव समर्थयति । वैश्वदेवे उपस्थित इति तु दिवसाभिप्राय
सायं तु वैश्वदेवकाले कालान्तरे वा अस्तं गच्छता सूर्य्येण देशान्त
गमनाशक्तिमुत्पाद्य गृहं प्रापितः सोऽप्यतिथिरिति । अन्यच्च पराश
कथ्यते 'यस्मादनित्यमागतस्तस्मादतिथिरिति ।'

(ग) एवं च सति एकग्रामीणः प्रतिनियतेषु तिथिविशेषेषु
समागच्छति नासावतिथिः । यस्तु ग्रामान्तरात् असङ्केतितो बुभु
सन् आगच्छति स एवातिथिरिति माधवाचार्य्यपादाः ।

(घ) अज्ञातपूर्व्वगृहागतव्यक्तिरिति श्रीधरस्वामी।

(ङ) इष्टो वा द्वेष्यो वा मूर्खो वा पण्डित एव वा वैश्वदेवान्ते यः समागतः स एवातिथिरिति केचित्।

(च) मार्कण्डेयपुराणे च दृश्यते न मित्रमतिथिं कुर्य्यात् नैकग्रामनिवासिनम्। अज्ञातकुलनामानम् तत्काले समुपस्थितम्। बुभुक्षुमागतं श्रान्तम् याचमानमकिञ्चनम्। ब्राह्मणं प्राहुरतिथिं स पूज्यः शक्तितः सदा।

(छ) मनुरपि एकग्रामनिवासी दृष्टपूर्व्वः अतिथिर्न, भिन्नग्रामवासी अदृष्टपूर्व्वः यस्मिन् स्वकीये परकीये वा देशे भार्य्या अग्नयो वा भवन्ति तत्रैवातिथिधर्म्मेणोपस्थितोऽतिथिरिति वदति।

अयमाशयः—एकग्रामवासी अतिथिधर्म्मेणागतोपि नातिथिः। भिन्नग्रामवासी अज्ञातकुलनामातिथिविशेषमनपेक्ष्य यदि दिवसे वैश्वदेवान्ते रात्रौ यदा तदा वा अतिथिधर्म्मेणागच्छति स एवातिथिर्नान्यः इत्येव धर्म्मशास्त्रकाराणामभिप्रायः। द्वेष्यस्य भोजनीयत्वं मनुना निन्दितम्; मूर्खस्य भोजनीयत्वं स्मृत्यन्तरे निषिद्धम् बान्धवस्य पण्डितस्य च भोजनीयत्वं शास्त्रकारैः प्रशंसितम्। एवं इति श्राद्धादाविव वैश्वदेवान्तेपि अपरिमितविवेकस्य च प्रसक्तौ तन्निराकरणाय इष्टो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा इत्युक्तम्। अतिथिर्देवता साक्षात् तस्मिन् पण्डितमूर्खविचारः शत्रुमित्रविचारो वा नैव कर्त्तव्यः। ब्राह्मणगृहे ब्राह्मण एवातिथिर्नवान्यो राजन्यादिः। यस्मिन् दिने आगतः तस्मिन्नेव दिने अतिथिर्नापरेद्युः। यत्र गृहस्थस्य पत्नी अग्नयो वा वर्त्तन्ते तत्रैवातिथिः। न तु अन्यत्र।

"यस्य न ज्ञायते नाम न च गोत्रं न च स्थितिः।
अकस्माद् गृहमायाति सोऽतिथिः प्रोच्यते बुधैः॥

२। समुदाचारः

दिवसस्य पञ्चमे भागे समुपस्थिते च अतिथिसेवासमये अतिथि-

निरीक्षणाय गृहाङ्गने मुहूर्त्तस्याष्टमं भागं वा गोदोहमात्रं कालं किञ्चित् कालम् द्वाराण्यवलोक्य अतिथिग्रहणार्थाय तिष्ठेत्।

तत्र च तमागतमतिथिं स्वागतादिना अर्घ्यासनप्रदानेन पाद-प्रक्षालनेन च पूजयेत्; ततश्च श्रद्धया अन्नपानादिकं दत्त्वा प्रि-प्रश्नोत्तरेण, गच्छतोऽनुयानेन च प्रीतिमुत्पादयेत्। 'यद्ब्राह्मणेभ्यो-ऽन्नं ददाति' 'अहरहर्ब्राह्मणेभ्योऽन्नं दद्यात्' इति श्रुतिस्मृतिभ्यामुद-कृतत्वात् क्षत्रियादयस्तु न ब्राह्मणगृहे अतिथिसत्कारमर्हन्ति। यदि तु अतिथिधर्म्मेण गृहमायाति तदा भुक्तवत्सु विप्रेषु तमपि भोजयेत् एवं वैश्यशूद्रादयोऽपि। बान्धवाः कुटुम्बा वा अन्ये वा परिचिता यदि अतिथिधर्म्मेण सम्प्रीत्या वा आयान्ति तर्हि सभृत्यान् वा तान् भार्यया सह यथाशक्ति भोजयेत्। उत्तमेषूत्तमं हीने हीनं समे समासना-दिकञ्च देयम्।

गोत्रं वंशप्रवर्त्तकमहर्षिसम्बन्धः। अतिथेर्गोत्रादिकं न पृच्छेत् न च आचारं स्वाध्यायं (शाखाविशेषं) व्याकरणमीमांसादिज्ञानम् देशं नाम कुलं वा। श्राद्धादौ तु आदावेव ब्राह्मणः परीक्षणीयः। अत आहन्यायेनातिथ्येऽपि कर्म्मणि गोत्रचरणादिपरीक्षाप्राप्तौ तन्निवार्य्यते अतिथेर्गोत्रादिपरीक्षा न कार्य्या। आगते च तस्मिन् स्वयं ब्रह्मा समुपागत इति चिन्तयेत्। हिरण्यगर्भः स्वयमिति वा चित्ते विभा-वयेत्। यस्तु देशं नाम कुलं विद्याञ्च पृष्ट्वा अन्नं प्रयच्छति स न तत्फलमाप्नोति दत्त्वा स्वर्गञ्च न गच्छति।

आतिथ्यकर्त्ता यदि कुलनामगोत्रादिकं पृच्छति तर्हि स अतिथि-सेवायाः फलं न प्राप्नोति। एवं यदि अतिथिर्भोजनार्थं स्वं कुलगोत्रं निवेदयति तर्हि स वान्ताशी भवति। अतस्तेनापि न कुलगोत्रादिकं वक्तव्यम्। यदि वदति तर्हि 'वान्ताशीत्युच्यते बुधैः'। सर्व्वदेवमयो-ऽतिथिः। तस्मिन् देवताबुद्धिरेव कर्त्तव्या। तस्य कुलशीलविचारः नैव कर्त्तव्यः। पुराणसारे च दृश्यते

धाता प्रजापतिः शक्रो वह्निर्वसुगणो यमः।
प्रविश्यातिथिमेते वै भुञ्जतेऽन्नं द्विजोत्तम॥ इति

३। अकरणे प्रत्यवायः

यस्य गृहात् अतिथिर्भग्नाशः प्रतिनिवर्त्तते तस्य पितरः पञ्चदश वर्षाणि नाश्नन्ति। तस्य काष्ठभारसहस्रेण घृतकुम्भशतेन च होमो निरर्थको भवति। अहमस्य गृहे भोक्ष्ये इत्याशया समागतोऽतिथिर्यदि भोजनमप्राप्य तद्गृहान्निवर्तेत तर्हि गृहिणा क्रियमाणम् वैदिकं दैविकञ्च कर्म्म विहितद्रव्यादङ्गसम्पन्नमपि निष्फलं भवेत्। मनुरप्याह— 'सर्व्वं सुकृतमादत्ते ब्राह्मणोऽनर्चितो वसन्'। दुष्कृतभागिरपि स्यात्। आश्वमेधिके च दृश्यते 'यो नाम द्विजः साङ्गोपाङ्गान् वेदान् दिने दिने पठति, सोऽपि यदि अतिथिं न पूजयति, तर्हि तस्य पाठो वृथा स्यात्। पाकयज्ञैर्महायज्ञैः सोमसंस्थाभिरेव च ये यजन्ति, गृहेष्वागतम् अतिथिं तु नैव पूजयन्ति तेषां यज्ञा वृथा भवन्ति। वैश्वदेवान्ते समुपस्थितमतिथिं यो न पूजयति स सद्य एव चाण्डालत्वमाप्नोति। ये च आतिथ्येन बहिष्कृतास्ते सर्व्वे नरकं यान्ति काकयोनिं व्रजन्ति च। 'यो मोहादथवालस्यादकृत्वातिथिपूजनं। भुङ्क्ते स नरकं याति तिर्य्यग्योनिञ्च गच्छति।' अतिथिर्यदि भग्नमनोरथः प्रतिगच्छति तर्हि स गृहस्थस्य गृहमभेत्य असत्कृतो निराशश्च प्रतिनिवर्त्तते, स सद्यस्तत् कुलं हन्ति।

४। अतिथिसत्कारेणाभ्युदयप्राप्तिः।

यथा सुक्षेत्रोप्तबीजं न विनश्यति किन्तु महते फलाय कल्पते, तथा सुपात्रेऽतिथौ दत्तमन्नादिकमक्षय्यफलं भवति। अतिथिपूजनम् धन्यम् यशस्यम् आयुष्यम् स्वर्ग्यञ्च। यस्तु अतिथिं पाद्यादिदानैः पूजयति स भवानीमेव पूजयति। गृही अतिथिपूजनात् यथालोकानवाप्नोति न तथा स्वाध्यायेन अग्निहोत्रेण यज्ञेन तपसा वा प्राप्नोति। देवतातिथिपूजको नावसीदति। यस्तु श्रान्तमदुष्टमानसम् अतिथिं पूजयति

तेन सवृषं गोशतं दत्तं भवति। धनवान् सोमयागादिना यत्फल लभते दरिद्रः अतिथिपूजनादेव तत्फलं लभते।

५। अत्र तु ब्राह्मण एवातिथिर्नैवान्यो राजन्यादिः।

एतादृश एवातिथिर्मनुष्ययज्ञे विहितो भवति शास्त्रकाराणां वचनप्रामाण्यात्। अत्र च केचन मन्यन्ते धूर्त्ता ब्राह्मणा एव शास्त्रकाराः ते तु ब्राह्मणानां हितार्थं स्वजातिप्रीत्या एव शास्त्राणि विरचितवन्तः। अत्रापि मनुष्ययज्ञे तदर्थमेव ब्राह्मणा विहिता इति, न तु राजन्यादयः। अत्रोच्यते ये नाम शास्त्रकाराः

'देवा मनुष्याः पशवो वयांसि सिद्धाः सयक्षोरगदैत्यसंघाः।
प्रेताः पिशाचास्तरवः समस्ता ये चान्नमिच्छन्ति मयात्र दत्तम्।
पिपीलिकाः कीटपतङ्गकाद्याः बुभुक्षिताः कर्म्मनिबन्धबद्धाः।
प्रयान्तु ते तृप्तिमिदं मयान्नं तेभ्यो विसृष्टं सुखिनो भवन्तु॥
येषां न माता न पिता न बन्धु र्नैवान्नसिद्धिर्न तथान्नमस्ति।
तत्तृप्तयेऽन्नं भुवि दत्तमेतत् प्रयान्तु तृप्तिं मुदिता भवन्तु॥
भूतानि सर्व्वाणि तथान्नमेतद् अहञ्च विष्णु र्न ततोऽन्यदस्ति।
तस्मादिदं भूतहिताय भूमौ अन्नं प्रयच्छामि भवाय तेषाम्॥
चतुर्दशो लोकगणो य एष तत्र स्थिता ये किल भूतसंघाः।
तृप्त्यर्थमन्नं हि मया विसृष्टम् तेषामिदं ते मुदिता भवन्तु॥

इत्यादीनपि मन्त्रान् आराधितवन्तः तथा यस्मिन् शास्त्रे

पापो वा यदि चण्डालो विप्रघ्नः पितृघातकः।
वैश्वदेवे तु सम्प्राप्तः सोऽतिथिः स्वर्गसङ्क्रमः॥
अरावप्युचितं कार्य्यम् आतिथ्यं गृहमागते।
छेत्तुः पार्श्वगतां च्छायां नोपसंहरति द्रुमः॥

तथा— उत्तमस्यापि वर्णस्य नीचोऽपि गृहमागतः।
पूजनीयो यथायोग्यं 'सर्व्वदेवमयोऽतिथिः॥

इत्यादीनि च वचनानि विद्यन्ते तत्र एतादृशी स्वार्थपरता सङ्कीर्णता वा विद्यते इति तु न स्वीकर्त्तुमर्हामो वयम्। यत्तु ब्राह्मण एवातिथिरिति तत्तु यज्ञाङ्गातिथिविषयमेव। तेनैवातिथिना मनुष्ययज्ञः सम्पूरणीयः। अन्यथा कालपूर्व्वलाभासम्भवात्। तत्रापि ब्राह्मणानां सर्व्वेषां नाधिकारः। अद्य तु अज्ञातकुलशीलो यो नामातिथिर्न स अपरेद्युः। अतोऽत्र ब्राह्मणानां स्वजातिप्रीतिः सङ्कीर्णता स्वार्थपरता वा न कारणतामवलम्बते। श्रुत्यादेशः अतएव प्रतिपालनीयः इति कृत्वा एव ब्राह्मणाः एवं समादिशन्ति प्रतिपालयन्ति च, नतु ब्राह्मणेतराः नीचाः ते यदि गृहमायान्ति तर्हि न पूजामर्हन्तीतिकृत्वा। ब्राह्मण एवातिथिः, सोपि निर्दिष्टे काले निर्दिष्टे देशे निर्दिष्टो जनः इति तु अतिथि-शब्दस्य सङ्कीर्णं मुख्यार्थः। गौणं चार्थं विस्तीर्णोऽस्य अतिथिशब्दस्य यः कोऽपि जनः आहारार्थं वा शरणार्थं वा वासार्थं वा यदा कदापि समायाति स एवातिथिः। सोऽपि अन्नतोयादिना सत्कारार्हः, किन्तु मनुष्ययज्ञविहितमशेषमतिथिसत्कारं नार्हतीत्येव। 'यतिश्च ब्रह्मचारी च विद्यार्थी गुरुपोषकः। अध्वगः क्षीणवृत्तिश्च व्याश्रितो भिक्षुकः स्मृतः'॥ ते यदि अननुष्ठिते समायान्ति वैश्वदेवे तर्हि अपि वैश्वदेवाननुष्ठत्य भिक्षां दत्त्वा तान् विसर्ज्जयेत्। समागतस्य भिक्षुकस्यातिथ्यमवश्यं कर्त्तव्यम् इति। एतेन च नैतज्ज्ञातव्यम् धनिना आतिथ्यं न कर्त्तव्यमिति। ऐश्वर्य्यार्पितस्यापि स्वगृहे समागतस्य आतिथ्यम् ईश्वरबुद्ध्या एव कर्त्तव्यम्। तथा चोक्तं माधवाचार्य्यपादैः क्षत्रियादिरतिथिर्जातिकुलाचारैर्यद्यपि हीनस्तथापि तत्पूजायाः स्वर्गप्राप्तिहेतुत्वात् अतिथिं तम् हीनत्वबुद्ध्या पूज्योऽयं न वा इति न विचारयेत् किन्तु ईश्वरबुद्ध्या तं पूजयेत्। यद्यपि नायमस्मिन् जन्मनि तपस्वी तथाप्यतीते जन्मनि अनेन तपोऽनुष्ठितम्। अन्यथा ईदृशस्य ऐश्वर्य्यस्य प्राप्त्यसम्भवात्। अतएव विभूतिमत ईश्वरांशत्वम् भगवता दर्शितम् भगवद्गीतायाम् 'यद् यद् विभूतिमत् सत्त्वं

श्रीमदूर्ज्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोऽंशसम्भवम् ॥ इति
अतो न केवलं ब्राह्मणाः पण्डिताः धार्म्मिका आचारवन्तो वा अतिथि
सत्कारमर्हन्ति किन्तु चण्डालाः मूर्खा विप्रघ्नाः पितृघातकाः गो
वधादुपपातकिनोऽपि सर्व्वे एव। 'उत्तमस्यापि वर्णस्य नीचोऽपि
गृहमागतः पूजनीयो यथायोग्यम् सर्व्वदेवमयोऽतिथिः। अराव
प्युचितं कार्य्यमातिथ्यं गृहमागते।' किन्तु ते नाशेषमतिथिसत्कार
मनुष्ययज्ञविहितमर्हन्ति। अन्नपानादिना एव तेषां पूजा कार्य्या आसीत्

हन्त भोः, आसीदस्मिन् भारतवर्षे एतादृशः कश्चित्कालः यस्मिन्
धनी निर्धनः, ब्राह्मणश्चाण्डालः, उच्चोनीचः सर्व्वे एव एकेनापि
कपर्द्दकेन विनापि देशेऽस्मिन् सर्व्वत्र प्रतिग्रामं वा भ्रमितुं समर्था
बभूवुः। सर्व्वे एव गृहस्थाः अतिथिसेवया कृतार्थां बभूवुः। अतएव
आश्रमचतुष्टयेषु गृहस्थाश्रमस्यैव प्राधान्यमासीत्। सर्व्वे एव अतिथि
पूजां संगृह्य अतिथिसत्कारकर्त्तारं कृतार्थं कृतवन्तः। न तु स्वयं
कृतार्थां बभूवुः। आगते च अतिथौ गृहस्थालये आनन्दकोलाहल
समुत्थितवान्। अतिथिः केन कथं वा प्रीतिर्भविष्यति इत्येवासीत्
सतर्कस्य गृहस्थस्य सदैव चिन्ता। 'ते हि नो दिवसा गताः। पञ्च
महायज्ञाः तदङ्गातिथिसेवा च दूरं गताः नाम्ना एव वर्त्तन्ते
लौकिकस्यातिथिसत्कारोऽपि लुप्तप्राय एव। नगरे, यत्र नराः प्रायश
एव नैव एकान्नवर्त्तिनः स्वोदरपूरणचिन्तया स्वाच्छन्द्यचिन्तया वा
उद्वेजिताः तत्र तु अतिथिसत्कारादिकं प्रायेण नास्त्येव। तत्र
सज्जनाः प्रायेणैव अतिथिधर्म्मानुसारेण गृहस्थानां द्वारि न समुपस्थित
भवितुमिच्छन्ति। असत्प्रकृतयः चौरा दस्यवो लम्पटाश्च तथा कुर्व्वन्ति
तेन च साध्वसाधुविचारावसराभावेन गृहस्थाः न साधुषु अपि अतिथि
विश्वासं स्थापयित्वा पूजयन्ति वा तान् ईश्वरबुद्ध्या। पाश्चात्त्यभावे
चानुभाविताः सन्तो गृहस्थाः स्वातन्त्र्यमवलम्बन्ते नगरवासिनः
पाश्चात्त्यसभ्यताभिमानिनश्च नवीनाः ग्रामवासिनोपि तथैव कुर्व्वन्ति

अधुनापि नामतः कार्य्यतो वा कुत्रचन आतिथ्यधर्म्मो विद्यते। परानुकरणतत्पराणां भारतीयानां परानुकरणप्रसङ्गेन नियतमेव अभावा वर्द्धन्ते। आगच्छतिऽस्माभिरेतादृशः कालः समायास्यति देशेऽस्मिन् यस्मिन् आतिथ्यधर्म्मस्य नामापि लुप्तप्रायं भविष्यति। समुदारे च पाश्चात्यदेशे स्वचिन्ता एव प्रबला, पुत्रोऽपि न पितुर्मातुर्वा अन्नवस्त्रादिना परिपोषणं कर्त्तव्यमिति मन्यते। सङ्कीर्णे च भारतवर्षे विशेषतो धर्म्मशास्त्रेषु यानि भारतीयान् सङ्कीर्णभावापन्नान् कृतवन्ति यत्प्रभावाच्च सङ्कीर्णो दाताकर्णः अतिथिसत्कारार्थं प्राणेभ्योऽपि गरीयसः पुत्रस्य शिरः स्वयमकातरमेव चिच्छेद, सङ्कीर्णो ब्राह्मणः उञ्छवृत्तिर्नाम यदकरोदतिथिसेवार्थं तदपि सभ्यानां सुविदितमेव। सङ्कीर्णायाः शकुन्तलायाः अतिथिसत्काराकरणे यादृशी अवस्था सञ्जाता तदपि न अज्ञातं भवताम्। सन्ति च एतादृशानि बहूनि उदाहरणानि सङ्कीर्णतायाः देशेऽस्मिन् इतिहासादिषु ग्रन्थनिचयेषु। पाश्चात्यभावालोकेनालोकिताश्च बहवो नवीना उदारहृदयाः 'पितृसेवा मातृसेवा वा पश्चिमे वयसि वर्त्तमानयोस्तयोरवश्यं करणीयेति' नैव नियतकर्त्तव्यजातानामुदारतापरिपूरितानां चतिसम्भवादित्येवं मन्यमानाः विजयन्ते यदि च कुर्व्वन्ति सेवां तयोः सङ्कीर्णतामवलम्ब्य तर्हि विशेषेण प्रशंसार्हा एव ते इत्येवं मन्यन्ते। अहो सभ्यतायाः परा गतिः। श्रूयते पश्चिमे देशे भिक्षाविधिरपि नास्ति, भिक्षुकाः राजदण्डेन दण्डिता एव भवन्ति। देशेऽस्मिन् यत्र शिविहरिश्चन्द्रप्रभृतयः समुत्पन्ना आसन् तस्मिन्नेव भारतवर्षे अधुना तादृशी एव समुदारता पाश्चात्यालोकेन समायाता। यदि कश्चिद्भिक्षुकः, यः पुरा देवतुल्यः पूजनीय आसीद्, भग्नाशश्च गृहस्थेन नैव करणीय आसीत्, सोऽधुना समायाति गृहं गृहस्थस्य तर्हि 'नायमक्षमः, भारोद्वहनेन कथं नोपार्ज्जयति जीविकाम्? अस्मै यदि भोज्यं दीयते तर्हि अलसता एव समाश्रिता भविष्यति अतो न भिक्षवे भिक्षा देया' इति एव चिन्ता जायते मनसि गृहस्थानाम्। केचन

मन्यन्ते भिक्षुकाणां सहायता न करणीया यतस्ते स्वकर्म्मणां फलोपभोगं कुर्व्वन्ति। यतस्ते ईश्वरानुग्रहेणापि वञ्चिताः दीनहीनाः! अहो दशाविपर्य्ययो भारतीयानाम्! यो नाम दरिद्रः पुरा नारायणतुल्य एवासीत् पूजनीयः स च पाश्चात्त्यसभ्यताप्रभावात् दीनतया अवज्ञेयः। 'भवति विज्ञतमः क्रमशो जनः'। अलं दशाविपर्य्ययपर्य्यालोचनया। नवीने युगेऽस्मिन् स्वदेशप्रीतिर्देशेऽस्मिन् प्रवर्द्धत एव नवीनभावोन्मेषेण। आशास्महे भारतीयानां ये ये लुप्तप्रायाः भावाः तेषामपि उन्मेषः शीघ्रमेव भविष्यति इति। अनेन च अस्माकं अतिथिसेवायाः अपि आविर्भावः पुनरेव भविष्यतीति संस्मृत्य

येनास्य पितरो याताः येन याताः पितामहाः।
तेन यायात् सतां मार्गं तेन गच्छन् न रिष्यते॥ इति—

निवेदयामः।

---

श्रीयोगीन्द्रनाथविद्याभुषण विरचितः

# रासविहारः।

(पूर्व्वतोऽनुवृत्तः)

वदन्तीनामेवं समदनतनुः सस्मितमुखं
प्रियाणां प्रोवाच प्रियतमवचश्चारुवचनः।
प्रियाः प्रोचुर्य्यन्मयि सहृदयाः प्रेमचटुलं
समाश्रृण्वन् मन्ये तदिह दिविषद्विस्मयकरम्॥ ५१
परा शक्तिर्नारी त्रिभुवनसमर्च्यास्पदमसौ
विधाता संसृष्टा प्रकृतिपरमाद्या भुवमिमाम्।
परित्रातुं सञ्चालयितुमिह जीवान् प्रसवितुं
विना तां को वास्मिन् प्रभवति सिसृक्षां फलयितुम्॥ ५२

तयाद्याशक्त्याहं तदिह कुशली कर्म्मणि कृती
प्रभावैर्भावानां भवनिलयरत्नात्मकमिदम् ।
गुणैः सत्त्वाद्यैश्च प्रकृतिपुरुषात्मा प्रविदधे
विना तां शक्तिं मे भवति वपुरेतज्जड़मयम् ॥ ५३
वदन्नित्थं चक्री सह युवतिभिः क्रीड़ितुमना
विकीर्य्य स्वां मायामकथयदसौ ताः सुरसिकाः ।
कथं कालं व्यर्थं तनुथ शशिभासा सुललितं
वृथा वागारम्भैरपनयथ कालोचितरसम् ॥ ५४
निशेयं संभिन्दद्दलनिकरकुन्दालिधवला
तथा राकाशीतद्युतिकरभरामन्दशिशिरा ।
निकुञ्जोऽयं गुञ्जन्मधुकरघटाभिश्च रुचिरा
गतः कालो भूयो न भवति करस्थः क्वचिदपि ॥ ५५
यदर्थं युष्माभिर्न गणितमहो दुःसहभयं
त्रपा दुःखं मानो युवतिसुलभं प्रेमवशगाः ।
असन्दिग्धा यूयं सफलयत कार्य्यं तदधुना
सुखं दुःखस्यान्ते भवति परिपुष्टं बहुमतम् ॥ ५६
न युष्माभिर्ग्राह्यं परिहसितवाक्यं प्रियतमाः
द्वितीयो जीवात्मा भवथ मम यूयं कुतुकिनः ।
कुशाग्रं पादाब्जे यदि च भवतीनां निविशते
व्यथा तत् सञ्जाता मम हृदयमाक्रामति तदा ॥ ५७
इतिप्रायं प्रीत्या प्रणयरससिन्धूद्भवविधु
र्भणित्वा रामाभ्यः स्मितजनितपीयूषं समकिरत् ।
चकोर्य्यस्तां पीत्वा मनसिजमदोद्दीपनकरीं
नरीनृत्यन्तेऽस्मिन् जगुरतनुगीतिं कुलभुवः ॥ ५८
वरारोहा काचित् श्रवणयुगलस्पर्शिनयना
मृदङ्गं गम्भीरध्वनिनदगभं समधमत् ।

तत्रान्या सद्वेणुं मधुरस्वपरा रागनिपुणा
सुवल्लीं संवाद्य प्रियतममनो मोहमनयत् ॥ ५९

सुकण्ठी मुग्धान्या परभृतरुतस्पर्द्धिनिनदै-
र्निकुञ्जे तन्त्रीणां स्वरमिलितकण्ठं समदना ।
जगौ मालाच्छेदप्रकटितसुतालं रसमयं
सरागं सङ्गीतं ललितललितं श्रोत्रसुभगम् ॥ ६०

तदा काश्चिन्नार्य्यो मधुरकरतालीं करकृतां
यथातालं दत्त्वा नयनविशिखक्षेपरुचिरम् ।
समञ्जीरध्वानं मणिवलयशिञ्जैः सुमधुरै-
रनृत्यन् गायन्त्यो मधुमथनगाथासुपवने ॥ ६१

ततः कुञ्जाभ्यन्तर्दृषदि विवशा गोपललनाः
प्रमोदाद् विस्तार्य्य प्रमुदितहृदो दिव्यशयनम् ।
नवीनैः पुष्पौघैः शतदलदलैः कल्पितमहो
हृदीशं संवेश्य स्वयमपि च तास्तत्र विविशुः ॥ ६२

तदा काचिन् मल्लीकुसुमपटलीं सौरभमयीं
समाहृत्य व्यग्रा विरचितवती माल्यमतुलम् ।
निवेश्य ग्रीवायां प्रणयिन इहोत्फुल्लहृदया
परां प्रीतिं प्रापीत् तदनुपुलकैरञ्चिततनुः ॥ ६३

तदा काचिल्लाक्षाद्रवमयरसैः पादयुगलं
प्रकृत्या रक्ताभं नवकुवलयानां रुचिहरम् ।
मदैरैणैः सान्द्रैः सहमलयजैः कुङ्कुमदरै-
स्तथा गण्डं रम्यं मकररुचिरं चित्रितवती ॥ ६४

काचिच्चूड़ां शिरसि ललितां वर्हगुच्छैः सनाथां
वाहुद्वन्द्वे कनकवलयौ ताड़केयूरयुग्मम् ।
कर्णप्रान्ते स्वकरकलिते कुण्डले मौक्तिकान्ते
गोपीभर्त्तुर्हृदि च युवतिः कापि हारं युयोज ॥ ६५

अन्या रामा निविड़जघना कान्तिमत्केलिकुञ्जे
मन्दं मन्दं विकचकुसुमं जिघ्रता वायुनास्मिन्।
पर्य्याकीर्णे दिनमणिसुतावीचिसंश्लेषभाजा
गोपीनाथं रमयितुमना हावभावौ चकार॥ ६६
गुप्तप्रकाश्यकेलिर्यां क्रीड़ितुं कामये तया।
आविष्कुरुत गुप्तं मां कुञ्जाभ्यन्तर्लतावृतम्॥ ६७
अथवा प्रयते युष्मान् बहिष्कर्त्तुं प्रियंवदाः।
समावृणुत देहं स्वं क्वाप्यस्मिन् लतिकागृहे॥ ६८
इत्थं गोपीश्वरेणोक्तास्ताः क्रीड़ां कर्त्तुमीश्वरः।
बाढ़मित्यूचिरे तास्तु, हरिं रासमहोत्सवे॥ ६९
ततस्तास्ता नार्य्यो निजमभिमतं स्थानमचिरात्
सुगुप्तञ्चान्विष्य प्रियतमसकाशादुपवने।
लतागुल्मे काश्चित् कृतकगिरिदर्य्याञ्च पुलिने
तथान्याः कुञ्जान्तर्निभृतनिलये तस्थुरबलाः॥ ७०
अहो भ्रान्तिस्तासां सरलमनसां चञ्चलदृशां
हरिर्योऽन्तर्यामी सकलजगदात्माखिलपतिः।
ततोऽप्यन्तर्धातुं जगति नरसाधारणधिया
यतन्ते यन्नार्य्यस्तदिह हरिमायैव गहना॥ ७१
कुञ्जाभ्यन्तः सुनिभृतपदे निश्चलासु स्थितासु
स्त्रीषूक्तासु प्रणयरसभाक्चित्तवृत्तिर्व्रजेशः।
प्रत्येकं ताः समुपगतवानेकदैव क्षणेन
कक्षे कक्षे विलसति तदा मूर्त्तियुग्मं मनोज्ञम्॥ ७२
ततस्ता भामिन्यस्त्रिभुवनदुरापं निधिवरं
मिथः प्राप्य प्रेमार्णवतलसमुद्भूतमनघम्।
हृदि न्यस्यामोदं यमिह ययुरग्र्यं निरुपमं
न लभ्यो लोके स क्वचिदपि सुरैर्दैत्यमनुजैः॥ ७३

न जीवाः स्वर्गस्था अमरवनितासेवितपदा
न सौराः सोमीयाः कमलभवलोके कृतपदाः।
लभन्ते नैतादृक् सुखमनुपमं मुक्तिपदवीं
यथैवं संप्राप्ताः व्रजयुवतयः कृष्णशरणाः॥ ७४
अथासां गोपिशः प्रणयजलधेः पूर्णशशभृद्
विलूय ध्वान्तौघं चिरविरहजातं व्रजभुवाम्।
सुधाधाराकल्पैर्मृदुमधुरवाक्यैरकथय-
न्मृगाचीर्मुग्धास्ताः पुनरपि विहर्त्तुं कृतमतिः॥ ७५
विवस्वत्कन्यायास्तटभुवमिमां यात ललनाः
विहारार्थं तद्वै स्पृहयति मनो मे विधुकरैः।
विनिद्रैः कुन्दाब्जैर्यदिह रमणीयं परमहो
ततोऽपि स्निग्धं स्यादुदनलिनैर्वः सुललितैः॥ ७६
निशम्यैतत् काचिद्‌ युवतिषु तमूचे सुचतुरा
विचित्रं चातुर्य्यं तव दयित गोपीजनगणे।
यदीये नामान्ते न सति विधुवाच्यं पदमहो
कराग्रे पादान्ते द्विदशशशभृन्मूर्त्तिपटली॥ ७७
मुखं राकाशीतद्युतिरुचिहरं कामसुभगं
कटाक्षं कान्दर्पं प्रखरशरसन्धानमतुलम्।
करद्वन्द्वं रक्ताम्बुजजयि मनोज्ञं पदयुगं
भवेत् स्निग्धं तस्मिन् जयति किमु चास्मत्कुलमिदम्॥ ७८
इतः का श्लाघा नो जगति महती यत्तु भवता-
मपूर्व्यं दुष्प्राप्यं दिगधिपगणैः पूजितमिदम्।
पदाम्भोजं लब्धं त्रिभुवनधनं त्वत्करुणया
यदर्थं सन्त्यक्तं पतिसुतगृहाद्यं प्रियतम॥ ७९
ततस्ताभिः कृष्णः पुनरपि विहाराय रसभाक्
मनोवृत्तिं तासामकृतरतिदानोत्सुकतराम्।

अथैता: कालिन्द्या ललितलहरीनृत्यरुचिरे
रह: कूले रम्ये नवरसमकुर्व्वन् युवतय: ॥ ८०
कदाचिन्नारीभिर्नवभिरिह मातङ्गकृतिकं
विनिर्म्मायाकारं रसिकयुवको यामुनतटे ।
समारोहत् पृष्ठं गुरुजघनकुम्भे पदयुगं
निधाय स्मेरास्यो विहरणमकार्षीद्बहुविधं ॥ ८१
कदाचित्तोयान्तर्गतहृतधवां गोपललनां
हरिर्धृत्वा चोर्व्वोरुदहरदिमां कौतुकपर: ।
क्षणं नीरादूर्द्धं मदननृपदुर्गावधि तदा
कराभ्यामाच्छाद्य त्वरितमिदमेषा क्रियमगात् ॥ ८२
गृहीत्वा गोपीस्तास्तरणिमधिरूढ़ो रमसया
विहर्त्तुं कालिन्द्या लहरिषु नटन्तीषु बहुधा ।
प्रकाशं शीतांशौ प्रतिफलितदोषौ तु सलिले
मुदा दध्मौ वंशीं पुनरपि सरागं च विकिरन् ॥ ८३
तदा तास्ता: कान्ता मृदुललहरीनिन्दिनिनदै:
सतालं सङ्गीतं जगुरनघरागं शुभपदम् ।
निशम्यैवेदं तन्मिहिरतनया क्षणाहृदया
तरङ्गाणां व्याजादतनुत सुनृत्यं किमु मुदा ॥ ८४
ततो वामाकण्ठै: सहमुरलिरावैर्घनपथात्
सुधावर्षी जात: श्रवणविवरे गोकुलसदाम् ।
स एवासीद्धन्य: सुकृतपरमान्य: सुरनिभ-
स्तदा य: शुश्रावाच्युतमधुरगीतिं निरुपमाम् ॥ ८५
एवं विहृत्य भगवान् दशपञ्चमाहात्
हित्वा: निशा: प्रमुदित: प्रमदाभिरेष: ।
कन्दर्पदर्पमपनीय पुन: पुनर्वै
ता: पर्य्यतोषयदिदं भगवच्चरित्रम् ॥ ८६

पुण्या चतुर्व्वर्गफलप्रदायिनी लीलामयस्यास्य कथा पुरातनी ।
काव्यात्मिका रासरसोदयाश्रया श्रोतुर्विधत्ते सफलं हि मानसम् ॥ ८७

द्विजः श्रीयोगीन्द्रो रघुपतिगुरोरन्वयजनुः
प्रसादाद्वाग्देव्या गुरुशिवगजास्यासुरभिदां ।
शके चन्द्रासोरगविधुमिते षष्ठभवनं
रवौ याते काव्यं रचितमकरोद्रासविषयम् ॥ ८८

भट्टपल्लीवास्तव्यश्रीहरिपदभारतीशर्म्मणा प्रकाश्यते ।

---

# चन्द्रालोके

लेखकः—श्रीधूर्जटिप्रसादकाव्यतीर्थः

## षष्ठोऽङ्कः—शिविरद्वारम्

ततः प्रविशति खड्गपाणिर्वज्रशीर्षः

वज्र—निद्रा हि कं नाम नानन्दयति पुरुषम् । तथाहि

प्रियजनपरितापव्याकुलप्राणवृत्ति-
र्धनकनकविघाताद्दुःस्थभावाभिपन्नः ।
यदि भजति हि मर्त्त्यो मादृशः कोपि निद्रा-
मनुभवति कथञ्चिच्छान्तिमस्यां धरण्याम् ।

मम तु केवलं चिरवेलाप्रतिहारखिन्नात्मनोपि निशासु प्रधानादेशा-नियुक्तस्य जीवनं कष्टाय सम्पद्यते । तथाहि

निद्रायं नयनं निमीलति पदं नैकत्र सन्तिष्ठति
खड्गोऽयं सुदृढ़ं धृतोऽपि पततीवा सोऽवशो जायते
दीर्घं वर्षमिवाद्य याति घटिका तुल्या युगेन क्षपा
सेनानायकशङ्कितो न शयितुं शक्नोमि शान्त्या क्षणम् ।

(आकाशमवलोक्य) अहो अधुना रात्रेर्द्वितीयः प्रहरो विगतः। व्यतीतायाञ्च रात्र्यां युद्धारम्भो भविष्यतीति विदितवानस्मि प्रधानमुखात्; नियुक्तश्चास्मि दण्डिराजशिविरपरिरक्षणाय; किं करोमि; भवतु; स्वनियोगमनुपालयामि (शब्दं श्रुत्वा परावृत्य च) आः! किमिदम्; न्युब्जीकृतदेहभारा बहवः किल मानुषाकाराश्चञ्चलगतयो धावन्ति? (दृष्ट्वा) आम् एते वानरा एवं हन्त! जीवितोऽस्मि (परिभ्रमन्) समासन्नविपद्येवं प्रज्ञावतामपि बुद्धिर्विरुद्धा भवति। तथाहि,

समासन्नविपत्काले प्रज्ञा प्रज्ञावतामपि।
छिन्नधारासमापाते दीपशिखेव लीयते॥

(शब्दं श्रुत्वा) अये! तथैव कस्यायं पदन्यासात् पुनरपि मर्म्मरध्वनिः शुष्कपर्णानामिव शिविरमायाति (अग्रतो गत्वा साशङ्कम्) अप्ययं वानरः? नहि नहि। मानवो वा भविष्यति? तदपि न। भवतु; खड्गमुद्धृत्य निहन्मि (गत्वा) अरे रे चौरापसद! अयं न भवसि (इत्यग्रे गत्वा दृष्ट्वा च) आं; कश्चिदयं वृषभः? अहन्तु मिथ्याशङ्कितो भवामि।

जातमात्रेण जन्तूनां भीतिः स्वाभाविकी स्थिता।
सा हि धैर्य्यविवेकाभ्यां संस्तभ्या यत्नतः सदा॥

(दुन्दुभिध्वनिः) जानामि; सैन्यकटकेषु रात्रेर्द्वितीयप्रहरातिगमस्य वार्त्तां [illegible] वादकः। (शब्दं श्रुत्वा) अये! पुनस्तादृशः शब्दः शुष्कपर्ण[illegible]? तन्निपुणं पश्यामि। (दृष्ट्वा) अपि नाम द्वौ पुरुषाकारौ [illegible]ः। भवतु; सावधानो भवामि (दृष्ट्वा) कथं स्त्रियौ? [illegible]बध्वनारीमूर्त्तिधरौ यादववीरावेतौ दण्डिराजाश्वहरणा[illegible]; पश्यामि लतागुल्मान्तरितदेहः क्षणमात्र[illegible] तथास्थितः)।

ततः प्रविशति कल्पसुन्दर्या सह मेनका।

मेनका—हला! इध दूरदो ज्जेव एक्को पुरिसो विश्र पेक्खिदो सो दाणीं विश्रोणोत्ति अग्गदो हुविश्र पेक्खम्ह।

कल्प—हला! किं इदो तदो अण्णेसणेन; इध ज्जेव अम्हाणं व्वावार दंसणत्थी चिट्ठदि रुक्खन्दराले। (अग्रतो भूत्वा) अज्ज! दिट्ठिल्लित्ति आअच्छदु भवं; ण अम्हे परपक्खआत्ति सङ्कदु।

पुरुषः—(प्रविशन्नेव जनान्तिकं) हन्त हन्त दृष्टोऽस्मेताभ्याम्; तत् का गतिः; (प्रकाशं) के वा को वा युवां किमत्रागमनकारणं वा; सत्यमभिधीयेताम्। न चेदनेनैव कृपाणेन खण्डशः करिष्यामि।

मेनका—वीरपुरिस! मा दे सङ्का होदु; अम्हे इत्थिआत्ति किं ण पेक्खदि?

पुरुषः—(सावज्ञं) भद्रे! स्त्रियो हि यदेरं साधयन्ति नतु पुरुषास्तदल्पमपि जानन्ति। तथाहि

सुगूढ़ं निर्दहन्त्यन्तः संसारोपवनश्रियः।
अपूर्वं गरलं सृष्टं विधाता वरवर्णिनी॥

तत् कथय कथय किमत्रागमनकारणम्।

मेनका—अम्हे दक्खिणाअसविहं गच्छेम्ह। किं पि पओजणं विज्जद

पुरुषः—प्रयोजनमुच्यताम्।

मेनका—(स्वगतम्) किं कधेमि; आ एव्वं (प्रकाशं) अम्हे अवन्तीणअरवासिनीओत्ति विस्सवेहि, तेण सह रज्जस्स किं वि कज्जं वट्टदि।

पुरुषः—स्त्रीभिः सह राजकार्य्यमिति कथं सम्भाव्यते।

मेनका—दूदीमुहेण अमच्चआ किस विस्सावेदुं अरिहन्दि।

पुरुषः—(विमृश्य) भद्रे! नैतत् सुष्ठु मन्यामहे तदन्यत्र गच्छतम्; प्रतिषिद्धगमनानुमतिरहं न प्रवेशयितुमर्हामि।

उभे—अथ किं करेम्ह ; गच्छम्ह। (परिक्रामतः)

कल्प—(मेनकाकर्णे किमप्युक्त्वा) भद्द! एसा वि रअणावली दे लाहो अत्थि (इति कण्ठादुन्मोच्य दर्शयति)।

पुरुषः—(दृष्ट्वा स्वगतम्) अहो नु खलु भोः एवंविधा रत्नावली न कदापि दृष्टपूर्वा (सतृष्णं पश्यति)।

कल्प—अथ किं मन्तेदि भवं ; (मन्दारमाल्यं दर्शयित्वा) जइ णाम इमं मालिअं महाराअं णेदि, तदा एसा रअणावली तुह ज्जेव भविस्सदि।

पुरुषः—(स्वगतं) एषा रत्नावली तवैव भविष्यतीति वाचा नृत्यतीव निरन्तरलोभप्रतोदपीड्यमानं मनः। भवतु ; प्रबोधयामि। (प्रकाशं) भद्रे ! देहि मे कुसुममाल्यम्।

कल्प—गेह्ण एदं ; उवणेहि नं।

मेनका—(जनान्तिकं) सहि! जइ णाम एदं मालिअं प्पिअसहीए हत्थे ण पड़दि ; तदा सव्वं विफलं सम्पज्जइ।

कल्प—हला! किं त्ति सङ्काए ; जधा सा ज्जेव तस्स ; तधा सो वि ताए जीअणं सग्गं सुहं अ।

पुरुषः—आर्ये! क्षणमपेक्षेथाम् ; अयमहमागत एव (प्रस्थितः)।

मेनका—सहि! आआमिणि दिअहे सहीए सावविमोचणं भवेत्ति णिब्भरं आनन्दिदाम्हि।

कल्प—का सावविमुक्का वि अम्हाणं सङ्गिनी भविस्सदि ण वेत्ति सङ्केमि।

मेनका—अवि आसासि ; सा सही एत्तिअं कालं महाराए केरिसं अनुरत्ता।

कल्प—किं दाव वाआए ; पच्चक्खे गच्छ सव्वं जाणिस्सासि।

मेनका—जइ एव्वं ; ता सावविमुक्का वि ण गमिस्सदि सग्गं।

पुरुषः—(प्रविश्य) भद्रे ! त्वर्यताम् त्वर्यताम्।

मेनका—किं किं ।

पुरुष:—भद्रे ! मात्यावलोकनोत्पन्नप्रत्यभिज्ञा काचित् मत्स्यकामिना सह महाराजेन साह्लादं मामभिहितवती का नु खल्वेतत् पारिजातमञ्जरीमाल्यमधिगतमित्यहमपि तदाकर्ण्य सर्वमुदन्त जातमवदम् ।

काश्य···ता गेह्न एदं रअणमालिअं उवहिदं चदुस्समुद्दसारभूदं ।

पुरुष:—(सहर्षमवलोक्य) सुभं भवतु ; न खलु विस्मरिष्यामि एतन्नाम तस्या वा ।

मेनका—(सस्मितं) ण णाम ताह ; एदं तुह ज्जेव । ता अज्ज ! मग्ग दंसेहि ।

पुरुष:—इत इत: (किञ्चिदग्रे भूय) अनेन पथा कौवेरदिशं किञ्चिदिवगत्वा पुन: पूर्व्वदिशि सेनाकटकपथमतीत्य पुर:स्थितं पर्व्वतान्तर्निविष्टं शिविरं प्रविश्यताम् अहमपि यथानिर्द्दिष्टं कार्य्यमाचरंस्तिष्ठामि ।

(निष्क्रान्ता: सर्व्वे)

प्रवेशक: ।

---

षष्ठोऽङ्क: ।

तत: प्रविशति राजा ।

राजा—(सचिन्तं दीर्घं नि:श्वस्य) हन्त भो: कष्टं

राज्यं नष्टमगौरवं रविकुले प्रस्थानमेकाध्वना
प्रत्याख्यानमनाश्रयस्य पुरतस्तेभ्योनृपेभ्यस्तत: ।
तत्सर्वं मम सह्यवेदनमिहासह्यञ्चयुद्धे त्विदं
शक्तीनां मिलनेन यत् प्रियतमा शापाद्विमुक्ता भवेत् । (विमृश्य)

स्मिन्, नाम सा मध्यसहायकारिणी स्यात् स्वर्गगमनेन ; अथवा स्वयमनुभूतविच्छेदसन्देहसन्दोहमिथ्याप्रतर्कदोलायमानमतिः-निरन्तरपरिभावनयैवमुन्मनीभवामि।

(नेपथ्ये गीतिः।)

महुरं महुरेणुरञ्जिदं भमरी अवेक्खिअ।
चउरा महुगन्धसङ्गिनी महुरे सुरदे रमेदिअ॥

राजा—सन्ध्ये ; सखीजनसदालापसुखितापि मत्सङ्गसुखाशया मामेवाभाषते। तदलं कालव्यत्ययेन ; अहमप्येनां सम्भावयामि (गच्छन्नेव प्रतिनिवृत्तः) अये ! ससखीजना सेयमित एव मरालगामिनी खल्वागच्छति ; यावत् सम्भावयाम्येनाम् (प्रस्थितः पुनरुर्वश्या सह प्रविशति) प्रिये ! चिरकारितया त्वया तथा व्याकुलीकृतोऽस्मि न जाने त्वद्विप्रयुक्तस्य मे किं घटिष्यत इति।

उर्वशी—(स्वगतम्) अज्जउत्त ! ण केअलं तव ; मम वि (प्रकाशं) अदो ज्जेव चिन्दिदो विअ पेक्खीअदि अज्जउत्तो ?

राजा—(चिबुकं धृत्वा) इदानीं त्वदङ्गसङ्गसुधाभिषिक्तः पुनरुज्जीवितोऽस्मि—

यथा सान्द्रान् मेघान् खररविकरोत्तप्तवसुधा-
गतप्रायप्राणा हतकिसलयापीड़तरवः।
प्रकामं चार्वङ्गीं वयमपि चिरात्त्वां प्रियतमे !
प्रपश्यामस्तद्वत्प्रबलविरहाशङ्किमनसः॥

एतच्चान्यच्चापि चिन्ताकारणमिदं समरम् ; यतोऽस्मिन्नेव समरे त्वया सह मम विच्छेदो नूनं सम्पत्स्यति। ततः सूक्तमिदं कस्यापि—

जीवतां जीवनं नास्ति न धनं धनिनामपि।
न ज्ञानं ज्ञानिनां तत्र येषां स्याद्विरहो महान्॥

उर्वशी—अज्जउत्त ! अहं वि तधा चिन्दिदाम्हि।

राजा—मम यथा न तथा तव चिन्ताकारणम्।

उर्वशी—कठोरा पुरिषा बहुं जानिस्सन्दि; केअलं दे नाम रज्जं, घणं, अप्पाणं अ चिन्तेन्दि; ण प्पणअं।

राजा—प्रिये! किमन्यत्—

तद्राज्यं द्रविणञ्च तत् परिजनास्ते तत्सुखं तद्यशः
सन्त्यज्यैकपदेन यत् प्रणयिता लुब्धस्य नष्टानि मे।
सैवेत्यं परिशङ्कते यदि पुनस्त्वद्दग्धदेह! क्षणा-
दन्तस्तापहुताशने क्षिपतु हा प्राणान् विमानान् वृथा॥

उर्वशी—(स्वगतम्) एव्वं हि मारिसाणं दुस्सिआजणाणं अहिअं अहिमाणट्ठाणं (प्रकाशं) अज्जउत्त! देवदा एआरिसअणस्स कदा वि न प्पणअभङ्गं करिस्सन्दि।

राजा—प्रिये! न जाने यदि केनापि पुण्येन त्वत्प्रणयसुभगो भवामि; तदा—

राज्यं नश्यतु निन्दतु त्रिभुवनं शोचन्तु सर्व्वाः प्रजा
अलं यातु यशः सुधाकरकरस्तुष्यन्तु मद्वैरिणः।
वर्द्धन्तामशिवानि भास्करकुले पापाम्बुधौ मज्जतां
क्षोणी; देवि! तथापि मे प्रणयिनीसौभाग्यभोगक्षमा॥

उर्वशी—(स्वगतं) एदेहिं अक्खरेहिं एअदो जीविदाम्हि; अणदो अ एआरिस प्पणअजणविच्छेदसङ्काए अदिमेत्तं कादराम्हि (कृताञ्जलिः) भअवं! सव्वकलुसनासण! अणङ्ग! एदेण प्पणएण सहं मे जधा कदावि विरहो ण होदि तधा करेदु एसो दे अञ्जली (प्रकाशं) अज्जउत्त! दानीं प्पहादपवणो लग्गदिव्व सरीरे त्ति रअणीं प्पहादप्पाअं तक्केमि।

राजा—(आकाशमवलोक्य दीर्घं निःश्वस्य च) प्रिये! उर्वशी!!

उर्वशी—(सोद्वेगं) हा हा कधं अज्जउत्तो उम्मत्तो विअ जादो; अज्जउत्त! मा एव्वं दुक्खिदो होहि; देवा कधं वि णाम तुह असमञ्जारिणो भविस्सन्दि।

राजा—प्रिये ! शालापगमेन सह ममापि जीवनापगमनं शङ्कामहे।
उर्व्वशी—(करे धृत्वा) अज्जउत्त ! णिवारीअदु ; णिवारिअदु अप्पा।
राजा—देवि !

त्वदङ्गसङ्गशून्योऽयं कायमात्मा निवार्य्यते।
वरं विनिर्गतस्तत्र यायाद् यत्र गमिष्यसि॥

(नेपथ्ये दुन्दुभिध्वनिः)

प्रिये ! रात्रेस्तृतीयो यामो विगत इति निवेदयति महानयं दुन्दुभिध्वनिः। हा धिक् कष्टं ; त्वया सह चिराय मे विरहो भविष्यतीत्येवं चिन्तया मानसं धैर्य्येण संयमितमपि प्रबल-शोकभारेणोच्छ्वसितीव क्षणे क्षणे। (दीर्घं निःश्वसिति)

उर्व्वशी—अज्जउत्त ! एहि सिविराब्भन्दरं पविसिअ सुहेण णिसासेसं खपेम्ह।

(नेपथ्ये शङ्खध्वनिः)

कहं दानीं ज्जेव सङ्खसद्दो होदि।

राजा—अयं हि शङ्खध्वनिः सैनिकानां युद्धोद्योगं सूचयति।

(नेपथ्ये) भो भो ! मात्स्यमागधपाञ्चालकैकयप्रभृतयो भुजबल-निर्ज्जितारिशिरःसहस्रच्युतमणिमरीचिरञ्जितपादारविन्दाः ! महामानोद्दामप्रतापतापापाकृतशेषसूर्य्यरश्मयः क्षत्रप्रधानाः !

आश्लिष्य प्रणयात् परस्परमुरो विस्मृत्य वैरं चिरं
ज्ञात्वाजो विरजः-सुखञ्च मरणं संस्थाप्य धर्म्मे धियम्।
संस्तभ्यात्मनि साहसेन च श्रियं कीर्त्तिञ्च मत्वाक्षयां
पीत्वा भक्तिसुधारसं रणमहाक्षीरोदधौ मज्जताम्॥

राजा—(नेपथ्यमवलोक्य) एष स खल्वशरणशरण्यो महाक्षत्रियचन्द्र-कुलोद्दीपनो महानुभावो भीमसेनः समं भीष्मादिभिः समु-पायाति। तदेहि शिविरं प्रविशावः। (इत्युर्व्वश्या सह प्रस्थितः)

ततः प्रविशन्ति भीष्मद्रोणयुधिष्ठिरभीमसेनाः

भीष्मः—(परिक्रम्य) अहो नु खलु भोः

अगाधान्तः सिन्धुः किमु चलति वल्यानिलहतो
धरा क्षुद्राघातात् स्खलति किमु वा शेषशिरसः ।
पदस्पर्द्धाहोः किमु नदति सिंहो मदकलो
जगद्ध्वंसं कृष्णः किमिति कुरुतां स्त्रीग्रहमतिः ।

(द्रोणं प्रति) आर्य्य ! भगवता श्रीकृष्णेन सह विरोधः शुभ-परिणामो भवेदिति किमत्र भवान् मन्यते ।

द्रोणः—कुरुवृद्ध !

भक्तिरज्जुभिराबद्धः स हि किन्न युगे युगे ।
भक्तिर्यत्र जयस्तत्र भक्तिशस्त्रा यतो वयम् ॥

भीमः—(भीष्मं प्रति) आर्य्य ! इदन्तदेव स्थानम् ।

भीष्मः—(समन्ताद्विलोक्य) सुगुप्तमिदं ; तत् कस्मिन् देशेऽवतिष्ठते शिविरमवन्तीराजस्य ।

भीमः—आर्य्य ! पुरतो यदयं दृश्यते पर्व्वतपादान्तलग्नोऽनेकशिविर-सिन्धुकल्लोलः क्रमोच्छ्रितस्तस्य मध्यभागे विविधवर्णोज्ज्वलसूक्ष्मशिविर-मध्यमार्गेण किञ्चिदिव गत्वा पुरोवर्त्तिपर्वतगह्वरान्तर्निहितप्रकोष्ठे द्वारचतुष्टयसमन्विते दण्डिराजस्य निर्म्मितं शिविरम् ।

भीष्मः—(विलोक्य) वत्स ! क इमे मेघान्धकारनिलीनाः कलहंसा इव समन्तात् प्रविचरन्ति गिरि[illegible] ।

भीमः—इमे च धार्त्तराष्ट्रजरासन्धशिशुपालप्रभृतयस्तद्रक्षणार्थमुपरि पार्श्वयोः पृष्ठतश्चान्ये वीराः सावधाना धृतायुधा वर्त्तन्ते ।

सर्वे (अवलोकयन्ति)

भीष्मः—अप्यन्यानि चास्मत्सैन्यानि सुसज्जितानि ?

भीमः—भवदाज्ञया सर्वं सुसम्पन्नम् ।

भीष्म:—(द्रोणं प्रति) आचार्य्य! अपि जानाति भवान् अमराणां के नाम कं कं देशमलङ्कुर्व्वन्तोऽभियास्यन्ति ?

द्रोण:— सेनामण्डलसागरस्य पुरत: स्थास्यन्नसौ धूर्ज्जटि:
सव्ये वर्हिणवाहनो यदुपतिर्मध्ये समं ब्रह्मणा ।
वामे नाकसदां पतिर्दिगधिपै: सार्द्धं विशिष्टैर्बलै
स्तत्पश्चाद् यदुवीरनायकगणो योत्स्यन्त एवं श्रुतम् ॥

भीष्म:—(साश्चर्यम्) अहो! येषामिकैक एव सर्वं विश्वं प्रध्वंसयितुमेकपदेनैव प्रभवति फूत्कारेण; ये नाम सङ्कल्पमात्रेणैवागण्या स्त्रिभुवनरमणीया रमणी: स्रष्टुं समर्थास्ते किल कथं सम्भूयेमासुर्व्वशीं कामयमाना मिलन्तीति न जाने किन्तु नाम तेषां मनोगतमस्तीति

पापापविद्भुवनत्रयशासनार्थं
दीव्यन्ति ये सुकृतगौरवरक्षणाय ।
भूत्वाय कामवशगा लघुचेतसस्ते
नार्हन्ति जातु भवितुं न च पापवृत्ता: ॥

तन्मन्यामहे; कस्यापि शापविमोचनमेवात्र प्रधानतमो हेतु: ।

द्रोण:···को हि देवचरित्रं खिलीकर्त्तुं शक्यति ।

भीष्म:···वत्स! युधिष्ठिर!

युधि···आर्य्य! अयमस्मि ।

भीष्म:—वत्स! अनेकजन्मसाधनार्ज्जितमहापुण्यपरिपाकेण इदं मानवमात्रदुर्लभं मोक्षफलं समरमत्रापन्नमस्माभि: तदवहितैर्य्योद्धव्यम् ।

युधि— भवादृशमहाजनपादान्तपरिचारकैरस्माभिर्यथोपदेशमनुष्ठीयते समराहवेषु ।

भीष्म:—वत्स! सर्व्वथा परितुष्टोऽस्मि ।

द्रोण:—वत्स! वृकोदर! पणवानकपटहदुन्दुभिध्वनिमुखरा समरभूमिः क्रियताम्।

भीम:—यथाज्ञापयन्त्याचार्य्यपादाः (नेपथ्यमवलोक्य) भोः भोः क्षत्रियप्रधानाः!

शून्यं भालशिखात्रयं भुजयुगं पाशः कृपाणो मति
र्देहोऽस्त्वन्तकदण्डको दृढ़मनो वज्रं प्रदीप्तोज्ज्वलम्।
चक्रं वर्त्तुलचञ्चुरच्चरचिता माला चमूसंहतिः
शक्तिर्भक्तिरिहाष्टशक्तिसहितैर्देवैः समं युध्यताम्॥

भीष्म:—हन्त! प्रभातप्राया रजनी; तथाहि

चन्द्रः पश्चिमदिङ्मुखाञ्चलमपाकर्त्तुन्नतास्यः शनै-
र्गच्छन्नर्द्धपथे विलोक्य तपनं; तन्मित्रवर्य्येण च।
पुष्प्यत्पुष्पसुवासवासिततटे तद्वायुनालोकितो
हा हन्तेति वदन्निमीलति भयात्तत्रैव खिन्नः कृशः॥

तदागच्छत; समराङ्गनावतरणाय सज्जीभवेम।

निष्क्रान्ताः सर्व्वे।

इति षष्ठोऽङ्कः।

---

# संस्कृताभिनयदर्शनम्।

विदितमेव तत्रभवतां यदेषमो भाद्रे मासि वाराणस्यां निखिलभारतवर्षीयसंस्कृतमहासम्मेलनावसरे सम्मेलनसङ्घटकैर्मन्त्रिमुखैर्निमन्त्रिताः संस्कृतसाहित्यपरिषत्सदस्या रूपकप्रयोगमकुर्वन्। तत्रापि च वाराणसीस्थैर्बहुभिः पण्डितजनैरनुरुद्धास्ते केवलतत्रत्यपण्डितानां कृते वङ्गपल्लवां खेषां भरतशिल्पनैपुण्यं प्रकटयामासुः। पण्डितानां

शोभनं समवायं दृष्ट्वा महामहोपाध्याय-पण्डितराज-कविसम्राट्-श्रीयादवेश्वरतर्करत्नपादैः कानिचित् काव्यकुसुमानि विचितानि तेषामत्र निवेशनं क्रियते। एतद्दर्शनात् वर्त्तमानविदुषां बहूनां स्वरूप-परिचयादिकं ज्ञास्यते—

लेखकः महामहोपाध्यायपण्डितराजकविसम्राट्
श्रीयुक्तयादवेश्वरतर्करत्नः

काश्यां विश्वेश्वरस्य स्मरतनुसमिधो नेत्रमुद्यत्कृशानो-
श्चण्डं कुण्डं कपाले ज्वलदिव हविषा विभ्रतो भीममूर्त्तेः।
कर्णे मन्त्रं मुमूर्षोरवनतशिरसो दातुमिच्छोर्जटाभ्यो
गङ्गाया निष्पतन्त्या इव तटभुवि यो विश्वविद्यालयोऽस्ति ॥१
तस्यासन्नैः सदस्यैरभिनवमवनोपालपाणिप्रसादे
प्रासादे सारदाया रचितमिह सदः संस्कृतव्याहृतानां।
मालव्येन स्वदेशाभ्युदयमिव सदा ध्यायता तस्य पत्या
भक्त्याहूताः सदस्याः परिषदनुगता देवभाषैकवश्याः ॥२
स्वार्थैरस्वार्थचित्तेन च किल विदुषा वेदतीर्थेन तीर्थे
निश्चाद्यं कान्तमन्त्यं सुनिशितमतिना विभ्रता नाम तेन।
आहूयानुष्ठितस्तानभयमभिनयस्तत्र साहाय्यकर्त्ता
तेषां त्राता स ताराचरणकविवरः सोऽस्ति चिन्तामणिश्च ॥३
साहाय्यं तत्र वामाचरणबुधवरस्तर्कतीर्थश्च कुर्व-
न्नासाद्याप्यानुकूल्यं कलयति कमलावत्प्रसादाभिधानः।
अन्ये च्छात्रा जवेन स्फुरितयवनिकाद्यारि वध्नन्ति चैवै
स्तत्राप्यन्ये कृतार्थास्तदुपकरणकैर्व्वाद्ययन्त्राणि नीत्वा ॥४
विद्यापीठे पृथिव्या जनकनरपते राजधान्यां स धन्यो
जातो यः सोऽतिधन्यो जगति परिचितो यो हि विद्योद्यतश्रीः।
तत्रत्यो यो निधत्ते बहुषु बहुगुरुः पाणिनीयादिषूच्चैः
शास्त्रेष्वच्छामभिख्यां स जयति जयदेवाख्यमिश्रः पुरस्तात् ॥५

उच्चैरुच्चावचानां विलसति स समाहार एकत्र सर्व्वैं
र्यादोरत्नैर्जनानामिव लवणकर्षोर्व्वारिधे र्भारतस्य।
यः सूचीस्तस्य तेषां शुचिरिव सुशुचिर्निर्म्ममे कर्म्मदक्षो
योऽवन्यां वङ्गवाख्या कति कति विषयान् सन्निबन्धान् लिलेख॥६
योऽजस्रं देववाख्या रचयति कविता भावसम्पद्विशुद्धाः
सालङ्कारा रसाढ्या रविरिव सुरचीर्व्वारिधारा इवाभ्रः।
स्वान् शिष्यान् यः सदार्त्तान् स्वगयति च पुरः संयमी संयमिन्या
चन्द्रान्तां यो जयाख्यां जयति दधदयं सोऽपि भात्यत्र सतो॥७
योऽर्हत्यर्घ्योऽक्षराणां पठितुमपठिताः पुस्तकस्यापि पङ्क्ती
र्हास्यं यस्यास्यपद्मे निवसति च चिरं चित्तभूमौ प्रसादः।
निर्व्वैरो निर्व्विकारो मनसि च भजते धैर्य्यमार्य्योचितं यो
वीर्य्यं शौर्य्यञ्च कामादिषु रिपुषु सदा यस्य चान्यत्र नास्ति॥८
यस्य ख्यातिः समन्ताद् भरतनरपतेर्भूतलं व्याप्तमेतत्
न्यायाचार्य्योऽर्य्यमेव ज्वलति स महसा हेमकान्तिः सशान्तिः।
भ्रान्तिर्न न्यायशास्त्रे न पुनरहमिका यस्य मेधा च मेध्या
विश्वङ्नामा स वामाचरण इह समायात एषोऽग्निहोत्री॥९
कृष्णान्तां यो जयाख्यां जयति दधदयं वैद्यकुद्दालभट्टा-
चार्य्याणां चूड़चूड़ामणिरवनितले हव्यकव्यैरशेषैः।
अर्च्चयन्ते यस्य गेहे किल सुरपितरौ ज्योतिषि ज्योतिरास्ते
यस्य स्मार्त्तस्य वैयाकरणसुकृतिनः काव्यविद्या च सोऽस्ति॥१०
भाष्यं न्यायस्य वात्स्यायनमुनिरचितं गाढ़बन्धान्धकारं
सन्दर्भैर्दर्भगर्भं वनमिव गहनं पण्डितानामगम्यं।
व्याचख्यौ ख्यातिपुष्पाञ्जलिभिरपचितो गूढ़मर्थं निकृष्य
स्मार्त्तग्रन्थेषु यस्य स्फुरति च सुमतिः शाङ्करे दर्शने च॥११
जग्राह ग्राहभीतौ निजजनुरवनौ केवलं ब्राह्मणेभ्यो
नादत्तेऽस्यां हि काश्यां तदपि जनपदं पावनं योऽप्यपावीत्।

पत्नैव प्रादान्निवापान् य इह हरपुरे मातृवत् पाति पुत्रान्
सोऽयं सन्नासनस्थो विलसति फणिमद्भूषणान्ताभिधानः ॥१२
यः प्रातश्चापराह्णे चरणसहचरः प्रोत्तरन् दीर्घमार्गं
गत्वाऽध्यापयत्यप्यनलसवचसा द्वौ मठौ तत्र तत्र।
नीवारान्नञ्च भुङ्क्ते कथमपि हविषा सर्व्वमन्यन्निवार्य्या
चार्य्याचारं विचार्य्य स्वयमिव वृणुते वेदनिर्व्वेदविद्यां ॥१३
यः प्राग्ग्रन्थानुदग्रानरचयदधनः काव्यधाराञ्च विद्वान्
कालापानां गुरुर्य्यो जयति मखवतामग्रणीरग्निहोत्री।
धत्ते नाम्नाऽन्नदाय्यं चरणपदमदस्तर्कचूडामणिर्य्यः
साक्षात् कर्त्तुं समेत्याभिनयसमयमिमं भ्राजते तत्र सोऽपि ॥१४
तर्काम्भोधिश्च कुम्भोद्भवविबुधमुनेर्न्यायरत्नस्य कीर्त्ति-
स्तम्भो यः काशिकायां स्पृशति जलधरस्यापि पन्थानमुच्चैः
नव्यन्यायेषु सम्यक् प्रविशति निशिता सूचिवद् यस्य बुद्धिः
सश्रीः श्रीशङ्करोऽसौ स लसति परिषत्संस्थितो लोकनाथ ॥१५
योऽयं लेभे लिखित्वा कुसुममिव यशो वङ्गवाण्या निवन्धान्
हर्षेणापि प्रवर्षत्यमरवरगिरा काव्यपीयूषधाराः।
भक्तो राखालदासे विदुषि दृढ़तरा न्यायरत्नेऽस्ति यस्य
स्मेरास्यः सन् कदापि द्रवति हरिहरः साऽश्रुनेत्रः कदापि ॥१६
प्रीतश्यामासरोजाचरणकविवरो विद्यते वृद्धवैद्यो
र्व्विद्वद्भिस्चापि सेव्यो ज्वलन इव परस्तस्य सूनुः कृशानोः।
नाम्ना विश्वेश्वरो यः स च लसति पुरस्तर्कपञ्चाननोऽन्यः
श्यामाकान्तः प्रशान्तः स पुनरतितरां भ्राजते पण्डितेन्द्रः ॥१७
मार्कण्डेयः स वैयाकरण इह कृती पिण्डितं पण्डितत्वं
विभ्रच्चण्डांशुकल्पः सदसि विलसति प्रीतिमन्नीलकण्ठः।
राधाकान्तोऽपि शान्तो वसति वुधवरस्तार्किकोऽलार्ककान्ति
र्व्विद्वान् विद्याधरोऽग्रे सुविदितविलसद्वेदविद्यो विभाति ॥१८

स्पृष्ट्वा पादेन कृष्णा जनयति कमलं यस्य चेतस्ततीव
श्वेतोद्दीनं हि धत्ते कमलपदमदः कृष्णमन्त्यं स्वनाम।
गोपीनां पीनतुङ्गस्तनतटरसिको यं ययौ वीक्ष्य रासं
गोपीचन्द्रस्तदिन्दुः स स स च समितौ द्वौ चकास्तः पुरस्तात् ॥१८

वेदज्ञः संश्रितं स्वं दधदपि विजयं चन्द्रशेषं विशेषं
सोऽयं सायं समेत्य प्रभवति पुरतः पारदर्शी महात्मा।
मार्कण्डेयादयः प्राक् सदसि कुरुपतेर्विश्वरूपस्य विष्णो
र्द्रष्टुं रूपाणि जग्मुस्त इह समुदिता वीक्षितुं तस्य तानि ॥२०

राजा पश्यन् समन्ताद् भुवि दिवि च वहून् देवकीनन्दनांस्ता
नग्रे दुर्य्योधनोऽसावभिनयति मुहुर्विस्मयं दृश्यमानः।
तांस्तान् सर्व्वान् न पश्याम्यहमपिच पुनर्देवकीनन्दनौ द्वा
वालोक्यैव प्रसीदाम्यहमिह युगपद्दृष्टदृश्यप्रभेदात् ॥२१

आकाराचारचारुः सुरुचिरवचनो यश्च चारित्रहारी
सञ्चारी यस्य राजावसथपरिसरे यस्य सम्यग् विचारः।
वृन्दैर्वृन्दारकाणामवति निपततां वन्दनीयेऽन्धकारी
स्वानन्दैः स्यन्दमानं हृदयमुपहरन् देवकीनन्दनः सः ॥२२

पाश्चात्त्या दाक्षिणात्या मतिमथितगुणा मैथिलाः शैलशाला
वङ्गीयाश्चापि रङ्गालयसदसि गताः कोविदाः केऽपि काश्याः।
येषां प्रोड्डीय शश्वन्नभसि सुयशसां शुभ्रपारावतानां
पारावारस्य पारेऽपि च भुवि निवहाः सञ्चरन्तो रमन्ते ॥२३

गर्व्वान्धस्यान्धकूपे प्रकुपितमनसो मज्जतो दुर्ज्जनस्य
स्मेरास्यस्यापि दुर्य्योधनधरणिपतेश्चेष्टितैस्तैस्तैश्च।
मन्त्रैर्दुर्म्मन्त्रिमुख्यैः सह सदसि गतैरुद्धतोक्तैः सहासैः
पाञ्चाल्यास्तत्र चित्ते प्रणिहितनयनस्यापि नेत्रस्य भङ्ग्या ॥२४

कश्च कुगतिं निशम्य ज्वलत इव वलेनोद्यदुद्दामधाम्नः
साम्नो नाम्नापि कोपं नवमभिनयतस्तां तथास्याप्यवज्ञां।

तैस्तैश्चेष्टाविशेषैर्मुहुरभिभवतस्तस्य दक्षाभिनेतुः
गर्वोच्चैर्दुःखतोऽहं तमिव हृदयं तत्र सामाजिकानां ॥२५
दूतं क्रुद्धं सतृष्णं सपदि परिषदः पश्यतां प्रोत्थितानां
मालोक्यैतानि राज्ञः कुपितफणधरस्येव निश्वासपङ्क्तिः।
क्रुद्धान् दृष्ट्वा समन्ताद् भुवि दिवि च बहून् विस्मयोरोमहर्षः
कर्षत्येवं मनो नः प्रसभमभिनयो भाति भावाभिनेतुः ॥२६
अङ्गीकुर्व्वन् हि रङ्गे रसपटुरपरो वासुदेवाङ्गभङ्गीं
वङ्गीयो मङ्गलार्थं तरुणतरतनुर्गुम्फगुम्फं प्रतन्वन्।
कार्य्योद्धाराय पूर्वं विनयमभिनयन् सत्समाम्नायसाम्नो
वादं राज्ञे प्रदर्श्योद्धतमतवचसे ध्वान्तमूढाय तस्मै ॥२७
सोऽच्छिन्नं पत्रेण चक्रं चकितमुकुलितैर्लोकितं स्वैः सहस्रै-
र्गाङ्गेयाद्यैश्च पाद्याम्बुभिरिव नयनैरश्रुभिः पूर्णगर्भैः।
विद्युद्वह्निस्फुलिङ्गाननिशमतितरामुद्वमन्तं समन्तात्
तस्थौ तस्यां सभायां कुरुकुलनृपतेर्घूर्णयन्नर्णवाभः ॥२८
विश्वचक्रं पुरस्तात् स इव रसपटुस्तेन चक्रेण तुल्यं
घोराभ्राभेण विद्युद्विजड़ितवपुषा भ्रामयन् भ्राजते किं।
अग्रे राज्ञामप्यवज्ञां स सपदि तनुते चेष्टितं यत् प्रदर्श्य
तत् सर्व्वं गर्वगर्भं विलसति विदुषां हृदिदं दर्शकानाम् ॥२९
आस्तां दूरे वराकः पितुरपि वचनेनानुरुद्धोऽवरुद्धो
नावज्ञातुं समर्थो भवति पुनरयं मातुराज्ञां कदापि।
इत्याद्युक्तिं प्रसह्य प्रणिगदति पटुः साधु तत् साधु तत्तत्
घाटोत्कचः सुचेष्टाः परिषदि वसतां मानसं नो हरन्ति ॥३०
तस्यैवाम्बा हिड़िम्बा विजड़िततड़ितोरूड़ुभिर्गाढ़वद्धा
घोराकाराम्बुधाराधरविपुलवपुः कौणपी कम्बुकण्ठी।
कुम्भस्तन्यम्बुजाक्षी विगलितचिकुरा क्षौमवासो वसाना
सौम्या भीमापि भीमं प्रणमति पदयोर्य्यत् पतित्वापि भूमौ ॥३१

आलोक्याप्यत्र पुत्रौ रजनिचरवरो विस्मयस्फारनेत्र:
निर्णीयाकर्ण्य मातु: पितरमिममयं यश्च भावं व्यनक्ति।
पित्रोराज्ञां स लब्ध्वा प्रणिपतति पुन: कृष्णतो विप्रमुख्यं
तौ द्वौ चित्ते च चित्रं जनयत इव नस्तस्य तावज्जनस्य ॥३२

सौम्यां भीमाच्च भैमीमभयमभिनयन् भूमिकां रङ्गभूमौ
क्रोधोद्यद्रौद्रमूर्त्तिं त्वपरपटुवरो गारुड़ीं वेगरूढ़िं।
आर्त्तत्राणं स्वदर्पादपदिशति परं रोमहर्षैश्च हर्षै-
र्व्वधास्यत्रात्मानमेवं सकलमभिनयं तावदत्रावलोक्य ॥३३

कञ्चुक्याकुञ्चिताङ्गं भयमभिनयतो मस्तकस्यापि कम्पं
ब्राह्मण्या ब्राह्मणस्यापि च भयजड़ितं तन्वतो देहबन्धं।
आलोक्याग्रे वटूनामभिनयपटुतां भीमसेनस्य सूनो
र्भावव्यक्तिर्विभक्ता हरति किल तदा मादृशां तादृशाञ्च ॥३४

ये ये विद्यानवद्या अभिनयपटवो भूतभर्त्तु: प्रसादात्
ते ते स्वास्थ्यैश्च सौख्यै: स्वजनपरिजनैर्दीर्घमायुर्लभन्तां।
अम्लानं पुण्डरीकं सितसुरभियशश्शोभिषा नन्दयाम
स्तानन्यांश्चापि ते तेऽभिनयनपटवस्ते च विद्यांसजन्ताम् ॥३५

---

# सनातनधर्म्मरक्षासमितिः

## अनुष्ठानपत्रम्

विदितचरमिदं सर्वेषां पण्डितानां लौकिकानां च, यदिदानीं धर्मतत्त्वविषये बहुधा बह्वो विप्रतिपद्यन्ते इति इदानींतनैर्बहुभि-रुपक्षिप्यमाणानां युक्तीनां पर्यालोचनेन पण्डितानामपि कथमपि धर्मतत्त्वविनिर्णयो नियतं कर्त्तव्यः समापतित इति। एतदर्थं च पश्चिमखान-देशस्थकुक्कुरमुण्डासंस्थानाधिपतिभिः हरिभक्तिपरायणैः श्रीसन्तोजीमहाराजसाधुमहोदयैः तथा सोनगीरसंस्थानाधिपतिभिः हरिभक्तिपरायणैः श्रीकेशवदत्तमहाराजसाधुमहाशयैश्च काचन सभा सनातनधर्मोज्जीविनी नाम सम्प्रतिष्ठापिता। तया च समित्या धर्म-तत्त्वविनिर्णयार्थं तत्तद्देशीयानां प्रसिद्धानां सर्वेषां पण्डितानां मेलनेन सम्यक्समालोचनेन च सर्वविधसाधकबाधकयुक्तिविचारपूर्वकं निष्पक्ष-पातं कश्चन महान् निबन्धः सम्पादनीय इति विनिर्णीयाधोनिर्दिष्टानां पण्डितानां समितिर्नियोजिता। तदनुमत्या वयमिदं प्रार्थयामः, यत् करिष्यमाणे धर्मतत्त्वविनिर्णये सर्वेषामेव साहाय्यके सति पण्डितैरना-यासेनैतत् कार्यं कर्त्तुं शक्यम्, यावत् परपक्षाणां स्वरूपं यायातथ्यतो न परिज्ञातं भवेत् तावत् तेषां कथं विचारः शक्येत कर्तुम्, अतः सर्वेऽपि लौकिकाः पण्डिताश्च भृशं प्रार्थ्यन्ते साधकं बाधकं वा यत्किमपि स्वाभिप्रेतं सम्यग्विशदीकृत्याधोनिर्दिष्टानां प्रश्नानां यथोचितो-त्तरदानमुखेन निबन्धद्वारा प्रेषयन्तोऽस्मानुपकुर्वन्त्विति। सुमहत्यस्मिन् कार्य्ये वयं विश्वसिमो यत् सर्वेऽपि सोत्साहं ससौहार्दं च यथाशक्ति स्वीयं साहाय्यं सम्पादयेयुरिति। अन्ते पुनरपीदमेव विनिवेदयामो यत् सन्दिग्धमतीनां सर्वथा संशयापनोदनमेव केवलं प्रयोजनमुद्दिश्य प्रवर्त्तमानानां धर्मपरायणानां श्रीसन्तोजीमहाराजानां तथा श्रीकेशव-दत्तमहाराजानां च विद्यमानमतीवोत्साहं समुपलक्ष्य सर्वेषां पण्डितानां

च साहाय्यं भावि मनसिकृत्य च वयमत्र कार्य्ये प्रवर्त्तामहे इति यथोचितं साहाय्यदानेन सफलीकर्त्तव्येयं प्रवृत्तिरिति।

ग्रन्थप्रणयनसमितिकार्य्यकारिणः।

म० म० पण्डितवर यादवेश्वरतर्करत्न भट्टाचार्य्याः, काशी।
म० म० पण्डित प्रमथनाथतर्कभूषण भट्टाचार्य्याः, काशी।
" " " नित्यानन्दपन्त पर्वतीयाः, काशी।
" " " मुरलीधरझा महोदयाः, काशी।
" " " वामाचरणन्यायाचार्य्याः, काशी।
" " " पद्मनाथ भट्टाचार्य्याः, गौहाटी।
" " " जयदेव मिश्र महोदयाः, काशी।
" " " अधोरनाथशर्म्माणो ज्योतिर्विदः, काशी।
" " " अन्नदाचरण तर्कचूड़ामणयः, काशी।
" " लक्ष्मण शास्त्रिणो द्राविड़ाः, काशी।
पण्डितप्रवर पञ्चाननतर्करत्न महोदयाः, भाटपाड़ा।
" नित्यानन्द मीमांसकाः, काशी।
" फणिभूषण तर्कवागीशाः, काशी।
" वीरेश्वर शास्त्रिणो द्राविड़ाः, काशी।
" पद्मनाभ शास्त्रिणः, काशी।
" रामभवन पण्डिताः, काशी।
" अम्बादास शास्त्रिणः, काशी।
" श्रीशङ्कर तर्करत्न भट्टाचार्य्याः, काशी।
" हरिनारायण त्रिपाठिनः, काशी।
" गणपति शास्त्रिणः, काशी।
" चन्द्रधर शर्म्माणः, काशी।
" अच्युतानन्द त्रिपाठिनः, काशी।
" कविदेवीप्रसादशर्म्माणः, काशी।

" सीताराम शास्त्रिणः, कलकत्ता।
" माधवशास्त्रि भाण्डारिणः, काशी।
" वेदान्तविशारदा अनन्तकृष्ण शास्त्रिणः कलकत्ता, सम्पादकाः।
" न्यायाचार्य राजेश्वर शास्त्रिणः, काशी, उपसम्पादकाः॥

प्रश्नाः।

(१) हिन्दुत्वव्यपदेशनियामका धर्माः के? सनातनधर्मानुयायीमात्रवृत्ति हिन्दुत्वमुत इदानीं ये ये हिन्दुपदव्यपदेश्या भवन्ति तत्साधारणम्?

(२) धर्मतत्वविनिर्णयः केवलं युक्त्यधीन उत शास्त्रनिबन्धनः?

(३) युक्तिभिरुपलब्धस्यार्थस्य बोधनार्थं शास्त्रं प्रवृत्तमुत युक्त्यनपेक्षया तत् प्रवृत्तम्? शास्त्रयुक्त्योर्विरोधे कस्य प्राबल्यम्?

(४) शास्त्रपदेन किं वेद एव विवक्षित उत स्मृतिपुराणेतिहासशिष्टाचारा अपि? वेदपदेन मन्त्रभागस्यैव ग्रहणमुत ब्राह्मणादेरपि?

(५) शास्त्रार्थनिर्णयो मीमांसापरिभाष्या सम्पादनीय उतैतिहासिकशैल्या?

(६) क्रियाणां स्वरूपतो धर्मत्वमुत फलविशेषसाधनत्वेन?

(७) धर्मस्य फलं दृष्टमदृष्टमुभयं वा?

(८) अदृष्टफलानां धर्माणामधर्माणां वा देशकालपरिस्थितिमनुसृत्यान्यथा परिवर्त्तनं फलपर्यवसायि भवितुमर्हति न वा?

(९) धर्मज्ञसमयः प्रमाणमित्यत्र के धर्मज्ञाः? तेषां धर्मव्यवस्थापकत्वं शास्त्रमनुसृत्योत स्वतन्त्रम्? धर्मज्ञैः कदापि कस्यापि धर्मस्याधर्मस्य वा देशकालस्थितिमनुसृत्य परिवर्त्तनं कृतं न वा? यदि कृतम्, कस्मिन् समये कस्मै प्रयोजनाय कैर्धर्मज्ञैस्तत् कृतम् कानि चात्र प्रमाणानि?

(१०) आपद्धर्म इत्यत्र आपत्पदेन कीदृशी आपद्विवक्षिता ? आपद्धर्माः शास्त्रेषु परिगणिता न वा ?

(११) इदानीं हिन्दुजनसङ्घात् ग्रासादिपरिहारः कृतप्रायश्चित्तानां पतितानां स्वधर्मानुष्ठानयोग्यतास्वीकारमात्रेणाकृतप्रायश्चित्तानामपि दृष्टव्यवहाराय हिन्दुत्वव्यपदेशस्वीकारमात्रेण च सम्भवति वा उत स्वस्वपूर्वतनजातिषु विवाहादिगुरुतरसंसर्गव्यवस्थापनेनैव भवति ? कृतप्रायश्चित्तानां पतितानां पृथक् तयाऽवस्थापनं हिन्दुत्वसंरक्षणेन यदि क्रियते तर्हि का नाम हानिः ? अत्र कीदृशः शास्त्रीयो विनिर्णयः ?

(१२) इदानीं हिन्दुनामपेक्षितं सङ्घटनं यथावत् शास्त्रार्थानुष्ठानेन सम्भवति न वा ? यदि न सम्भवति तर्हि कस्य धर्मस्य कीदृशं परिवर्त्तनमपेक्षितम् ?

(१३) आचारभेदो जातिभेदश्चेदानीन्तनवैमत्ये कारणमुतान्यत् ?

(१४) पूर्वाचार्यैः केन निमित्तेन कस्मै प्रयोजनाय च जातिभेद आचारनियमो जीविकानियमश्च परिकल्पितः ? सत्यपि जात्यादिभेदे पूर्वतनकाले कदापि ऐकमत्यमासीन्न वा ?

(१५) चातुर्वर्ण्यं कर्मकृतमुत जन्मकृतं ? मतद्वयेपि साधकबाधकानां वचनानां कथमविरोधः ? सङ्करजातीनां परिवर्तनं शास्त्रोक्तं न वा ? जन्मवैचित्र्यं पूर्वकृतशुभाशुभकर्मफलं न वा ?

(१६) शास्त्रबोधितस्वर्गनरकादिलोकान्तराणां सद्भावोऽस्ति न वा ?

(१७) अधोनिर्दिष्टानां आचाराणां किं दृष्टं कामक्रोधादिकं मूलमुताऽदृष्टोपयोगित्वेन श्रुतिरेव मूलम् ?

१ अस्पृश्यास्पर्शः।

२ अस्पृश्यानां देवालयादावप्रवेशः।

३ स्पृश्यकूपोदकादिष्वस्पृश्यानामसंव्यवहारः।

४ चातुर्वर्ण्यविवाहविशेषाः, विधवानां पुनरनुद्वाहः।

५ समुद्रयाननिषेधः ।
६ मतान्तरप्रविष्टस्य पुनरपरिग्रहः ।
७ वेदाध्ययनाधिकारस्यासार्वजनीनता ?
८ भक्ष्याभक्ष्यविवेकः ।
९ विधवानां केशवापः ।
१० संस्काराचारभेदाः । इत्येवमादयः ।

एतेषां प्रश्नानां यस्यां कस्यामपि भाषायां समुचितमुत्तरं शतानधिकपृष्ठैर्निबन्धरूपेण प्रेषयतां तत्र प्रबन्धैस्तैरुल्लिखितानां साधकबाधकयुक्तीनां तारतम्यपर्यालोचनेनोत्कृष्टानां त्रयाणां प्रबन्धानां कृते क्रमशः १००), ७५), ५०), रूप्याणि पारितोषिकतया वितीर्येरन् । अपेक्षिताश्च निबन्धा जनवरीमाससमाप्तिमदिवसात् प्राग् यथा प्रेषिता भवेयुस्तथा प्रयत्नः कर्तव्य इति प्रार्थयामः ।

एतद्विषयकः सर्वोऽपि व्यवहारः पत्रमुखेन एतत्समित्युपसम्पादकनाम्ना करणीय इति निवेदयामः ।

कार्तिक कृ ८ शुक्रवासरे सं १९८०
धर्मग्रन्थप्रणयिनीसमितिकार्यालयः
श्रीवल्लभरामशालिग्रामसाङ्गवेदविद्यालयः
रामघाट, काशी ।

अनंतकृष्णशास्त्रीवेदान्तविशारदः
सम्पादकः ।
श्रीराजेश्वरशास्त्री द्राविडः
न्यायाचार्यः
उपसम्पादकः ।

## समालोचनम् ।

फिलोसफिप्रबन्धः । प्रथमखण्डम् । महामहोपाध्यायश्रीयुक्तदुर्गाचरणसांख्यवेदान्ततीर्थेन प्रणीतम् । ७८।१ पद्मपुकुर रोड, भवानीपुरतः श्रीसुरेन्द्रनाथभट्टाचार्य्येण प्रकाशं गमितम् । मूल्यं सपादरूप्यकमात्रम् ।

परिषत्पत्रिकान्यतरसम्पादकेन महामहोपाध्यायमहोदयेन कलिकाताविश्वविद्यालये श्रीगोपालवसुमल्लिकफेलोरूपेण (Sree Gopal

Basu Mallick Fellow) कृतानामादिमहायनीदवक्तृनानां संग्रहरूपमिदं पुस्तकमधिगतम् अस्माभिरधीतञ्च।

अत्र ब्रह्मविद्यानिरूपणरूपं वेदान्तस्य मूलतत्त्वं सरलवङ्गभाषयोपनिबद्धम्। दुर्बोधान्यपि दर्शनतत्त्वानि अत्र तथा सरलसरलया भाषया निपुणया च शैल्या सन्निवेशितानि यथा अविदितसंस्कृतभारतीका अपि वेदान्ततत्त्वजिज्ञासवो जना अल्पेनैव आयासेन पुस्तकमिदधीतवन्तो वेदान्तमूलतत्त्वानि सम्यगधिगन्तुं प्रभविष्यन्ति। तथा-चेदं तादृशानां महते समुपकाराय भविष्यतीति निःसन्देहं वचः। इदानीमस्य द्वितीयखण्डप्रकटनमपेक्षमाणाः सन्तिष्ठामहे वयम्। आशास्महे, तत्र मुक्त्यादयो विषया तथा तथा व्याख्यास्यन्ते यथा सर्वे एव अनायासमेव तेषामर्थग्रहणे समर्थास्तत् पुस्तकमधिगम्य ज्ञानमतितरामर्ज्जयितुम् अलम्भविष्यन्तीति।

## सन्देशाः

सभापतेरस्वास्थ्यम्—दुःखकारणमेतत् पूर्वत एव विज्ञापितमस्माभिर्यत् परिषत्सभापतयो महामहोपाध्यायाः श्रीमन्तः कालीप्रसन्नभट्टाचार्यपादाः परमस्वास्थ्यमापन्नास्तिष्ठन्तीति। प्रतिदिनमेव दुर्व्याधिरेषां स्वाधिकारमधिकतरं विस्तारयतीति प्रतिक्षणमेव शङ्कितहृदया वयं वर्त्तामहे।

सनातनधर्म्मरक्षासमितिः—धर्म्मस्य विलोपार्थं सर्वत एव यादृश इदानीं दृश्यते प्रयत्नो धर्म्मद्विषां तेनैतत् समीचीनमेव जातं यत् सनातनधर्म्मस्याभ्युन्नतये धर्म्मं प्रत्यापतितानामाक्षेपाणां निरासाय च काचित् पण्डितगोष्ठीदानीं श्रीकाश्यां संस्थापिता। तद्विवरणञ्च अत्रैव पत्रिकाया मन्यतः प्रकाशितं विद्यते। पण्डितवरा वेदान्तविशारदाः परिषत्सहकारिसभापतयः श्रीमदनन्तकृष्णशास्त्रिणोऽस्याः कर्म्मसम्पादनाय वृता इति महति प्रारम्भे महान्त एव नियोजिताः।

परमीदृशे कर्म्मणि सर्वेषामेव लभ्येत चेत् यथाशक्ति साहायकं तदैव मन्यामहे स्यादेतत् शक्यसम्भावनमिति ।

राजकीयव्यवस्थापकसभा—परिषत्सदस्यानां बहव एव राजकीय-व्यवस्थापकसमितेः सदस्यपदमधिकृतवन्त इति नः परं सन्तोषस्थानम् । तत्र च पूर्णियाजिलान्तर्गतश्रीनगरीयराजकुलमलङ्कुर्वाणाः श्रीमन्तः कुमारगङ्गानन्दसिंह एम, ए महोदयाः भारतीयव्यवस्थापकसभायाः सदस्यपदमलभन्त इत्यस्माभिस्तेभ्यः समधिकमाशास्यते । महाभागा एते नवीन एव वयसि ज्ञानेषु प्राधान्यमाविष्कुर्वन्तीत्येषां साफल्यं सर्वथा सम्भाव्यमेव ।

संस्कृतकालेज्-कमिटि – विदितमेवैतत् परिष॰ पत्रिकापाठकानां यत् मासत्रयादूर्ध्वं सं‍ ापितासीत् राजपुरुषैः काचिद् विशेषविदुषां समितिः राजकीयसंस्कृतपाठशालाया अवस्थां संस्कृतशिक्षाशैल्याश्च व्यवस्थां निर्द्धारयितुमिति । समितेरस्याः कार्य्यं द्रुतमेव निष्पद्यमानमासीत् सावधानं निर्वर्त्तितासु प्रथमास्वासिकासु । परमिदानीमस्याः सभा-पतीनां श्रीमतां भूपेन्द्रनाथवसुमहोदयानां कार्य्यान्तरव्यापृततया आवश्यकेऽप्यस्याः कर्म्मसम्पादने विलम्बो जायते । यथा दृश्यते समितौ विदुषां सम्मेलनं तेनैतत् शक्यमेव सम्भावयितुं यदस्या निर्द्धारणेन संस्कृतशिक्षाया महानेव स्यादुपकार इति । अतः सर्वथा काङ्क्षतेऽस्माभिरस्या अविलम्बः कार्य्यनिर्व्वाहः ।

विद्यालयस्य शतवार्षिकोत्सवः—ईष्ट इण्डियाकोम्पानीत्याख्यास्य वणिक्सार्थस्य शासनकाले खृष्टीये १८२४ अब्दे अत्र नगर्य्यां प्रतिष्ठि-तोऽभूत् कश्चन संस्कृतविद्यालयः । स एवेदानीं जाता महती राजकीया संस्कृतपाठशाला । वर्षाणां शतमस्य जन्मनो व्यतीतप्राय-मिदानीमिति खृष्टीयवर्षस्य प्रारम्भे भविष्यति कोऽपि महानेव उत्सवोऽस्यां महाविद्याशालायामिति श्रूयते । एतावन्तं कालं व्याप्य विदां वितरदेतद् विद्यास्थानं बहूनामेव विदुषामुत्पादयितृ अवश्य-मेवैतदुत्सवगौरवमर्हतीति तद्दर्शनाय वयमुत्सहामहे ।

---




ভারতবর্ষমধ্যে সর্ব্বাপেক্ষা বৃহৎ, অকৃত্রিম ও সুলভ

# আয়ুর্ব্বেদীয় ঔষধালয়

হেঃ আফিস--পটুয়াটুলী ষ্ট্রীট, ঢাকা। কারখানা--স্বামীবাগ রোড, ঢাকা

কলিকাতা হেড আফিস - ৫২।১ বিডন ষ্ট্রীট. টেলিঃ - "শক্তি" ঢাকা।

প্রত্যেক শাখাতেই সুদক্ষ কবিরাজ নিযুক্ত আছেন ; তাঁহারা বিনামূল্যে ব্যবস্থা দেন।

ভারত-রাষ্ট্রীয় মহাসভার সভাপতি

## দেশবন্ধু চিত্তরঞ্জন দাশ মহাশয় বলেনঃ—

ঢাকা শক্তি ঔষধালয়ের কারখানার কার্য্যকলাপে আমি পরম প্রীত হইয়াছি, পরিচালনা কার্য্য বিশেষ নিপুণভাবে, সুশৃঙ্খলা ও সুব্যবস্থার সহিত নির্ব্বাহিত হয়, পরিদর্শন-প্রণালী যেরূপভাবে সম্পাদিত হইতেছে তাহা হইতে উৎকৃষ্টতর প্রণালী কল্পনায়ও আনা যায় না।

(স্বাক্ষর) সি, আর, দাশ।

| | | | |
|---|---|---|---|
| দশনসংস্কার চূর্ণ | ৵০ কৌটা। | ম্যালেরিয়া ও সর্ব্ববিধ জ্বরের কুঠারক— | |
| দাদমার | ৵০ কৌটা। | জ্বরান্তক যোগ | ।০ সপ্তাহ |
| বৃহৎ খদির বটিকা | ৵০ কৌটা। | অমৃতারিষ্ট | ৸০ শিশি |
| ১ ডজন ১৸০ আনা, ৩ ডজন ৪০ আনা। | | কলেরান্তক | ।০ কৌটা |

শক্তি বা কর্ম্মযোগ এবং আয়ুর্ব্বেদীয় চিকিৎসা-প্রণালী সম্বলিত ক্যাটালগ পত্র লিখিলে বিনামূল্যে পাইবেন।




গুণে অদ্বিতীয়, গন্ধে অতুলনীয়, শিরোরোগের মহৌষধ।
এক শিশি ১৲ টাকা, ৩ শিশি ২॥০, ৬ শিশি ৫৲ টাকা, ১২ শিশি ৯॥০ টাকা, এক গ্রোস ১০৮৲ টাকা, ডাকমাশুল স্বতন্ত্র

---




রক্তশুদ্ধির মহৌষধ। শরীরের দুর্ব্বলতা দূর করিয়া কান্তি ও পুষ্টি বর্দ্ধনে অদ্বিতীয়। ১ শিশির মূল্য ১॥০ দেড় টাকা, ৩ শিশি ৩৸০ আনা। ৬ শিশি ৭॥০ সাড়ে সাত টাকা, ডাকমাশুল স্বতন্ত্র।

সি কে সেন এণ্ড কোং লিমিটেড।
২৯নং কলুটোলা ষ্ট্রীট, কলিকাতা।

---

प्रकाशको मुद्रापकश्च—श्रीजानकीनाथकाव्यतीर्थः।
संस्कृतसाहित्यपरिषद्भवनम्, श्यामवाजार ब्रीजरोड, कलिकाता।
मुद्रणस्थानं—१०७, कर्णवालिस ष्ट्रीट, श्यामबाजार, कलिकाता।

१८४५ शकीय
January 1924.
Reg. No. C. 1073.
६ष्ठ-वर्षस्य
९म संख्या
Vol. VI. No. 9




संस्कृतसाहित्यपरिषदो मासिकं मुखपत्रम्।

सम्पादकौ— महामहोपाध्यायश्रीदुर्गाचरणसांख्यवेदान्ततीर्थः
श्रीकालीपदतर्काचार्य्यश्च
सहकारिसम्पादकः—श्रीजानकीनाथसाहित्यशास्त्री।



खण्डमूल्यं ।० चतुराणकम्] [वार्षिकमूल्यं ३) रूप्यकत्रयम्।
Foreign price 7s. yearly including postage.

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः ।
भाषालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

१८४५ शकीये पौषे, ६ष्ठ-वर्षस्य ८म-संख्या


## सभापतेर्महाप्रयाणम् ।

विधातुः प्रातिकूल्यान्निदारुणोऽयमापतितो भागधेयविपर्य्यासः संस्कृतभाषाया यदितः प्रभृति परिषदियमेतस्याः सभापतिना महामहोपाध्यायपदलाञ्छनेन तत्रभवता कालीप्रसन्नभट्टाचार्य्येण चिराय विरहिता सन्तिष्ठेत। महापुरुषोऽयं वर्त्तमानसौरमासस्य प्रथमेऽहनि दुःखैकसारं भुवस्तलं परिहाय स्वगणान् स्वदेशञ्च शोकसागरे निक्षिप्य परलोकं प्रस्थितः। पूर्वत एव तदीयरोगप्रभावमवगच्छतां कालस्य करालतामनुदिनमाशङ्कमानानामपि सम्प्रति दारुणमिदं श्रावयतामस्माकं दीर्य्यत इव हृदयं शोकसम्भारेण। परिषदः प्रायेण प्रतिष्ठासमयादारभ्य भट्टाचार्य्यपादोऽसौ सुकौशलम् सप्त संवत्सरान्निरन्तरमस्याः माध्यक्ष्यं निरवर्त्तयत्। पञ्चसप्ततिवर्षदेशीयस्यापि तस्य देववाण्याः कृते तादृशः समुत्साहो नितरां विस्मयमुदपादयत् पारिषदानाम्। अपेक्षितेषु कार्य्येषु सर्व्वदैवायं स्वयमुपेत्य कर्म्मजातं निरवाहयत्। ईदृशस्य गुणगरीयसः साहायकमहिम्नैव अद्यत्वे परिषदियं वाञ्छितां दशां प्रतिपद्यते। नूनमयं विषमो नियतिविपाको यत्तादृशेन चिरं परिषदुन्नतिसारेण सभानायकमहत्तरेण वयमिदानीं विनाकृताः स्मः।

महात्मनोऽस्य विद्यारम्भसमयादारभ्य निखिलमेव जीवनमति- विचित्रम्। ब्राह्मणपण्डितकुलोत्पन्नोऽयं बाल्ये पण्डितोचितक्रमेण चतुष्पाठीषु व्याकरणादिशास्त्राण्यधिजगे। कोऽजानात्तदानीं यत् एष एवोत्तरकालम् आङ्गलविद्याया अपि पारङ्गतो राजकीयसंस्कृतमहा- पाठशालायाः सकलातिशायिनायकपदे परिकल्पितः स्यात्। प्राचीनरीत्या संस्कृतपाठादुत्तरं विश्वविद्यालयस्याप्यन्तिमं मानपदम् एम, ए, इत्यु- पाधिमधिगम्य आदावयं 'हियार' इत्याख्यविद्वत्प्रतिष्ठितपाठशालायां ततो यथाक्रमं ढाकानगरस्थितराजकीयमहाविद्यालये, 'प्रेसिडेन्सी'ति- विख्यातमहाविद्यालये च अध्यापनकर्म्मणा विश्रुतविज्ञानप्रकर्षः अन्ततः संस्कृतमहाविद्यालयस्याध्यक्षपदवीमधिरूढ़वान्। ततश्च राजकीय- कर्म्मणो विश्रान्तिमुपलभ्य सर्व्वात्मना कलिकाताविश्वविद्यालयस्या- ध्यापकतां स्वीचक्रे। अन्तिमे च वयसि पुनरपि राजपुरुषैर्वङ्गमण्डला- न्तर्गतसंस्कृतपाठशालानां पर्य्यवेक्षकपदं आहित आस्तत्र तदेव कर्म्म सुष्ठु समपादयत्। दृष्टश्च तत्र संस्कृतविद्यावतामसीमोन्नति- विधानप्रयत्नेन भूयानस्य प्राच्यविद्याचरमोत्कर्षनिष्पादनपक्षपातः।

न केवलं पाण्डित्येन परं तदुचितकारुण्यसारल्यादिविविधगुण- कलापेनाप्यसौ नितरामावर्जयदन्तःकरणं सहृदयानाम्। महनीय- चरितानामीदृशां तिरोभावेन क्रमेणैव हतबान्धवा सम्पद्यते सुदीना संस्कृतविद्येत्यतितरां शोकस्थानमस्माकमिति किं वा ब्रूमहे।

---

# शोकसभा ।

अचिरं स्वर्गतानां पाण्डित्यप्रकर्षपरिनिष्ठितान्तःकरणवृत्तीनां कलिकाता-संस्कृतमहाविद्यालयाध्यक्षचर-संस्कृत-साहित्य-परिषत् सभापतीनां महामहोपाध्यायकालीप्रसन्नभट्टाचार्य्यविद्यारत्नानां तथा वयस्यैकनिष्ठानां वाराणसीसमाश्रितानां जयचन्द्रसिद्धान्तभूषणमहाशयानामैहिकदेहपरीहारमुपलक्ष्य पारिषदानामन्येषाञ्च संस्कृतसेवकानां शोकपरीवाहार्थं विगते सौरपौषस्य चतुर्दशदिवसे रविवासरेऽपराह्णे परिषद्भवने विदुषां महती सभा संवृत्ता। महामहोपाध्यायश्रीयुतप्रमथनाथतर्कभूषणमहाशयाधिकृताध्यक्षायां तत्र संस्कृतमहाविद्यालयाध्यक्षश्रीआशुतोषशास्त्री, मं मं श्रीपद्मनाथभट्टाचार्य्य एम, ए, (आसाम, गौहाटी) रिपणकलेजाध्यापकौ श्रीकृष्णपदविद्यारत्नः, श्रीवटुकनाथभट्टाचार्य्यः एम, ए ञ, हुगलीकलेजाध्यापकश्रीभागवतकुमारशास्त्रिगोस्वामी एम, ए, श्रीशितिकण्ठवाचस्पतिः (संस्कृतकलेज), विद्यासागरकलेजाध्यापकः श्रीराधारमणविद्याभूषणः, सारस्वतसमाजसम्पादकः श्रीप्रियनाथविद्याभूषण एम, ए (ढाका), मूलाजोड़संस्कृतविद्यालयाध्यक्षः श्रीनिशिकान्ततर्कतीर्थः स्कटिसचार्च कलेजाध्यापकः श्रीनन्दलालविद्याविनोदः, श्रीकाशीपतिविद्याभूषणः (भट्टपल्ली) इत्यादयो विभिन्नदेशीयाः विभिन्नसम्प्रदायस्था भूयांसो विद्वांसः सभायां समुपस्थाय इहलोकतः प्रस्थितयोः पण्डितवरयोर्गुणगणगरिमगणनपुरःसरं शोकवर्षणमवर्षन्। उभये एव ते यद्यपि पूर्ववङ्गाभिजना आसन् तथापि विद्याविनयधर्म्माचारैरतीव देशिकावच्छेदं समग्रां वङ्गभूमिमेव ते अलमकुर्व्वन्निति तेषामभावं सर्व्वोऽयं देशः प्रदेशनिर्व्विशेषं शोकाकुलं सममनुभवन् रोदितीति विशेषां विदुषामैकमत्यमभूत्। जन्मतः प्रभृति कायमनोवाग्भिस्त्रियं परिषत् यैर्महात्मभिः

स्वसुतेव प्रतिपालिता स्वजननीव वा परिसेविता च तेषां म: म: कालीप्रसन्नभट्टाचार्य्याणां वियोगादस्या: परिषदो दिश: शून्या: प्रतिभान्तीति स्वाभाविकमेव। ऋषिकल्पानां सिद्धान्तभूषणमहाशयानामपि परिषदं प्रति सततं स्नेहदृष्टि: पदे पदेऽस्माभिरनुभूतेति मं मं तर्कभूषणपादानामुक्तिसंक्षेप:। उभयेषां तेषां सततस्मरणार्थं परिषद्गृहे तैलचित्रद्वयप्रतिष्ठापनाय प्रस्तावोऽभूत्, सर्व्वैरविवादं गृहीतोऽपि कुमारटुलिप्रख्यातकविराज: श्रीकालीभूषणसेनमहाशय: सिद्धान्तभूषणमहोदयस्य समग्रं तैलचित्रव्ययं स्वयमेव परिषदे प्रतिश्रुतवान्। सभापतीनां तैलचित्रार्थञ्च धनसंग्रहस्तदैवारब्ध:। दातॄणां नामानि यथाकालं प्रकाशयिष्यन्ते।

सभायामनेकैर्विद्वद्भिर्वाचितानां कवितानां कतिचित् अत्रैवाङ्के प्रकाशं नीयन्ते।—

---

संस्कृतसाहित्यपरिषद: सभापतिपादानां महामहोपाध्यायश्रीमत्कालीप्रसन्नभट्टाचार्य्यवराणां, तथा पण्डितप्रवरश्रीमज्जयचन्द्रसिद्धान्तभूषणानां स्मर्याने

# शोकरुदितम्।

लेखक: श्रीराखालदासदर्शनतीर्थ:।

नित्यानन्दकरी दयार्द्रहृदया काली प्रसन्ना यतो
नित्यानन्दमुखश्रियं चिरदिनं कालीप्रसन्नो दधत्।
विद्यारत्न इति प्रियश्च विदुषां सार्थोपनाम्ना सुधी:
सम्राजोऽपि महोच्छ्रयं द्विजवरस्त्वध्यापनाल्लब्धवान्॥१

सच्छिक्षाविषये सतां प्रियकृतो नित्यानुरागो गुरु-
र्मैत्रीं तुल्यजनान्मुदं गुरुजनान्नीचान् कृपाञ्चानयत् ।
नीचेऽपीष्टगुणाश्रये परमुदं यो नित्यमेव व्यधात्
सोऽयं कालविभोर्गतः कवलतां धन्या विधातुर्मतिः ॥२

आमूलतः परिषदः प्रणयन् प्रतिष्ठां
देशोन्नतिः क्रमविकाशमना मनस्वी ।
हे गोष्पते ! पशुपते ! गुणिनश्च सभ्याः
दृष्टिं कुरुध्वमिति वाक्यपरः सदासीः ॥३

स त्वं गतोऽङ्ग परमां गतिमातुराणां
अस्माकमद्य परिषत् कमिहाश्रयेत ।
स्वर्गस्थितोऽपि भगवन् भववत्सभाव
न्मर्त्त्येऽपि दृष्टिमनिशं कुरु युक्तचेताः ॥४

हा हा हन्त महानयं परिभवः कालेन नः साधितो
नष्टे सूर्य्य इव क्षितिर्गृहपतौ गेहं नृपे वा प्रजाः ।
जातेयं परिषल्लतेव धरणौ लुप्तेऽवलम्बे तरौ
चिन्तेयं कथमत्र शोकनिहता तादृक् श्रियं धारयेत् ॥५

अन्यच्चैतदहो तमोऽभिभवनं दुर्भाग्यतस्त्वागतं
तेजस्वी जयचन्द्र आगमदिशां सिद्धान्तभूषाप्रभः ।
काशीवासविलासतश्चिरगतं मायाकलङ्कं जहत्
अस्तं प्राप्त इतो न कालमहिमा कार्य्यं प्रतीचामियात् ॥६

आबाल्याद् ब्रह्मनिष्ठाकृतविमलमनाः सर्व्वविद्याप्रसादं
लब्ध्वा ख्यातिञ्च लोके त्रिदिवमधिगतो ज्ञानिलोकालयं सः ।
युक्तं तादृग्जनानामपितु महदिदं दुःखमस्मज्जनानां
देशोऽयं दीपहीनः कथमपि समयं यापयेत् किं करोतु ॥७

लेखकः श्रीवामाचरणकाव्यतीर्थः ।

आदर्शो विद्याविनयावतारः सर्व्वप्रियः सर्व्वगुणान्वितत्वात् ।
हा हा गतः सोयमितो मनस्वी कालीप्रसन्नो विदुषां वरेण्यः ॥१

पाश्चात्यवैदिककुले परिलभ्य जन्म
दुःखैः पुनः पुनरहो प्रतिहन्यमानः ।
श्रेष्ठत्वमाप नितरां स्वगुणैर्महात्मा
कालीप्रसन्न इह मूर्त्तिधरो विनीतः ॥२

बाल्ये व्याकरणादिशास्त्रनिवहान् तर्कं च सूक्ष्मं वरम्
ज्ञात्वाप्याङ्गलशिक्षितस्तत इतः श्रेयःपदं प्राप्तवान् ।
ख्यातो यः स्वयमेव भारततले ज्ञानैर्विशुद्धैर्मुहुः
हा हा सोयमितश्चिराय गतवान् कालीप्रसन्नः सुधीः ॥३

गाम्भीर्य्ये जलधिर्गुणे पशुपतिर्ज्ञाने तथा गीष्पतिः
स्थैर्य्ये पर्व्वतराजगर्व्वशिखरी धर्म्मे हि कुन्तीसुतः ।
नीतौ शुक्र इवापरः सुरपतिर्माने गुरुः संयमे
आसीद् यः परिषत्सभापतिपदे हा हा गतः क्वाधुना ॥४

हा हा दैव तवैव शोकजलधौ संमज्जिता विह्वला
च्छन्नेयं परिषत् त्वया विरहिता शून्यं जगद्वीक्षते ।
को वा तामिह सेवते सहृदयः सर्व्वात्मना त्वं यथा
सेवाभक्तितया विधाय मतिमान् क्व प्रस्थितस्तां त्यजन् ॥५

येनेयं श्लाघमाना बुधजनपरिषत् सर्व्वसौभाग्यभूमिः
राज्ञां विद्यावतां वा प्रतिजनसविधे कीर्त्तिता सम्यगेषा ।
हन्ताद्यानन्तकीर्त्तेः सकलगुणनिधेर्दैवतस्तस्य नाशात्
वल्लीव च्छिन्नमूला प्रियतमपरिषत् शून्यशून्येव भाति ॥६

संसारे निजधर्म्मकर्म्मनिचयान् संपालयन् यत्नतः
लब्ध्वा कीर्त्तिमतीव सर्व्वविषये शिक्षाप्रदानैः सदा ।

प्रख्यातैर्निजशिष्यपुत्रनिवहैः प्रज्ञावतामग्रणीः
आसीद् यो गुणवान् शशाङ्कसदृशो ग्रस्तोऽधुना राहुणा ॥७
द्विजवर तव कार्य्यं मौंहितियं तथापि
तव विरहजदुःखात् प्राञ्जलिः साश्रुनेत्रा।
परिषदियमनाथा शोकपुष्पाञ्जलिं ते
वितरति सविषादं गृह्यताम् गृह्यतां सः ॥८

---

लेखकः श्रीकृष्णप्रसन्नतर्कवागीशः।

यो बाल्यात् प्रतिपालयन्ननुपदं वात्सल्यपीयूषतः
वल्लीं संस्कृतसंसदं क्षतमतिर्व्याघातसम्पीड़िताम्।
लोकानां पतति स्वतो विलसिता सस्नेहदृष्टिर्यया
धीमानेष तथा चिरं व्यरचयद् यत्नं महान्तं भुवि ॥१
गाम्भीर्य्येण महोदधिं दधदधो बुद्धौ प्रबुद्धः सदा
सौजन्यामृतसेचनाज्जनगणे क्षेमं वितन्वन् सुधीः।
वाक्यैर्वक्त्रसुधाकराद्विगलितैः सन्तर्पयन् मानवान्
सम्प्राप्तो महतां पदं प्रतिपदं कालीप्रसन्नो गुणैः ॥२
पाण्डित्यं नयमण्डितं समभवद् गर्व्वं प्रचण्डं न तु
भास्यं हास्यसुधारसेन लसितं नौद्धत्यसंजृम्भितम्।
दृष्टिः शान्तिरसप्रसिक्तविभवा क्रोधप्रदृप्ता नहि
यस्यैवं महतो गतः स सहसा शान्त्यै महेन्द्रालयम् ॥३
यः पाश्चात्त्यजनैः सुपूजितपदः प्राच्यैर्व्विशेषार्हितो
ज्ञात्वा संस्कृतभारतीं समभजद् यो राजभाषां पुनः।
यं दृष्ट्वा विबुधं बुधैः स्तुतगुणं विद्यार्थिविद्योतनं
सम्राट् पाठगृहस्य नेतृपदवीमारोपयद् यत्नतः ॥४

लक्ष्यं वचनेन मे यदि जनैर्दुःखं क्षणाद्दुःसहं
धिङ्मां तत् परिचिन्त्य चेतसि सदा वोपीत्यमास्तुप्रत:।
कस्मैचिन्नतुदेष्कृताय सुमति: प्रादात् कठोरं वच:
सोऽयं स्वर्नगरीं जगाम तनयान् संत्यज्यशोकाम्बुधौ ॥५

य: कारुण्यसुधाम्बुधिर्दधदहो विद्याप्रकर्षं पुन:
प्रेम्णाङ्गेष्वपि भावसुज्वलमयं मोहापहं व्यादधत्।
सान्निध्यं समिते नतोजनगणो यस्मिन् नृदेवेस्वत:
सोऽसौ सूरिवरोगतोऽमरपुरं शोकेन मुग्धं जगत् ॥६

चारित्रं ननु चित्रितं सुललितं धात्राविचित्रं भुवि
दोषो लेशतयापि यत्रमनुजै: शक्यो न संवीक्षितुम्।
सम्राड्भक्तिनिबद्धशुद्धहृदय: प्राज्ञ: प्रसन्नान्तर:
स्वर्लोकं सहसा समाश्रयदयं श्रीपूर्व्वङ्गोज्ज्वल: ॥७

धीमन् संस्कृतसंसदप्यनुदिनं त्वत् स्नेहयत्नोच्चयै-
र्भूमीप्राप्तपदा पदात् पदसद्वृद्धिं गता प्रोज्ज्वलाम्।
याचित्ते भवत: सदा विलसिता कान्यवलष्टप्रसू
स्तां संत्यज्य कुतोभवान् समचलत "ताततेति"स्वरोदिति ॥८

यस्माद्दिक्करं शतेषु जनुषा प्रागवङ्गभौमो भवान्
प्राक्पाश्चात्यनवीनशिक्षणविधौ दन्ताद्य उत्कर्षत:।
राज्ञ: पाठ्यकृते सहीपपुरुषैरध्यक्षतां प्रापित
उत्कृष्टां पदवीन्त्वहो समनयत् तां जन्मभूमिं गुरै: ॥९

सा भूमिर्दुःखवाष्पं विकिरति नियतं मूर्च्छिता त्वद्वियोगा
दुःखाप्ता देशजास्ते वयमिह भवतोऽदर्शनं चिन्तयन्त:।
शोकक्लिष्टा: सुतास्ते भुवनमधिगता बोधनीयास्तु केन?
तद्दयास्यादस्तुतद्भो:, श्रितपरमसुखो मोदतां स्वर्भवांस्तु ॥१०

---

## जयचन्द्रसिद्धान्तभूषणमहाशयस्य स्वर्याने।

लेखकः श्रीकृष्णप्रसन्नतर्कवागीशः।

हा हा कस्माद्विलसतितरां मानवानां मुखाब्जे
मालिन्यं तद् धृतनववपुः पुष्यदत्यन्तवृद्धिम्।
म्लानो भानुर्जगदिदमहो म्लापयत्येव मन्ये
तीव्रं तेजो विकिरति यतो हन्तुमितस्य जाड्यम् ॥१
किंस्विद् वायुर्नचलतितरां क्षुण्णमूर्त्तिः पुरेव
नो वा दीप्तो विमलकिरणो दृश्यते नः सुधांशुः।
आशाः शून्या जनगणमनो भीषयन्त्येव मूर्च्छां
मन्ये नूनं समभवदहो मर्म्मभित् कोऽपि हेतुः ॥२
किं भो वक्ष्वं कथयसि शनैश्चेतसां भेदनं यत्
प्राप्तो मुक्तिं महितचरितो वङ्गसन्तानमुख्यः।
मान्यो धीरैर्द्विजकुलमहारत्नभूतो मनीषी
विप्रो धर्म्मं प्रतिपदमसौ पालयन् यः सदासीत् ॥३
वङ्गे पूर्व्वे मधुरललिते शुद्धविप्रान्वये यो
विद्वान् जातो विभवविपुले शान्तिसन्तानरम्ये।
आबाल्याद् यो विधिवदतुलां धारयन् प्राच्यशैलीं
धर्म्माचारानपि शुभमतिर्मोक्षमायात् स काश्याम् ॥४
योऽसौ धर्म्मे निहितहृदयः शुद्धबुद्धिः सदैव
नो वा धत्ते कथमपि मनस्तद्विरुद्धेऽध्वजाते।
दृष्ट्वा विप्रं व्यपगतशिखं हा शकेशाग्रमौलिं
दीप्ताग्निः सन्नदहदिह तं भीषणैर्वाङ्मयूखैः ॥५
निर्ज्जीवानां विगलितमसौ वीक्ष्य धर्म्माग्रहं तं
धर्म्मान्मेषं जनयितुमहो निर्ममे ग्रन्थजातम्।

येनैवास्माज्जनगणमनोमोहशोकाम्बुपूर्णात्
संसाराब्धेः सुखमनुपदं त्यक्तुमर्हत्यवश्यम् ॥६
यः शास्त्रज्ञो विदितनृपयो धर्म्मरकर्म्म प्रलीनो
लीनानां तत् रुचिररुचिरे नव्यशिक्षाप्रभावे।
चेतो यत्नात् पुनरपिसतां वर्त्मणि प्राक्तनेऽस्मात्
आशक्तं स्यादिति कृतमतिः सर्व्वथाचेष्टतैषः ॥७
शास्त्रज्ञानं व्यकिरदपि यः शिष्यवृन्दाय नित्य
साचारं तं मनुजमनयत् यत्नतः पालयन् यः।
चारित्रात् यो ह्यनुगतजनं प्रापयन् श्रेष्ठभूमिं
आचार्य्योऽसौ जयति जयचन्द्रो हि पुण्यप्रभावः ॥८
काले काले प्रसरति यथा शास्त्रतो लब्धबोधं
विद्वज्जातं नयति च पुनर्दृशमुत्कर्षमेतम्।
ब्राह्मण्यं नो विभवविपुलं जातिसम्मानमूलम्
वर्द्धेतेति स्वगतविभवं पैतृकं यः ससर्ज्ज ॥९
जातौ जातौ जठरविवरे यन्त्रणासन्ततीस्ताः
स्मारं स्मारं विजितकरणो लब्धभोगापरक्तिः।
धीमान् सैवं पदमधिगतो कर्त्तुकामः स्वगेहात्
प्राप्तो यत्नात् सुमतिमहितामेष वाराणसीं ताम् ॥१०
सोऽयं विहाय विकलं सहसा शरीरं संसारबन्धनगुणात् परिलब्धमुक्तिः।
वाराणसीपुरपतेरभेदं प्रलिप्सुः जातः प्रकाममधुना सफलप्रयासः ॥११

---

## स्वर्यातं पतिं प्रति परिषत्।

लेखकः श्री.........

दयित क्व नु सङ्गतो भवान् करुणाहीनमना विहाय माम्।
अपि दोषविशेषमाचरं तव पादाम्बुजयोरहं रहः॥

तिमिरोत्करकीर्णमम्बरं विषधूमाकुलितः समीरणः।
जगदद्य वत त्वया विना सकलं शून्यमिवावभासते॥
कसुपैमि वियोगदुर्गता समायिष्यन्त भवानि चेतसः।
गुणसंस्मरणात् पदे पदे तव सीदामि न शान्तिरस्ति मे॥
विनयन्तव लोकचेतसां विनयं कञ्चन सञ्चितं व्यधात्।
मधुरा भवतः सरस्वती स्मरणादद्य शुचे प्रकल्पते॥
अयि शैशवबान्धव अयन् कति कष्टानि मदर्थमन्तरा।
गतवानपुनर्निवृत्तये सहसा लोकदृशामगोचरे॥
शरदः किल सप्त मामिमाम् परितो गौरवगौरतां गताम्।
अकृथाः कतिधा प्रयत्नतः सहसा किन्तु कृपां विमुञ्चसि॥
प्रणयात्मम शैशवावधि प्रणयन् कामपि साम्यपद्धतिम्।
जगतां सविधे प्रसिद्धये मम किं वा न भवान् समाचरत्॥
त्वदनुग्रहगौरवादहं सुचिरं लब्धवती नृपार्चनाम्।
अवशिष्टमतोऽपि यत् प्रियं तदकृत्वा किमहो विरम्यते॥
परिलोकय ते वियोगतः स्वजनाः शोकविकारसागरे।
कथमेव गता निमग्नतां न विजानन्ति विधेयमात्मनः॥
गुरुकृत्यविचारणक्रमे भविता कोनु चिरं सहायकः।
उपदेशविशेषदानतः कतमस्त्वत्सदृशो विजिष्यते॥
इह भारतवर्षमन्दिरे मम शोकः सुतरां तृणायते।
सकलैव हि धीरमण्डली तव विच्छेदशुचा निपीड्यते॥
कतिदूरमधारि चारणा चरणाभ्यां नियतिप्रशासनात्।
करुणामिह ते पुरातनीं तनितुं येन पराङ्मुखी मतिः॥
अथवा परलोकमाप्तवान् मम दौर्भाग्यनिदेशतो भवान्।
न ततः पुनरेति मानवः स्वजनान् सान्त्वयितुं यथायथम्॥
ज्वलतीव विषाददुर्विधं हृदयं धैर्यमितो विलुप्यते।
चरणादपयाति मेदिनी पतितेवास्मि पतिप्रमायिनी॥

चिरमस्मि तवानुकम्पया महतामन्तरतुष्टियष्टिका ।
कथमद्य विहाय दुर्व्विधामपकर्षं नयसि प्रकर्षभाक् ॥
अथवा नियतिरयं क्रमः सुखदुःखे स्थिरतां न गच्छतः ।
न यथाहमतः परं परं परितप्ये प्रविधीयतां तथा ॥
गतवानसि देवरूपता मभिरूपो महितां गतिं सताम् ।
कुरु मां चिरमाशिषां स्रजा शुभसम्पातविलुप्तवेदनाम् ॥
तव दुःखितशिष्यमण्डली हृदयं सिञ्चति लोचनाम्भसा ।
उपसृत्य कुरुष्व तामिमां स्थिरचित्तां करुणार्द्रमानसः ॥
सुपथि परिचालय प्रियां सुचिरं मां सुरमन्दिरासनः ।
तव कोमलमानसान्तरात् न हि निर्व्वासय दैन्यदुर्व्विधाम् ॥

---

लेखकः श्रीअनन्तकुमारकाव्यव्याकरणतीर्थविद्यारत्नः ।

भ्रमो न स्वप्नो वा भवति पुनरेष प्रलयकृद्
उदन्तश्चन्द्रो यद् विरहितकलङ्कः क्षयमितः ।
कृपाशीला कालीदुरितदलनी यत्र नृवरे
प्रसन्ना सोऽप्येतान् परिहरति भूलोकनिलयान् ॥
सुविप्राणामार्य्यः परिषदनुरागी कृतिपटुः
प्रियः सामादीनां जगदुपकृतौ पूतचरितः ।
चलत्येष त्यक्त्वा त्रिदशशरणं बान्धवगणान्
अहो कालस्यैतज्जगदघटशः क्रूरलसितम् ॥
सुधां रत्नं लक्ष्मीं शिशिरकिरणं कल्पलतिकां
दधावब्धिः पूर्व्वं दिवि निवसतां भव्यविधये ।
तथा वाचं विद्यां श्रियमुपकृतिं दानसुकृतिं
दधज्जातोऽस्यब्धिस्तव गुणगणान् स्तौमि किमहम् ॥

मणिर्वङ्गीयानां दधदतितरां दीप्तिममलां
वसन्ने कत्वासावुजिरपुरतोऽदीपयदिदम् ।
दिवं प्राप्तः कुर्य्यान्निजकरुणया साम्परगण
स्तथैवाशीर्व्वादैः परिषदमिदामुन्नतिमतीम् ॥

महाभाग !

त्वयारब्धा पूर्वं परिषदियमाप्ता गुणिगणान्
तवैव प्राप्याख्यात् कति कति गताः पोषकपदम् ।
ततो जीवत्काले परिषदमिमां याद्दृशद्दृशा
व्यलोकिष्ठा स्तद्वत् सकरुणमवेचस्व सुचिरम् ॥

---

## जयचन्द्रसिद्धान्तभूषणमहाशयस्य स्वर्याने

लेखकः श्री.........

आजीवनं विमलपुण्यविधानदक्षः पक्षाश्रितः सुकृतिनां बुधबद्धसख्यः ।
हा हन्त सम्प्रीति गतो जयचन्द्रनामा विद्वद्वरः सुरपुरं सुगृहीतधामा ॥
संगृह्य भारतमहोदधिरत्नजालं सूचीनिबद्धमुपदीकृतवान् विशालम् ।
तस्यादय भास्वररुचा परितः प्रदीप्तं दृष्टोपकारमिव भारतवर्षमाप्तम् ॥
वाराणसीपुरपतौ चिरमेव रागात् दूरे विहाय निजदेशमपादि काशीम् ।
तत्रापि नैष्ठिकतया गुरुतत्त्वचिन्तां पर्य्यचकार मनसो जयचन्द्रधीरः ॥
तदविप्रयोगविधुरा विकलेव काशी वाणीकराद् विगलितेव विमुग्धवीणा ।
हर्षन्तु केवलमहोमणिकर्णिकाया यद्दूरवर्त्तिनममुं लभतेऽङ्कमध्ये ॥
धर्म्मप्रभावपरिमार्ज्जितचित्तवृत्तेर्यस्य प्रकाशमगमत् किल सत्यनिष्ठा ।
नित्यादरेण हुतभुक् परितोषमाप्तः स्वं तेजसामिव चयं व्यतरत् कृपालुः ॥

यः पण्डितोचितगुणैर्गुरुतामुपेतः
शिष्यानिवाखिलजनानकरोन्महात्मा ।

यत्कीर्त्तिसञ्चयविकस्वरचान्द्रिकाभिः
शुभ्रायितं जगदिदं त्रिदिवं स यातः ॥
वाक्येषु यस्य मृदुतान्यविलक्षणासीत्
दोजस्य वैरिमतसार्थनिरासदक्षम् ।
युक्तिस्तथा निजमतानुगुणा गुणाढ्या
हा हन्त सोऽयमवनेस्त्रिदिवं प्रतस्थे ॥

अद्यापि यस्य कवितारसरम्यभङ्गीं गीर्व्वाणभाणपरिषत् स्मरति प्रकामम्।
शब्दे रसे स्मृतिपदे श्रुतिसारशास्त्रे तर्कादिकेषु च समं विललास वाणी॥

स्वाभाविकी मधुरता प्रचिता यदीया
चित्तं जहार तदुपान्तविहारमालम् ।
दैवी निदेश इव सोऽयमभूद्धरायां
धर्म्मस्थितिं घटयितुं जनतोपकारी ॥
नानाविधेन विधिना विदधत् प्रधानः
धर्म्मोपकारमभिकीर्णयशः प्रतानः ।
जीर्णां तनुं परिहरन्निह भूतभूतां
भूताधिनाथवपुरेव निजं प्रचक्रे ॥

नातः परं तदुपदेशकथासुधाभिः श्रोत्रं गमिष्यति मधुष्वपि दोषदर्शम्
तच्चारुपूतचरितं परिपश्यतां नः प्राचीनसार्य्यचरितं परितो विभातम् ॥
एवं क्रमेण विदुषामपवर्गसर्गे जाता वयं तदुपदेशकथादरिद्राः ।
सन्मार्गमाश्रयितुमित्थमपारयन्तः कां हन्त सम्प्रति दशामुपयाम भूमौ ॥

हे चन्द्र चन्दय चिरं तव पादलग्नान्
मग्नान् भवद्विरहवारि विकारनिघ्नान् ।
त्वत्पादपद्मरजसा परिपूतमार्गे
चेतांसि चारय चिराय कृपाविशेषात् ॥

---

# शास्त्रसामञ्जस्यम् ।

लेखकः महामहोपाध्यायश्रीकैलासचन्द्रकाव्यव्याकरणसांख्यपुराणतीर्थभट्टाचार्यः ।

ऋषिभ्य एव प्रणतोऽस्मि तेभ्यो भूतादिसूक्ष्मादिसमस्तदृग्भ्यः ।
ध्रुवाणि पूतानि जयन्ति येषां वाक्याणि वेदार्थविकाशनानि ॥

साङ्ख्ययोगपाशुपतादिदर्शनसार्थक्यमिति हि निखिलभारतवर्षीय-संस्कृतसाहित्यसम्मेलनीसभायाः सप्तमाधिवेशनाय स्वागतकारिण्याः समितेः प्रश्नावतारः । तत्र "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते" इति सार्व्वजनीनप्रसिद्धेरानर्थक्यं वेति शङ्काया अपि नास्त्यवकाशः । केवलं कुत्र कीदृक् सार्थक्यमित्येतदेवालोचनीयमुपतिष्ठते ।

किन्तु प्रश्नोऽयमादिपदोपादानान्न साङ्ख्यादित्रितयमात्रविषयकः तत्तद्विशेषत्रितयोपादानाच्च न सर्व्वदर्शनविषयकः, तथाच कियद्भ्यो दर्शनेभ्यः प्रश्नस्य व्यावृत्तिरपि वर्त्तत इति प्रतीयते न पुनरप्रवृत्त-प्रश्नकानि तानि कानीति निर्णेतुं शक्यन्ते । तस्मादनिच्छताऽपि मया सर्वेषामिव दर्शनानां सार्थक्यं प्रदर्श्यते ।

प्रथमतस्तावत् पुरुषार्थो दृश्यतेऽनेनेति व्युत्पत्त्यैव पुरुषार्थज्ञान-साधनतया सार्थक्यं सामान्यतः प्रतीयते दर्शनानाम् । ततः पुरुषार्थ-प्रभेदानुगतविभागपर्य्यालोचनया तेषां विशेषतोऽपि सार्थकत्वं निर्णीयत एव । तथाहि

पुत्रपशुस्त्रीपरिच्छदहिरण्यान्नादयः प्रसिद्धा अपि भुवनेष्वियन्त इति संख्यातुमशक्याः पुरुषार्थाः प्रीत्यर्थकत्वाद् गौणतरास्तथाच "तत्-सम्बन्धात् फलनिष्पत्तेस्तेषु फलवदुपचार" इति न्यायसूत्रम् । स पुनः प्रीत्यात्मकः पुरुषार्थो गौण एव दुःखनिवृत्त्यर्थकत्वादतो दुःखनिवृत्ति-रित्येक एव पुरुषार्थो मुख्यतयावतिष्ठते । कथं सुखिभिरप्यन्विष्य-मानस्य सुखस्य दुःखनिवृत्त्यर्थकत्वमिति चेदुच्यते । क्षणिके एव हि

सुखदुःखे, व्यतिविरुद्धे च। तस्मात् सुखसमकालं दुःखं न सम्भवतीति ध्रुवं, किन्तु सुखीति परैः प्रतीयमानो विद्यमानसुखसाधनकोऽपि जनः प्रबलेन दुःखविशेषेणाभिहन्यते तन्निरोधार्थमेव सुखसाधनान्तरमपेक्ष्यते। यथा गृहाङ्गना यद्यपि चारुरूपा तथापि पुंसां परदारवार्त्तेति प्रायिकीयं संस्कारदुःखोद्दे जना। तथा

निःस्वो वष्टि शतं शती दशशतं लक्षं सहस्राधिपो
लक्षेशः क्षितिपालतां क्षितिपतिश्चक्रेश्वरत्वं पुनः।
चक्रेशः पुनरिन्द्रतां सुरपतिर्ब्रह्मास्पदं वाञ्छति
ब्रह्मा विष्णुपदं हरिर्हरपदं काशावधिं के गताः॥ इति

च परिणामदुःखताड़ना। द्विविधेऽस्मिन् दुःखविकल्पे सुखाभिमानः स्फुरति संसारिणामतः स्वयमपि ते नानुशोचन्ति किमिदमापतितमिति; तथापि तापत्रयस्यैव तद्वितयस्यापि निवारणार्थमेवेहन्ते। कथमन्यथा सत्येव बुभुक्षादावशनादिकमुपयुज्यते, तत्रासति पुनरमृतादिकमपि न रोचत इति तस्मात् सुखस्य दुःखनिवृत्त्यर्थकत्वं सुस्थितम्। एवञ्च सर्वेषामेव प्रयोजनीभूतानां दुःखनिवृत्त्यङ्गत्वे दुःखनिवृत्तेश्च प्रयोजनान्तरनिरपेक्षतया मूलपुरुषार्थत्वे निर्णीते तादृशस्य तरस्याभावात्तस्यैकविधत्वमपि मन्तव्यं; तथाच सुखलाभाभावादपुरुषार्थत्वमिति चेन्न पुरुषार्थद्वैविध्यादिति साङ्ख्यसूत्रमर्थात् दुःखात्यन्तनिवृत्तिरूपे मोक्षे सुखदुःखोभयबीजसमुच्छित्त्या साधिते सुखस्याप्रसङ्गात् पुरुषार्थता नास्तीति चेदुच्यते तदा पुरुषार्थद्वैविध्यमापतति, तद्धि न सम्भवति, सुखस्यापि प्रदर्शिताद्दुःखनिवृत्त्यर्थत्वात् समुत्तीर्णसरिता नौरिव प्राप्तमोक्षेण सुखमपि निरर्थकतया नापेक्ष्यते एवेति पुरुषार्थस्यैकविधत्वमपि सुस्थितम्। तथाविधस्यापि पुरुषार्थस्य दुःखानां दुःखहेतूनां तत्तन्निवृत्तिसाधनानाञ्च नानाविधत्वादुत्कर्षापकर्षतारतम्येन बहुधा भेदो द्रष्टव्यः।

संक्षेपतस्तावद्दुःखं त्रिविधमिति प्रागेवोक्तं। तत्र लोकप्रसिद्धमपि तापाख्यं दुःखं स्थानभेदादष्टादशधा बोद्धव्यं। बुद्ध्यहङ्कारमनः-श्रोत्रत्वगक्षिरसनाघ्राणवाक्पाणिपादपायूपस्थ-नामक-त्रयोदशकरणानां याः प्रातिस्विकवृत्तयस्त्रयोदश याश्च सामान्यवृत्तयः प्राणाद्याः पञ्चैव, तासां यथा कथञ्चिद् बाधनैव ताप इत्याख्यायते। जन्मक्षणे मृत्युक्षणे च सर्वेषामेव तापानामुपस्थितिर्व्याधिप्रहारादिषु चान्यतमानां केषाञ्चिदनियतसंख्यकानामित्येतत् सर्वं सुगमम्। निमित्तभेदादाधि-भौतिकाधिदैविकाध्यात्मिकसंज्ञाभिस्तापस्यैव त्रैविध्यमपि प्रसिद्धं, तद्विवरणेनालम्। संस्कारदुःखं सुखस्मृतिप्रधानम्; परिमाणदुःखञ्च सुखसङ्कल्पप्रधानं; तयोः सुखविषयकतयैव सुखेष्वन्तर्भावः क्रियते मूढात्मभिः।

वस्तुतस्तु रुचिलालसात्मकाभ्यां ताभ्यामपि राजसाभ्यां सत्त्वस्य बाध्यमानत्वात् तयोरपि तापस्येव "बाधनालक्षणं दुःख"मिति न्याय-सूत्रीयदुःखलक्षणेनाववोधः सम्यगुपलभ्यते। कथमन्यथा सुखाभि-मानिनोऽपि तयोरुपशमाय समीहन्ते, तस्मात् सर्वेभ्य एव तेभ्यो भृशं बिभेति विवेकी। तथाच "परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिन" इति योगसूत्रीयव्यासभाष्ये दुःखव्याख्यानात् परत "एवमिदमनादि दुःखस्रोतो विप्रसृतं योगिनमेव प्रतिकूला-त्मकत्वादुद्वेजयति, कस्मादक्षिपात्रकल्पो हि विद्वा"निति यथोर्णातन्तु-रक्षिपात्रे न्यस्तः स्पर्शेन दुःखयति नान्येषु गात्रावयवेषु, एवमेतानि दुःखानि अक्षिपात्रकल्पं योगिनमेव क्लिश्नन्ति नेतरं प्रतिपत्तारम्। इतरन्तु स्वकर्मोपहृतं दुःखमुपात्तमुपात्तं त्यजन्तं त्यक्तं त्यक्तमुपाददान-मनादिवासनाविचित्रया चित्तवृत्त्या समन्ततोऽनुविद्धमिव अविद्यया हातव्य एवाहङ्कारममकारानुपातिनं जातं जातं बाह्याध्यात्मिकोभय-निमित्तास्त्रिपर्वाणस्तापा अनुप्लवन्ते इति सर्वं सुविवृतमेव। दुःखानां निवृत्तिसाधनानीदानीं कथनीयानि।

तेषु कानिचिदैहिकानि कानिचिदामुष्मिकानि कानिचिदलौकिकानि च। तत्र केषाञ्चित् साक्षाद्दुःखनिवर्त्तकत्वं केषाञ्चित् सुखोपढौकनद्वारा केषाञ्चिद्दीर्घपरम्परयापीति यथायथमनुसन्धेयम्। ऐहिकानां मध्ये साक्षाद्दुःखनिवर्त्तकमौषधादि प्रायशो दुःसेवतया सहसा न स्वीक्रियते जनैः। स्रक्‌चन्दनवधूवस्त्रादि तु विविधसुखसम्पादनद्वारा दुःखं निवारयतीति तत्रैवासक्तिर्निरूढा जनानाम्। कैश्चित् किञ्चिज्ज्ञैरात्मनो लोकान्तरसम्बन्धमनुमोदमानैर्यागाद्यनुष्ठानेन पुण्यं सञ्चीयते च तदिदमैहिकानुष्ठानजन्यमामुष्मिकं पुण्यं स्वर्गीयसुखनिष्पादनद्वारा दुःखप्रतिरोधकमिति साधनपारम्पर्य्यदीर्घत्वस्य दिङ्‌मात्रमुदाहरणम्। वैदेह्यप्रकृतिलयत्वनिःश्रेयसानि पुनरलौकिकानि साक्षाद् दुःखनिवर्त्तकानि। किन्तु तेषु सुखलेशस्याप्यसम्भवादनधिकारः सुखैषिणाम्। अमी हि सुखकणरत्नलोभान्धितधियः सततं सकलदुःखसागरेषु निमज्जन्तः पुनः पुनर्जन्मजरामरणरोगशोकादिभिरुत्तुङ्गतरङ्गैरभिहन्यमाना अपि यादांसीव ततो न विरज्यन्ति। दुःखभीतस्तु सुधीरः प्रदीप्तग्टहाग्नौ सिकतामुष्टिप्रक्षेपस्येव नैसर्गिकदुःखमये संसारे विषयसुखोपयोगस्य नैष्फल्यमुपलभ्य विरमति। तथाचोक्तं शान्तिशतके

रम्यं हर्म्यतलं न किं वसतये श्राव्यं न गीतादिकं
किं वा प्राणसमासमागमसुखं नैवाधिकप्रीतये।
किन्तु भ्रान्तपतत्पतङ्गपवनव्यालोलदीपाङ्कुर-
च्छायाचञ्चलमाकलय्य सकलं सन्तो वनान्तं गताः॥ इति

ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति।
एवं त्रयीधर्म्ममनुप्रपन्ना गतागतं कामकामा लभन्ते॥

इति श्रीमद्भगवद्गीतावाक्याच्च।

"समानं जरामरणादिजं दुःख"मिति साङ्ख्यसूत्राच्च। स्वर्गीयमुच्चावचं सुखमपि दुःखभीतमाश्वासयितुं नालम्। स्वर्गिणां हि परमस्मदपेक्षया सुदीर्घतरायुष्कत्वमितीयानेव विशेषः। तस्मात्तदपि विषसम्पृक्तान्न-

मिव समुपेक्षते साधुः। "कुत्रापि कोऽपि सुखी न" "तदपि दुःख-शबलमिति दुःखपक्षे निक्षिपन्ते विवेचकाः" इति साङ्ख्यसूत्राभ्यां सुखस्य सर्वस्यैवानित्यत्वं दुःखस्यैव हेयत्वञ्च समाख्यातम्। वैदेह्यप्रकृति-लयत्वे च तापपरिणामाभ्यां परिहीणेऽपि संस्कारसद्भावाद्दुःखनिवृत्तेः नैकान्तिकत्वं नश्वरतया पुनरावृत्त्यवश्यम्भावाच्च नात्यन्तिकत्वमिति। तथाच "भवप्रत्ययो विदेहप्रकृतिलयानाम्" इति योगसूत्रीयव्यासभाष्ये विदेहानां देवानां भवप्रत्ययः तेहि स्वसंस्कारमात्रोपयोगेन चित्तेन कैवल्यपदमिवानुभवन्तः स्वसंस्कारविपाकं तथाजातीयकमति-वाहयन्ति। तथा प्रकृतिलयाः साधिकारे चेतसि प्रकृतिलीने कैवल्य-पदमिवानुभवन्ति, यावन्न पुनरावर्त्ततेऽधिकारवशाच्चित्तमिति सुव्यक्तम्।

इत्थं विषयेषु दोषदर्शनादुपतिष्ठते वैराग्यं दुःखभीरोः। तथाच "दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्य"मिति योगसूत्रम्। स्त्रियोऽन्नपानमैश्वर्य्यमिति दृष्टविषयवितृष्णस्य स्वर्गवैदेह्यप्रकृतिलयत्व-प्राप्तौ वानुश्रविकविषयवितृष्णस्य दिव्यादिव्यविषयसंप्रयोगेऽपि चित्तस्य विषयदोषदर्शिनः प्रसंख्यानबलादनाभोगात्मिका हेयोपादेयशून्या वशीकारसंज्ञा वैराग्यमिति तद्भाष्यञ्च।

लब्धवैराग्यस्यापि जन्ममृत्युपरम्परापरिपीड़ितस्य महती व्याकुलता प्रवर्त्तते। सैषावस्थापि

यश्च कामपरो लोके यश्च बुद्धेः परं गतः।
उभौ तौ सुखमेधेते क्लिश्यात्यन्तरितो जनः॥

इत्येवं महाभारतादावुक्ता। तदवस्थेन तेन यत् क्रियते तदेव दुःख-सूत्रीयभाष्ये प्रोक्तं यथा—

"तदेवमनादिदुःखस्रोतसा व्यूह्यमानमात्मानं भूतग्रामञ्च दृष्ट्वा योगी सर्वदुःखक्षयकारणं सम्यग्दर्शनं शरणं प्रपद्यते" इति।

प्रागुक्तालौकिकात्यन्तिकदुःखनिवृत्तिसाधनं निःश्रेयसमस्मादेवालो-कात् सम्यग्दर्शनान्निष्पद्यत इत्यस्यैवोपायश्चिन्तनीयः सम्यग्दर्शनं हि

समीचीनं ज्ञानं तत् केनोपायेनासादनीयमिति निर्विन्नस्य प्रश्ने विपुलविद्वत्परिषदि समुपस्थापिते नैकोऽपि तूष्णीं स्थास्यति। तं निर्विन्नं पुरुषं प्रति चार्वाकदर्शनविदो वक्ष्यन्ति

"अहो, मुधा भ्रान्तोऽसि, अनृतव्याघातपुनरुक्तदोषजटिलैर्वेदादिवाक्यैः। हन्त देहोच्छेद एव मोक्षः स तु स्वभावादेवागमिष्यति। नातः परन्ते किञ्चिदपि स्थेयात् तस्मादङ्गनालिङ्गनादिजन्यं सुखं परिहरता नात्मवञ्चना कार्य्या। किं बहुनोक्तेन

त्याज्यं सुखं विषयसङ्गमजन्म पुंसां
दुःखोपसृष्टमिति मूर्खविचारणैषा।
को नाम भोस्तुषकणोपहितान् हितार्थी
व्रीहीन् जिहासति सितोत्तमतण्डुलाढ्यान्॥

सुतरां एतावदेव सम्यग्दर्शनं गृहाणेति।

बौद्धदर्शनानुरागिणो वक्ष्यन्ति "क्षणभङ्गुरेऽस्मिन् जगति योगाचारावस्मद्दर्शनोक्ताववलम्ब्य, दुःखमायतनं समुदायो मार्गश्चेति चत्वारि तत्त्वानि पर्य्यालोच्य भगवान् सुगतो देव उपास्यतां ततस्ते स्वयंप्रकाशा बुद्धिः शान्तिं लप्स्यते यद्यपि चतुःप्रस्थानिका वयं तथापि रागादिज्ञानसन्तानवासनोच्छेदजन्यैव मुक्तिः सर्ववादिसम्मतेति।

जैनदर्शनविदो वक्ष्यन्ति—क्षित्यादि सकर्तृकं वदित्यनुमानेन यः सर्व्ववित्, सर्व्वकर्त्ता निर्णीयते स एव परमेश्वर उपास्यतां, ततस्ते जीवाजीवास्रवबन्धसंवरमोक्षेषु सप्तसु तत्त्वेषु अज्ञानं यदुदेष्यति तदेव सम्यग्दर्शनं ज्ञानचारित्राभ्यां मोक्षमार्गस्त्वया गन्तव्य इति।

नकुलीशपाशुपतदर्शनशैवदर्शनप्रत्यभिज्ञादर्शनरसेश्वरदर्शनविदो यथास्वकर्म्मपद्धतिसहितया महेश्वरोपासनया पूर्णप्रज्ञादिदर्शनविदश्च तथा विष्णूपासनया मुपदेक्ष्यन्ति।

अर्थार्षदर्शनैकदर्शिनामपि मीमांसकानां वा: फलसन्धानरहितैः कर्म्मभिरेव परमपुरुषार्थः सम्पद्यत इति।

नैयायिकब्रुवाः प्रमाणादि-निग्रहस्थानान्त-षोडशपदार्थयाथार्थ्य-ज्ञानादेव निःश्रेयसं प्राप्यत इति।

वैशेषिकज्ञमानिनो द्रव्यगुणकर्मादिषट्पदार्थतत्त्वज्ञानादेव निःश्रेयसं स्यादिति।

साङ्ख्यज्ञम्मन्याः प्रकृत्यादिपञ्चविंशतितत्त्वानां ज्ञानादेव मुक्ति-र्निष्पद्यत इति।

योगविन्मानिनश्चासम्प्रज्ञातसमाधिनैवाविद्यानाशात् कैवल्यमिति वर्णयन्ति।

बहुशास्त्रकृतो व्यासस्य ब्रह्ममीमांसायामपि शङ्कररामानुजादि-प्रवर्त्तितविविधबहुसम्प्रदायाः शास्त्रान्तरनिरपेक्षादद्वैतभावनामात्रा-न्मुक्तिमाघोषयन्ति। हन्तेदानीं किं करोतु निर्व्विण्णस्तपस्वी ?

(क्रमशः)

---

## चन्द्रालोके

लेखकः—श्रीधूर्जटिप्रसादकाव्यतीर्थः

सप्तमोऽङ्कः—समरभूमिप्रान्तरम्

चूलिका

(नेपथ्ये) हा धिक् कष्टम्

संहर्त्तापि कपालटङ्क्घृतभुजा विश्वस्य सृतुश्च्चयः
सानीकाः सुरसत्तमा दिगधिपा अन्ये च धातादयः।
यच्छुक्तीवहतौजसः प्रहरणव्यासङ्गशोषोक्षिताः
स्थानं निर्ज्जनमाश्रयन्ति नितरां लज्जावनम्राननाः॥

ततः प्रविशति सह सारथिना श्रीकृष्णः

श्रीकृष्णः—(प्रविश्य) यद्येवं, सिद्धप्रायो मे मनोरथः। (विमृश्य) तत् किमन्यदधुनापेक्षिष्यते (स्मृत्वा) आं स्मृतं

भूयस्तानमरानमोघशपथानेतान्नयामो रणे
पश्यामस्तदमाननापरिगतक्रोधम्लानदीनं मुखम्।
तत्पश्चादपि मे प्रमादशतशः सन्दर्शयन्तः पुरो-
दृष्ट्वा पार्थयशः सुतासिह ततः शापाद्विमुच्यामहे॥

सूतः—आयुष्मन्! कोऽयमत्र त्वरितपदो व्याकुल इवाभिवर्त्तते?

कृष्णः—(दृष्ट्वा) अये! मन्दप्रतापोऽयं देवसेनापतिः कार्त्तिकेयः पाण्डव-सिन्धुतरङ्गविक्षिप्त इव दण्डश्वासः।

कार्त्तिकेयः—(प्रविश्यन्नेव) अहह! किमयं लज्जाकरः परिणामो माहशानाम्

योऽहं प्रागवहेलया त्रिभुवनप्रोन्मर्दकं तारकं
देवानां पुरतो निहत्य विदितो देवाग्रसेनापतिः।
माता दैत्यनिसूदनी भगवती तातः स मृत्युञ्जयः
सोऽद्याहं विजितो नरैरिति वरं मृत्योः सुखालिङ्गनम्॥

(विचिन्त्य) अथवा; सर्व्व एव देवाः परैः पराजिता भवन्ति तत् किमस्मद्बुद्धिवैकल्येन? (दृष्ट्वा) अहह! इत एव कदली-वनमिव दन्तावलयूथपतिर्मानवसेनापतिर्धनञ्जयो मानवबल-मुन्मथ्याभिवर्त्तते नाम? तदस्मिन्नेव स्थाने लतागुल्मान्तरित-स्तिष्ठामि (तथास्थितः पुनः पुरतो निरूप्य) आगच्छन्नेव स कथं नाम प्रतिनिवर्त्तते? हन्त हन्त! पश्चाद्देवसेनाभिराक्रान्तः पुनस्तदभिमुखं धावितः (सोत्साहम्) तदलं कालविलम्बेन? अहमधुनैवैनमनुसरामि।

सूतः—आयुष्मन्! क इमे प्रबलतरमाक्रान्ताः फूत्कुर्व्वन्त इत एव प्रसरन्ति?

कृष्णः—कष्टमेतद्दशाविपर्य्ययेण सत्यमतिव्याकुलोऽस्मि; कथं? महादेव-पुरःसरा देवा भीष्मादिभिरनुद्रुताः पलायन्ते नाम?

ततः प्रविशति महादेवः

"धिक् शस्त्रं धिग् बलं दैवं धिक् तेजो जीवितञ्च धिक्।
विर्जिता निर्जराः कष्टमसुरा नरधर्म्मिभिः॥

(दृष्ट्वा) अये! अयं हि स मायामयः परमकापटिको भगवान् समरेऽस्मत्पराजयं सानन्दं प्रेक्षते नाम (अग्रे गत्वा) विजयतां शत्रुपक्षपाती मायामयो द्वारकाधिपतिः।

कृष्णः—शूलपाणे! भवत्पराजयात् किन्नाम ममापि निन्दामलीमसं न भवति यशः?

महा—भगवन्!

जन्ममृत्युर्यशो निन्दा सुखं दुःखं सुधा विषम्।
समतां भजते यस्मिन् तव वाचा फलं नु किम्॥

तत् पृच्छामि, कच्चिदुर्व्वशीशापक्षयं प्रधानीकृत्य देवानां गर्व्वोत्सादनं भक्तानां मानवानां च शक्तिप्रकर्षावेदनञ्चास्याः समरावतारणाया हेतुः?

(नेपथ्ये) भोः! भोः! लोकत्रयनियन्तारो जरामरणरहिताः शक्रपुरोगमा देवाः! मध्यमलोकसन्त्रस्ताः क्व नु खलु पलायन्ते? निवर्त्तन्ताम्; निवर्त्तन्ताम्;—

जाता देवकुले सुधाशनपरा वज्रादिशस्त्रोद्वहा
दैत्यघ्ना अजरामरास्त्रिजगतः सर्व्वार्थकल्पद्रुमाः।
अस्माभिर्विजिता भयाद् यदि पलायन्ते समन्तात्ततो
युक्तं नाम त्रिविष्टता लघुतया येषां लघुत्वं धनम्॥

कृष्णः—(स्वगतम्) युक्तं नाम विजेतृणामेतेषामिदमभिहितम् (प्रकाशम्) अहह! एवमाकर्ण्य कथं भवन्तो महावीर्य्यवत्तरा अपि तूष्णीमासते? त्वर्य्यतां त्वर्य्यताम् मानवबलक्षयाय।

भो भो निर्जरप्रधानाः !

उद्गृह्णीत निजां शक्तिं धत्त चित्ते महत्तमः।
देवाः धावत युध्यध्वं क्रोधाध्माता रणाङ्गने॥

महादेवः—अरे रे प्रबलबलाभिमानदृप्ताः !

तावद्गर्ज्जत फेरुकुक्कुरसमाः संवर्द्ध्य कर्णज्वरं
तावत् तिष्ठत मारुताहतशिखा दीपा इवायोधने।
यावद्बाललताप्रमाथि गजवद् युष्मच्छिरः कोमलम्
भिन्देरन्न च मादृशामिह रणे शूलादयः शस्त्रयः॥

(नेपथ्ये) अपि च भो यदुबलनेतारः! सात्यकिप्रभृतयो योधाः कथयत क्व नु खलु भवतामधिराजः स एव द्वारकाधिपतिः श्रीकृष्णो वर्त्तते; एष खलु भारद्वाजो द्रोणाचार्य्यः समाज्ञापयति—

देवानामपि देवः सोऽप्यनाद्यन्तः परो निधिः।
युध्यस्व यदि शूरस्त्वमेषोऽस्मि समुपागतः॥

कृष्णः—(श्रुत्वा) आर्य्य! दारुक! प्रणीयन्तां तत्र वाहाः; तत्र वर्त्तते स खलु भरद्वाजसूनुर्भगवान् द्रोणाचार्य्यः।

दारुकः—(दृष्ट्वा) आयुष्मन्! अलं गमनेन; स किलात्रागच्छतीति तर्कयामि।

द्रोणाचार्य्यः। (प्रविशन्नेव पुरतो वासुदेवं दृष्ट्वा) यद्यप्ययं हि भगवान् वासुदेवः सह समरकुशलिना सारथिना प्रतिक्षणं प्रतीक्षते समराय; तथापि कथङ्कारमनेन सह योत्स्यामहे?

भोगेषु मोक्षेषु सुखेषु दुःखेष्वसंशयं यः शरणं त्रिलोक्याः।
कृष्णस्य तस्याद्य कथं शरीरे चण्डातिचण्डान् विशिखान् क्षिपामि

तदसारय धनुःशरमनवरतलोकविनाशनक्रूरकर्माहं पादयोः पतामि (तथाकृत्वा) भगवन्! भक्तवत्सल! क्षम्यतां मे पापकलुषितात्मनो ब्राह्मणब्रुवस्य दोषः भवता सह युध्यमानस्य—

स्वधर्ममुल्लङ्घ्य चिराय पापिना मातृस्यपूर्णेन मया कृतं हि यत्।
आत्मानमङ्घ्रितले निपातयन् तत्पापनाशाय नतोऽस्मि पाहि माम्॥

कृष्णः—(उत्थाप्य) वीरप्रधान! कथमकालेनैवाधुना वृथा खिद्यते; उत्तिष्ठतु; भविष्यति कुरुक्षेत्रसमरे प्रायश्चित्तं गमयिष्यति भवान्।

द्रोणः—(उत्थाय) भगवन्! किमिदानीं श्रूयते पुनः कुरुक्षेत्रे युद्धमिति? तत्तस्य युद्धस्य किमेष पाण्डवविजयाभिनयस्य प्रथमाङ्कावतारः?

कृष्णः—यन्मन्यते तत्तथैव।

द्रोणः—अतो हि किमु कौरवकुले वैरं प्रवृत्तम्?

कृष्णः—आर्य्य! भरद्वाजसूनो! रणाङ्गने प्राक्तनवङ्गोत्या युद्धमपहाय कथमिदानीमनधिकारचर्चा क्रियते।

दारुकः—आर्य्य! किमेतत्—

विप्रोऽपि क्षत्रधर्म्मी सन् यद् यदर्ज्जितवान् यशः।
कथं जहाति तद्वद्ध! भीत्या वानुशयेन वा॥

कृष्णः—वातुल! अलमिदानीं वाक्प्लवेन; शस्त्रं गृहाण मा वल्कलं वा प्रविहाय वनं परिव्रज—।

उद्घोषन्तु दशदिशः कार्य्यमार्य्यैर्विगर्हितम्।
चिरावज्ञातसत्त्वस्य क्षतघ्नस्यायशस्विनः॥

द्रोणः—(स्वगतम्) सत्यमित्यभूत एवास्मि (प्रकाशं) यद्येवम्; तदनुजानीहि मां समरावतरणाय।

कृष्णः—युक्तमिदमिदानीं भवादृशस्य महावीरस्य; विजयताम्।

द्रोणः—(प्रणम्य) फलतु मयि सर्व्वथा भगवदाशीः (निष्क्रान्ताः सर्व्वे)

ततः प्रविशत्यपटीक्षेपेण दुर्व्वासा नारदश्च

दुर्व्वासाः—हन्त हन्त भोः;

किमियं मानवोशक्तिर्यतो ब्रह्मपुरःसराः
इतस्ततः पलायन्त वात्याविच्छिन्नपर्णवत्॥

तन्नूनमनेनैव विरोधेन चिराय गास्यत्येव त्रिलोकी मध्यम-लोकस्य यशोगीतिकाम्।

नारदः—ऋषे ! सत्यमिदम्।

दुर्व्वासाः—किन्तु मया ब्रह्मविष्णुरुद्रप्रमुखा देवा यदिह सङ्गमिताः, न जाने तेन मे पापस्पर्शो भविष्यति नवा।

नारदः—ऋषे ! त्रिजगदज्ञाननिराकरणाय यस्याविर्भावः ; स एव रुद्रांशावतारो भवानिति को न जानाति, अतस्ते हि भगवद्भृत-तेजसो महामायया मुग्धा न पुनर्भवता। अतः कथं पापस्पर्शो भवेद् भवादृशस्य।

दुर्व्वासाः—देवर्षे ! पश्यतु पश्यतु—

भीष्मेण क्वचिदीश्वरो हलभृता भीमः क्वचिद्विष्णुना
द्रोणः, क्वापि सुयोधनेन मघवा, कामः क्वचित् सौरिणा।
स्कन्देन क्वचिदर्ज्जुनो जलपतिर्माद्रीसुतेन क्वचिद्
वायुः क्वापि युधिष्ठिरेण च विधिः शाल्वेन योयुध्यते॥

नारदः—इतोऽपि पश्यतु महाभागः,

घणाम्भो विदुरात्तदनुभ्रुकटिका कालभुजगा
मयूरास्तत्पश्चादिति शरशतोद्भूतघटना।
समाकीर्णे युद्धे सुरनरमहानादविकटे
हता बुद्धिर्येन क्व नु परिणतिः किन्नु भविता॥

दुर्व्वासाः—देवर्षे ! इतः पश्यतु वायुर्युधिष्ठिरेण पराजितः पलायते, अथार्द्धमार्गे दण्डधरो यमो युधिष्ठिरं भीषणमाक्रामति।

नारदः—अहो ! विचित्रः खलु पितापुत्रयोः समरः। यदीदृतोऽपि दण्डो दण्डधरस्य वर इव निपतति पार्थशिरसि तथाच—

न च्छिन्ते शतभारेण विस्मृत्या च्यवते न च।
कल्पान्ते न लयं याति धन्यं वात्सल्यबन्धनम्॥

दुर्वासाः—देवर्षे ! इतः शिशुपालसहदेवजरासन्धघटोत्कचादयः शाम्बानिरुद्धसात्यकिप्रभृतिभिः सह युध्यन्ते। तदागच्छतु भवानन्यतः समरमहोत्सवदर्शनाय प्रतिष्ठावहे।

नारदः—ममाप्येतदभिमतम्।

उभौ निष्क्रान्तौ

ततः प्रविशति युधिष्ठिरो यमश्च

युधि—परेतराज !

प्रभावः प्रेतेषु स्फुटति भवतो जीविषु कथं
स ईशः कस्यैवं नहि विदितमस्त्यन्यतरथा।
यदालोकाल्लोकस्तरति नरकात् सोऽस्ति पुरतो
विधातुं किं शक्तो मृतवपुरधीश ! त्वमिह मे॥

यमः—पृथासूनो !

नश्यन्तु शक्तयः सर्वा भव देवविकत्थनिन्।
मद्दण्डाघातनिष्पिष्टसह्यचौरत्वात्तविग्रहः॥

(दण्डं धारयति)

ततः प्रविशति भीष्मो महादेवश्च

भीष्मः—त्रिपुरान्तक !

एवं सर्व्वधनुष्मतामधिपती रुद्रेश एवं भवान्
हत्वैवं त्रिपुरासुरं पुरहरः शूलास्त्र एवं हरः।
शूलश्चोन्नयतामसिश्च निशितं शिष्यानुशिष्योद्यताद्
वाणाद् रक्ष निजं रणेषु विजयात् कार्य्यं समर्थो यदि॥

महादेवः—भार्गवजयिन् ! अम्बास्वयंवरे विजित्य भार्गवं महामदावलेपाद् यदात्मना श्लाघसे ; तदधुना व्यलीकमेवास्तु। यतः

सहस्रार्कज्योतिर्ज्वलदनुदिशं लोकभयदं
त्रिशूलं विश्वघ्नं प्रबलबलदर्पप्रशमनम्।

यदि त्वं शक्तोऽद्य प्रशमय बलात् क्षत्रियशिशो !
निवार्य्येन्ने वेदं स्मर जयफलं तद् रणमुखम् ॥

(शूलं धत्ते)

ततः प्रविशति धनञ्जयः कार्त्तिकेयश्च

धन—तारकारे ! कार्त्तिकेय !

त्वया स्वः सेनान्या दनुजदलनोत्पातपवन !
प्रयुक्तं यद्वीर्य्यं क्व नु खलु गतं तद् युधि मया।
सरोषा दृष्टिर्या यदपि खरशाणप्रहरणं
तव प्रायं हास्यं जनयति विलोक्येदमधुना ॥

कार्त्ति…समरश्लाविन् ! धनञ्जय !

ब्रह्मायं गिरिशोऽयमेष भगवान् एते च दिक्पालका
एते स्थावरजङ्गमा इह रणे ते सन्तु मे साक्षिणः।
षद्यास्त्रोवकरालवक्त्रकुहरव्यादानसञ्चञ्जतं
त्वां पश्यन्तु मया निपातितमसन्मिथ्याभिमानं युधा ॥

(शक्तिमुत्तोलयति)

ततः प्रविशति दुर्य्योधनो देवराजश्च

दुर्य्यों—त्रिदिवाधिराज !

लब्ध्वा ब्राह्मणनाशनेन कुलिशं वृत्रादिशत्रूंस्तथा
जित्वा प्राप्य दिवं दिवस्पतिरथो त्रैलोक्यपूज्योऽपि यत्।
यद्वा जिष्णुरितिश्रुतश्च तपसा तत्सिद्धिरेवं विदुः
का शक्तिर्विबुधप्रमाथिनि रणे मत्तोऽवतु स्वं वपुः ॥

देव—धिङ्मूर्ख ! न मां विदितवानसि, यथा किल—

येनेष्टा विधिना क्रतुं शततमं स्वाराज्यमाप्तं पुरा
यत्तृप्त्यै ज्वलने जुहोति च हविर्देवाश्च यस्यानुगाः
लोका यत्पदकाङ्क्षया विदधते कष्टं तपः सन्ततं
सोऽहं सर्व्वजनाभिनन्दितयशास्तर्केण मूर्खेण किम् ॥

तस्मादुच्चवीर्य्यसंभिन्नमर्म्मा शमनभवनातिथिर्भव।

(वज्रमुत्तोलयति)

ततः प्रविशति नकुलो वरुणश्च

नकुलः—हंहो प्रचेताराज!

अधो भूमौ वासो विचरणमधोदूषिततले-
ष्वधो दिग्राजेन्द्रोऽधमविषधरैर्गाढ़सहिता।
अधोभावे शील त्रिजगदधमस्त्वं परिचितो
न यावद्व्यापन्नो भवति रणतोऽपेहि न चिरात्॥

वरुण—अरे क्षत्रियवाचाट!

अयं पाशः साक्षाच्छमन इव यावन्न पतति
स्फुरद्वह्निज्वालो न च तव शिरो बिध्यति शरः।
यदि प्राणिश्रास्था पत तदधुना मामकपदे
नचेद् रक्षात्मानं करधृतधनुः खड्गपरशुः॥　　(पाशमादत्ते)

ततः प्रविशति शाल्वो ब्रह्मा च

शाल्वः—प्रजापते! पितामह!

वेदस्रष्टा सरसनलिनीनालमध्यस्थितः सन्
शान्तो दान्तस्तपसि निरतो दुर्ब्बलो नित्यसत्त्वः।
धाता वृद्धस्त्वमसि तमसां किन्नु जानासि युद्धे
ध्वन्निणेत्यं लघुभुजधृतेनाद्य किं कर्त्तुमीशः॥

ब्रह्मा—अरे क्षत्रियाधम!

वृद्धो वा हतवीर्य्यो वा मूढ़ो वा युद्धनीतिषु।
एष क्षिपाम्यक्षमालां निवारय यदीशिषे॥

(अक्षमालां गृह्णाति)

ततः प्रविशति द्रोणः कृष्णश्च

द्रोणः—भगवन्! क्षुद्रमानवसमरे कथमधुना व्याकुल इव लक्ष्यते भवान् तथाहि—

घनश्वासैर्वक्त्रः स्फुरति वदनात् स्वेदकणिका
प्रदीप्तेयं मुक्ताफलितरचनां संघटयति।
श्लथीभूतो बाहुश्चरणमवशं तद्वदतु मां
यदीच्छेत् संग्रामाद्विरमतु भवांस्तिष्ठतु रणः॥

न खलु व्यतिभाति योद्धृणां व्याकुलेन समं युद्धव्यापारः

कृष्णः—(स्वगतम्) भारद्वाज! भक्तगौरवरक्षणायेथम्भूत एवास्मि (दृष्ट्वा) हंहो! सर्व्व एव देवाः स्वशक्तिभूषिता वर्त्तन्ते तदिदानीं सुदर्शनोद्धरणसमय एष समुपस्थितः (प्रकाशं) विप्रवीर!

ज्वलत्तेजा वह्निः खररविकरो भीमपवनः
शिवो विश्वध्वंसी स खलु वरुणो वा मृतपतिः।
मघोनो वा वज्रं यदिह न विधातुं प्रभवति
तदेतच्चक्रं त्वां दहतु निखिलञ्च प्रशमय॥

(इति चक्रमादत्ते)

द्रोणः—(अस्त्रं विहाय कृताञ्जलिस्तिष्ठति)

(नेपथ्ये) संहर संहर क्रोधं रक्ष रक्ष जगत्त्रयम्।
शङ्कते प्रलयं विश्वं भीतं सर्व्वं विकम्पितम्॥

ततः प्रविशति खड्गधारिणी दुर्गा

शृणुत विबुधवर्य्या ब्रह्मकृष्णेन्द्ररुद्रा
न खलु न खलु कालः सृष्टिसंहारसिद्धेः।
कथमिह तदिदानीं शक्तिमुत्तोलयन्तो
ज्वलयथ किल यूयं मोहमुग्धास्त्रिलोकीम्॥

(नेपथ्ये ज्योतिर्विकाशः)

सर्व्वे—(विस्मिताः पश्यन्ति)

दुर्गा—(दृष्ट्वा) अये! इयं हि सा शापविमुक्तोर्व्वशी समं श्रीमता दण्डिदेवेनेत एवागच्छति।

ततः प्रविशतः दण्डिराज उर्व्वशी च

दण्डि—अये ! किमेतत्—

सूर्य्यास्था नियतैकतानमनसः कौपीनमात्रच्छदा-
ऽक्षामा वर्षशतानि दुश्चरतपो यान् योगिनो नो विदुः।
ते देवाः कृपयाष्टवज्रसहिता आधिं प्रमार्ष्टुं पुरी
दिष्ट्या येन समागतास्तदधुना धन्यौ स आवां चिरात्॥

(उभौ प्रणमतः)

दुर्गा—हन्त हन्त भो देवाः ! यस्याः शापविमोचनार्थमिह भवन्तो मिलिताः सेयमद्य शापविमुक्ता समं महामखेन श्रीमता दण्डिदेवेन प्रणमति (दृष्ट्वा) अहह ! महामोहेनाभिभूयमानाः कथं भवन्तोऽप्येनां न विबुध्यन्ते (कृष्णं प्रति) रमावल्लभ ! भवन्मायानिरुद्धचेतना देवा नात्मानमप्यवबुध्यन्ते किं पुनरुर्व्वशीवृत्तान्तम्। तदलं मायया ; संह्रियतामियम्।

कृष्णः—एष प्रतिसंहरामि मायाजालम्।

देवाः—एते वयमिदानीं प्रसुप्ते रिव पुनः प्रतिबुद्धाः स्मः।

महादेवः—देवि ! त्वं हि यथा मम तथा सर्व्वेषामपि शक्तिरसि।

ब्रह्मा—सर्वशक्तिमयि ! त्वया किल यया शक्त्या रचितं त्रिभुवनम् पुनस्तयैव शक्त्या—यथा मनस्विना सूर्य्यवंशावतंसेन दण्डिदेवेन सार्द्धं वत्सेयमुर्व्वशी कामं कामयमाना प्रणयप्रकर्षमुग्धमानसा च सती रमयति सर्व्वाः प्रजास्तथा क्रियताम्।

दुर्गा—सुष्ठु मन्त्रितम्। ममाप्येतदभिमतम् किं वा मन्यते देवराजः ?

देव—देवि ! भवादृशजनवाञ्छितेषु नास्ति मे कश्चिद् वाक्यावसरः।

दुर्गा—यदुपते ! भवानेवात्र कार्य्यदर्शी पुरोधाः।

कृष्णः—भवन्तीराज ! लज्जितोऽस्मि भवद्राज्यावरोधापराधाद्भवतः

किन्तु— विनष्टं नो राज्यं न च परिजनः कोपि निहतो
न विध्वस्तः कोषो यदुबलगणैर्यश्च नगरीम्।

निद्रां वा ह्यास्य मिनदसुखरां पश्यति भवान्
मृषा तं सैन्यानां गणयतु विलापं नरपते !

तत् प्रतिपद्यतां यादवपरिरक्षितं निर्विघ्नमिदं राज्यमियमप्युर्वशी भवत एवार्घ्यभूता भूयात् ।

दण्डि—देव ! अबोधगम्या हि मानवैर्दैवकार्य्यपरम्परा ।

उर्वशी—(स्वगतम्) हन्त जीविदाम्हि ।

कृष्ण:—धर्म्माधिराजनन्दन ! एवमेव विदितमस्तु जगतां यथा किल—

घोरं ध्वान्तं हरति तपनो नोज्ज्वला दीपमाला:
सिंहस्त्वेको जयति करिणो नापि मेषाः सहस्रम् ।
पृथ्वीं धत्ते विषधरपतिर्नापरः कोपि जीवो
यूयं तद्वत्प्रथितयशसः केवलं नान्यभूपा: ॥

युधि—भगवत्प्रसादात् सर्व्वमेतत् सम्पद्यते ।

दुर्गा—वत्स ! युधिष्ठिर ! त्वयैव पुत्त्रेण कर्म्मणा त्वया त्रिभुवनमद्य सनाथीकृतम् । तदिदानीं ते यशोराशिमुन्नायतु विश्वम् ।

युधि—भगवति ! मूढ़: किमहं वदामि नात्र किञ्चिद् यत्र भास्वद् भवत्प्रसादात् ; यत:—

सृष्टिस्त्वं लयलीनानां लयः सृष्टस्य वस्तुन: ।
त्वमाद्या प्रकृतिर्नित्या त्वं शक्तिर्विजयात्मिका ॥

दुर्गा—वत्से उर्व्वशि !

एष तेऽस्तु भवत्स्वामी गतिरेषोऽस्ति ते शुभे !
हित्वा य एष सर्व्वं स्वं वत्सां त्वामनुयातवान् ॥

अद्यावधि त्वमैक्ष्वाककुलवधूरसि ।

भीम—(प्रविश्य नेव थाधिक्षेपम्) भो भोः क्षत्रियवीरा: ! कथं भवन्तो निर्व्वीर्य्या इव युद्धाद्विरमन्ति । हन्त भोः कष्टम्—

तीर्त्वोत्तुङ्गतरङ्गनक्रभुजगाम्भास्याकुलं भीषणं
दुष्पारं लवणाम्भसं किमिति भो यूयं तटे मज्जथ ?

क्रान्त्वा दुर्गमभूधरं समतले दन्त्य भजध्वे कथं
लङ्घित्वा निशि कापथं कथमुषा काले हताः स्थ स्थले ?

युधि—वत्स ! वृकोदर ! नेदं युद्धस्थलं ; तद्विरम विरमातिप्रसङ्गात् ।

भीमः—कथम् ?

युधि—उर्व्वशीशापमुक्तिः चात्रधर्म्मप्रतिष्ठा चाघटनघटनपटीयसा यत्-क्रपाकटाक्षमात्रेणैव सम्पादिता, सेयं भगवती करुणार्द्रदृष्टि-स्त्वामवेक्षते । तत् वत्स ! प्रणम ।

भीमः—(सहसा निरीक्ष्य) हंहो ! को नामायमभ्युदयः । भगवति ! नमस्ते (प्रणमति)

दुर्गा—विजयतामव्याहतप्रतिज्ञस्य ते क्षात्रो धर्मः, पुनातु त्वां ज्योतिषां ज्योतिरेकमव्ययम् ।

भीमः—अथ दण्डिदेवस्य का वार्त्ता ?

दण्डी—क्षत्रियप्रधान ! भवत्-पुण्येनाद्य कीदृगसम्भावितपूर्व्वं कल्याणं सञ्जातं यथा शापविमुक्तामुर्व्वशीमहम् प्राप्तोऽस्मि ।

कृष्णः—वत्स ! किं बहुना

उर्व्वशी शापमुक्ता त्वं कीर्त्तिमानसि भूतले ।
सर्व्वनाशश्च देवानां युष्मद्धर्म्मः प्रतिष्ठितः ॥

तत् वत्स ! भीमसेन ! दण्डिराज ! अन्ये च वीरप्रधानाः ! किमतः परं प्रियं करवाम ।

भीमः—भगवन् ! अतःपरमपि प्रियमस्ति । तथापीदमस्तु

भरतवाक्यं—

मेघः पीयूषधाराः स्रवतु, वसुमती शोभतां शस्यपूर्णा,
धर्म्मं ध्यायन्तु वर्णाः क्षितिपतिरवनिं पातु शश्वद्विपङ्कः ।
चन्द्रालोकादिवाभो भवतु कविमनः स्फीतमुच्छ्वासयुक्तं
नाट्यालङ्कारदोषान् हरतु भगवती भारती नित्यशुद्धा ॥

सम्पूर्णोऽयं ग्रन्थः ।

# आवेदनम्

अयि श्रीमन्तः सारस्वतप्रियबान्धवा विद्वन्मुकुटमणयः !

विदितमस्तु भवतां यदद्य संसारसुखभपरःसहस्त्रविपत्सम्पात-समतिक्रमेण सप्तमं संवत्सरमतिक्रम्य चरणपातमष्टमे वर्षे कृतवतीयं संस्कृतसाहित्यपरिषत् परितः परिकीर्णकीर्त्तिप्रताना प्रतनोति प्रकाश-मानप्रकर्षाया भारतवर्षहर्षभूतायाः सुरसरस्वत्याः कामपि काम्यसम्पदं परमकारुणिकपरमेश्वरानुकम्पया नक्तन्दिवमानन्दयन्ती मन्देतरविद्वत्-सम्प्रदायम् ।

एतस्यां किल जन्मदिवसात् प्रभृति प्रभूतप्रशस्तजनकरुणादृष्टि-पातो नितरामस्माकमाशास्थानमभूत् पुनरपि कालेन सुरभारतीसमुन्नति-वृत्तान्ते । इयमपि प्रतिदिवसमुपजायमानोदया दयावतां महोदयानां सदयदृष्टिपातं सुचिराय यथा स्वीयगुणसम्पदैव सम्पादयितुमलं सम्पद्येत, तथैव प्रतिक्षणं प्रवर्त्तत इति प्रार्थोन्नतिमेवास्याः समुन्नतं समर्थयामहे । तथाचेयं प्रतिमासमेकं विद्वत्सङ्गतिमङ्गलमङ्गीकुर्व्वाणा प्राक्तनशास्त्रतत्त्वानि प्रकर्षेण प्रचारयन्ती, सुरभारतीमधिकृत्य परस्परं संवादकृत्यमनुकूलयति, प्राच्यविद्यावतां पाश्चात्यविद्यावताञ्च मिथो विलक्षणप्रेक्षाविनिमयमातनोति, गभीरतत्त्ववेदिनाम् अनाविलप्रतिभा-प्रसूतनिबन्धरत्नमाहरन्ती विद्वत्समाजे साकूतमुपायनीकरोति, विदित-भूयिष्ठानां परीक्षितप्राच्यविद्याप्रकर्षाणाम् आचार्य्यवर्य्याणां असम-साहाय्येन विद्यार्थिनो विविधशास्त्रतत्त्वानि स्वीयविद्यालये समु-पदिशति, यथायोग्यवृत्तिनिष्पादनेन दरिद्रविद्यार्थिनां परिपोषणमङ्गी-कुरुते, यथाप्रकर्षञ्च विद्यार्थिनां पुरस्कारणमपुरीकरोति । प्राचीन-कविनिबद्धानां रूपकाणामभिनयकौशलेन सामाजिकमानसमावर्जयति, तद्द्वारा च वाचामुच्चारणविशुद्धिमध्यापयते ।

प्राच्यविद्यानां भूयसे प्रचाराय तद्गतगभीरसूक्ष्मतत्त्वसमुन्मेषणाय तत्त्वमधिजिगमिषूणां तत्त्वाधिगमसौकर्य्यसम्पादनाय च सुमहद् ग्रन्थागारमेकमारचयति, यत्र साम्प्रतमेव प्रायेण पञ्च सहस्राणि प्राचीनग्रन्थरत्नानाम् उपलभ्यन्ते। हस्तलिखितेषु परःसहस्रेषु ग्रन्थरत्नेषु यथोपयोगं मुद्राङ्कनेन कतिचित् प्रकाशं नीयन्ते। किं बहुना, एतदेव सगर्व्वमेव शक्यते प्रतिपादयितुं यदद्यत्वे संस्कृतसाहित्यसमुन्नतये सुतरामपेक्षितमपि तथा प्रतिष्ठानमन्यत्र परमन्विष्यमाणमपि बहुलं नोपलभ्यते इति।

एतेषां परमहत्त्वानां सर्व्वत्र भारतवर्षे निवेदनाय, सर्व्वपामरसाहायकसम्पादनार्थमुन्मुखीकरणाय, परिषत्परिनिष्ठितविशिष्टशिष्टनिरूपिततत्तद्गभीरतत्त्वविज्ञापनाय, समयोचितसमाचारप्रचारणाय, तथा साधारणेषु सुरभारतीरसनिषेकसम्पादनाय फलविशेषविभूतये च परमपेक्षिता संस्कृतसाहित्यपरिषदभिधाना संस्कृतपत्रिका परिषदो द्वितीये संवत्सरे प्रियवयस्यापदमङ्गीकुर्व्वती यथावसरमद्य यावत् परिषदमाङ्गल्यकार्य्येषु नितरामनुकूलयन्ती सुगृहीतभागधेया निजनामधेयप्रतिष्ठां प्रतीष्टवती समाश्वासयति गीर्व्वाणवाणीचरणश्वासविश्वासवतामपि पाश्चात्यविद्यावतामन्तःकरणानि।

इयमतिगभीरार्था दार्शनिकनिबन्धेषु, परमकोमला रसवती काव्यचिन्तासु, धर्म्मोपचारा स्मृतिपुराणेतिहासादिषु, सूक्ष्मतत्त्वावेदिका विज्ञानविभवेषु, नित्यनूतनसमाचारप्रचारपरा पारिपार्श्विकवृत्तेषु, प्रकर्षापकर्षनिरूपणचतुरा च सारस्वतग्रन्थेषु।

तदस्या भारतवर्षप्रकर्षभूताया: समुन्नतिलाभे केवलं गीर्व्वाणवाणीप्रणयिनामेव समुत्साह: साहायकमवलम्बते। स चायं समुत्साहो द्वेधा भवितुमर्हति अर्थप्रतिपादनद्वारा निबन्धसम्पादनद्वारा च।

न हि परस्परमनपेक्षमाणावर्थनिबन्धौ पत्रिकासमुन्नतिं सम्पादयितुमलं ; तदत्र द्वावेव सुतरामपेक्ष्येते, परन्तु पारिषदानां सदयदृष्टिपातेन लभ्यमानेष्वपि पत्रिकाप्रकाशोपयोगिष्वर्थेषु निबन्धदारिद्र्यमस्मानन्तरान्तरा विषादं लम्भयति, तदाशास्महे यथा संस्कृतविद्याविदग्रोतितमतयः सानुकम्पमल्पमपि लेखपरिश्रममङ्गीकृत्य नित्यनिरतिशयगुणायाः भारतवर्षवैगुण्यवियोगानुगुणायाः गीर्व्वाणगिरो मधुरमधुरामाकृतिं पुनरपि सज्जनसमाजे प्रकटय्य निजपितृपितामहादीनां विलुप्तप्रायं गौरवमितत्पत्रिकाद्वारेण प्रचारयेयुरिति।

अत्र हि काव्यपुराणेतिहासश्रुतिस्मृतिव्याकरणालङ्कारदर्शनादिविषयकाः सर्व्वविधा एव निबन्धाः सादरमस्माभिरुपादीयन्ते, तत् स्वस्वप्रवृत्तिसामर्थ्यानुसारेण सर्व्वेषामेवात्र निबन्धनिष्पादने भूयानधिकारः। अयि भोः संस्कृतविद्यारसिकाः! अलमद्यापि आलस्येन, क्रियतां यथाशक्ति निबन्धसम्पादनेषु परिकरः, समुन्नतिं नीयतामियं भवदपेक्षया दीनदीनं वर्त्तमाना विलुप्तसम्माना सुरसरस्वती, तेन न केवलमस्याः, परं भवतामपि देवीं वाचमुन्नमयतां शाश्वतिकं कल्याणमारादुपतिष्ठेत इति—

विधेयनिवेदकयोः

महामहोपाध्याय-श्रीदुर्गाचरणसांख्यवेदान्ततीर्थ-

तर्कतीर्थोपाधिक-श्रीकालीपदतर्काचार्य्ययोः

संस्कृतसाहित्यपरिषत्पत्रिकासम्पादकयोः।

---

## समालोचनम् ।

**उद्वाहतत्त्वम्** । सटीकानुवादं सपरिशिष्टञ्च । महामहोपाध्याय-श्रीमद्रघुनन्दनभट्टाचार्य्यप्रणीतम् । कलिकाताविश्वविद्यालयाध्यापकेन स्मार्त्तप्रवरेण श्रीमता कृष्णचरणतर्कालङ्कारमहाशयेन सम्पादितम् प्रकाशितञ्च । २६४ पृष्ठात्मकम् । मूल्यं राजतमुद्राद्वयम् ।

अत्र ग्रन्थे मूलं, काशीरामकृतटीका, तर्कालङ्कारमहाशयकृततत्त्व-बोधिनीसमाख्यटीका, वङ्गानुवादः परिशिष्टञ्च वर्त्तन्ते । एतद्ग्रन्थ-सम्पादने तर्कालङ्कारमहाशयेन भूयोदर्शनसुलभप्रगाढ़पाण्डित्यम्, छात्रवत्सलता बह्वायासस्वीकारश्च प्रकटितम् । संक्षिप्ता काशीराम-टीका नेदानीन्तनच्छात्रेभ्यः सम्यग् रोचते । बहुत्र मूलमत्राव्याख्यात-मास्ते । मूलाध्ययनोत्थिताः संशया अपि सर्वत्र न निराकृताः काशी-रामेण । तत्त्वबोधिनी तु सुविस्तरभाषिण्यपि बह्वर्थी बुद्धिमत्-पाठकानां सन्देहकूटतमोपहा च । न केवलमत्र मूलमशेषं व्याख्यातं नवीनानि विज्ञेयवस्तून्यपि बहूनि दयमत्र विज्ञातुमीश्महे । तत्त्व-बोधिनीपाठकानां पत्रिकान्तरेण नास्ति किमपि प्रयोजनम् । अधीत-न्यायविद्यास्छात्रास्तत्राधिकं रंस्यन्ते । प्रश्नोत्तराभ्यां गुरुशिष्यसंवाद-रूपेण विहिते वङ्गानुवादे छात्राः साधारणपाठकाश्च मूलार्थेन समं शास्त्रार्थविचारशैलीञ्च शिक्षितुं शक्ष्यन्ति । परिशिष्टेऽंशे सम्बन्धगणना-कौशलं गोत्रप्रवररहस्यञ्च विशदं व्याख्यातमास्ते, यदि अन्यत्र कुत्राप्येतत्र सविचारयुक्तिकमेव आलोचितं न वयमालोकयामः ।

मन्यामहे ग्रन्थस्यास्य मुद्रणशोधनविधौ तर्कालङ्कारमहाशयेन न सम्यगवधानं दत्तम् । अनाशङ्किता एव भूरिवर्णाशुद्धयोत्र सन्ति । वङ्गानुवादस्य भाषाशैली पाण्डित्यगहनापि नाधुनिकपालोचितेति न वक्तुं न पारयामः । ग्रन्थोत्कर्षविचारेण मूल्यमस्य राजतमुद्राद्वयं

कथमपि नाधिकं, किन्तु ग्रन्थोपादानपत्राणि न चास्य ग्रन्थस्य न वा मूल्यस्यानुरूपाणीत्यपि ब्रूमः।

यथा तथा वास्तु उदाहृतत्वस्येत्यसमाधारणं व्याख्यानं नेतः प्राक् प्रकाशितमिति निःसंशयम्। न केवलं छात्रा गुरवोऽपि एतद्ग्रन्थ-विलोकनेन उपकारविशेषं लप्स्यन्ते।

---

## सन्देशाः।

उपाधिप्राप्तिः—अद्यत्वे अयं नामावशिष्यति राज्ञां प्राच्यविद्यागुणग्रहणश्रीकोविकाशो यत् तद्विद्यावत्सु विशिषवेदिनः केचित् प्रतिवर्षं महामहोपाध्याय इत्युपाधिविशिषेणालंक्रियन्ते इति। तत्र सत्यपि कदाचिदनवधानं सम्पादिते राजपुरुषैस्तादशिमतपण्डितानां विद्याप्रकर्षविचारे 'महामहोपाध्याय' पदं नूनमद्याप्यतिवैशिष्ट्यं सूचयति संस्कृतज्ञानाम्। साम्प्रतं खृष्टीयनवीनवर्षप्रारम्भे विक्रमपुरवास्तव्याः कलिकाताविश्वविद्यालयाध्यापकाः श्रीमन्तः लक्ष्मचरणतर्कालङ्काराः, कलिकातामधिवसन्तो विविधग्रन्थसम्पादकाः श्रीमल्लचण्डीचरणस्मृतिभूषणाः, वाराणसेयास्तत्रत्यहिन्दुविश्वविद्यालयाध्यापकाः श्रीमन्तः प्रभुदत्तशास्त्रिणश्च लब्धमहामहोपाध्यायोपाधिकाः संवृत्ता इत्यतिप्रयेनाभिनन्दामो वयम्। महापण्डितास्ते संस्कृतसाहित्यपरिषदः सदस्याः शुभशंसिनश्चेत्यस्माकमेतद् विशेषतः प्रमोदमुत्पादयति। एते हि शिष्यप्रवेदनपाटवेन ग्रन्थनिर्म्माणप्रदर्शितपाण्डित्येन च प्रसारितवैदुष्यकीर्त्तयश्चिरादेवात्मनस्तदुपाधिलाभयोग्यतामातन्वन्ति। एतेषां सम्माननेन सर्वथा प्रकटितं राजपुरुषाणां योग्यायोग्यनिर्णयनैपुण्यम्। करुणापारावारं परमेश्वरं प्रार्थयामहे—सुचिरं वर्द्धतामेतान् राजप्रसादशुभपञ्जपुञ्जानान् पण्डितधौरेयानवलम्बमाना भगवती संस्कृतविद्येति।

**श्रीश्रीसारदेश्वरीविद्याश्रमः—** अद्य बहुसमाः समभवन् कलिकातामहानगर्य्यां श्रीश्रीगौरीपुरीदेव्या सुप्रतिष्ठापितस्य श्रीश्रीसारदेश्वरीविद्याश्रमस्य । तत्र नियमेन बालिकानां सनातनधर्म्मानुकूलप्रथानुसारेण स्त्रीजनोचितचारित्रस्थितिव्यवस्थापनेन संस्कृतप्रधानशिक्षायाः प्रवर्त्तनमस्तीति परं प्रमोदस्थानं नः । तत्र च सम्प्रति सुतरामिदमाशास्थानं यत् एतावत्कालं भाटकेन परकीयगृहमध्यासीनः सोऽयं विद्याश्रमः केषाञ्चन तथा शिक्षानुरागिणां सहानुभावतया प्रदत्तेन प्रदास्यमानेन चार्थसञ्चयेन श्रीश्रीगौरीपुरीदेव्याः प्रवयसोऽपि प्रौढ़जनोचितसमुत्साहेन तथा केषाञ्चन सत्कर्म्मसम्पादनसमुत्साहिनां निरन्तरपरिश्रमेण स्वीयमावासमध्यासितुं प्रवर्त्तते। स चावासः कलिकातानगर्य्यां श्यामविपणिसन्निहिते बलरामघोषवर्त्मनि सुतरां निपुणेन स्थपतिभिः सम्पाद्यते तदाशास्महे न चिरादस्य कृत्यपूर्त्तिं नानाविधप्रशस्तशिक्षाणां सुप्रसारम् । सर्व्वथा तत्र सहायभूतानां भगवान् भूतनाथो भव्यमव्याहतमुपदिशत्विति ।

**विचारपतेरवसरः—** विदितमस्तु सम्प्रति पाठकमहाभागानां यथा नानागुणाधाराः स्वनामधन्याः श्रीमन्तः स्वरङ्गतुरपाधिकाः बहुविधानुपाधीनङ्गीकरणेन कृतार्थीकृतवन्तः पृथिवीरत्नभूता आशुतोषमुखोपाध्यायसरस्वतीपादाः सुचिरं सुप्रशंसं कलिकाताप्रधानविचारालये विचारपतिपदमर्य्यादामनुभूय साम्प्रतं तत्पदादवसरं समलभत । अस्य तदानीन्तनकार्य्यकीर्त्तिः सुमहान्तमेव कालं स्मरिष्यन्ति विचारचतुराः पारमार्थ्येन । सहस्तमस्यास्य सर्व्वेष्वेव विषयेषु दृष्टार्थ एव महिमा । तदिदानीमाशास्महे यदयमनन्यकर्म्मा स्वप्राणभूताया विश्वविद्यायाः कृते जीवनव्यापिपरिश्रममचिरादेव सफलं कुर्य्यात् । सरस्वती नाम तमपेक्षमाणा सुचिरं वर्त्तते ।

---

---


प्रकाशको मुद्रापकश्च—श्रीजानकीनाथकाव्यतीर्थः।

संस्कृतसाहित्यपरिषद्भवनम्, श्यामवाजार ष्ट्रीजरोड, कलिकाता।

मुद्रणस्थानं—श्रीप्रेस ; १०७, कर्णवालिस ष्ट्रीट, श्यामवाजर, कलिकाता।

८४५ शकाब्द । Reg. No. C. 1073. वर्षस्य
माघे । १०म संख्या
February 1924. Vol. VI. No. 10






संस्कृतसाहित्यपरिषदो मासिकं मुखपत्रम् ।

सम्पादकौ— महामहोपाध्यायश्रीदुर्गाचरणसांख्यवेदान्ततीर्थः
श्रीकालीपदतर्काचार्य्यश्च
सहकारिसम्पादकः श्रीजानकीनाथसाहित्यशास्त्री ।



खण्डमूल्यं ।० चतुराणकम् ] [ वार्षिकमूल्यं ३) रूप्यकत्रयम् ।
Foreign price 7s. yearly including postage.

परीक्षापाठ्यभूतानि पुस्तकान्यपराणि च ।
लभ्यते न्याय्यमूल्येन परीक्षा प्रार्थ्यते सताम् ॥

संस्कृत-पुस्तकालय, निवेदिता लेन, बागबाजार, कलिकाता ।
अध्यक्षः श्रीजानकीनाथकाव्यतीर्थः ।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

१८४५ शकीये माघे, ६ष्ठ-वर्षस्य १०म-संख्या

## सारस्वताष्टकम् ।

आयुर्वेदाचार्य्यः श्रीहेमेन्द्रचन्द्रव्याकरणतीर्थः ।

( १ )

मातर्भारति ! शतशशिभास्वति !
सहस्ररतिपतिकान्ततरे !
हृदि पदमर्पय, तामसमपनय,
नवरुचिकिशलयचारुकरे !
सुललितचरणे ! मृगशिशुनयने !
त्रिभुवनभवने नित्यरते !
देवि सरस्वति ! नवनवरसवति !
करुणां कुरु सति ! दीनस्तुते ॥

( २ )

चरणाचुम्बित- मेघविनिन्दित-
चिक्कणकुञ्चितकेशकुले !
नतनिर्ज्जरगण- शीर्षविघर्षण-
मणिमहसारुणपादतले !

चित्रितशतदल- तनुतरकोमल-
रजतसुनिर्म्मलवस्त्रवृते !
देवि सरस्वति ! नवनवरसवति !
करुणां कुरु सति ! दीनसुते ॥

( ३ )

अमलकमलदल- रुचिरसुकोमल-
शततपनोज्ज्वलदेहधरे !
सद्यस्त्वगधर- निर्ज्जितसुन्दर-
वदनसुधाकररम्यतरे !
त्वमसि प्रवीणा नित्यनवीना
सुललितवीणावादरते !
देवि सरस्वति ! नवनवरसवति !
करुणां कुरु सति ! दीनसुते ॥

( ४ )

हृतभवदुष्कृत- हास्यविकाशित-
मौक्तिकनिन्दितचारुरदे !
सितदशशतदल- निर्म्मितनिर्म्मल-
मस्तयासनतलदत्तपदे !
मरालपत्रे ! जननि ! पवित्रे !
मय्यपवित्रे पादनते
देवि सरस्वति ! नवनवरसवति !
करुणां कुरु सति ! दीनसुते ॥

( ५ )

सूर्य्यकिरीटिनि ! भुवनविमोहिनि
सूर्य्यकान्तमणिशुभ्ररुचे !

सततस्यन्दित-   विश्रामान्नत-
शैलसमुन्नतपीनकुचे !
प्रसूनसुन्दर-   हारमनोहर-
कण्ठि ! द्विपवरमन्दगते !
देवि सरस्वति !   नवनवरसवति !
करुणां कुरु सति ! दीनसुते ॥

( ६ )

त्रयीप्रसूते !   विबुधप्रीते !
गीतसुगीते ! वर्णमयि !
ज्ञानपयोनिधि-   तितीर्षुजनहृदि
निवससि निरवधि शान्तिमयि !
त्वं मुनिराध्या   जगदाराध्या
निर्मलविद्या कल्पलते !
देवि सरस्वति !   नवनवरसवति !
करुणां कुरु सति ! दीनसुते ॥

( ७ )

दैवतभाषे !   सुमधुरभाषे !
जाड्यविनाशे ! बुद्धिप्रदे !
मातर्मनीषि-   मानससरसी-
सञ्चारहंसि ! भावनिधे !
श्वाससुसौरभ-   मृगमदगौरव-
हारिणि ! धीधनदानरते !
देवि सरस्वति !   नवनवरसवति !
करुणां कुरु सति ! दीनसुते ॥

( ८ )

मम घनतिमिरे हृदयकुटीरे
विश विश धीरे! ज्ञानमयि!
सुचिरनिरुद्धां हर मेऽविद्यां
विशुद्धविद्यां देहि मयि!
करुणासारे! "हेम"नूपुरे!
नृत्य मदन्तर्निश्शब्दे!
देवि सरस्वति! नवनवरसवति!
करुणां कुरु सति! दीनस्तुते॥

---

## शास्त्रसामञ्जस्यम्।

( पूर्वानुवृत्तम् )

लेखकः महामहोपाध्यायश्रीकैलासचन्द्रकाव्यव्याकरणसांख्यपुराणतीर्थभट्टाचार्यः।

हे समितिप्रवर्त्तका महात्मानः! मन्ये भवन्तोऽपि सर्वदर्शनसंग्रहकृन्माधवाचार्य्यवत् साम्प्रदायिकवेदान्तवादानुवर्त्तिनः। कथमन्यथा तृतीयपञ्चमषष्ठेषु प्रबन्धनिर्द्देशवाक्येषु षसामार्ष दर्शनानां मध्ये विना वेदान्तं सर्व्वाण्येवोल्लिखितानि? हन्त भोः! यदि व्याससूत्रे शाङ्करभाष्यमेव प्रमाणीकृतं भवद्भिस्तदा किमिति साङ्ख्ययोगपाशुपतादिदर्शनसार्थक्यमिति प्रश्नावतारः कृतः? तेन हि भाष्यकारेणाविरोधाध्यायं खण्डनाध्यायीकुर्व्वता सर्व्वाण्येवान्यदर्शनादीनि तुच्छीकृतानि। किं बहुनोक्तेन "आदिविद्वान् निर्म्माणचित्तमधिष्ठाय कारुण्याद् भगवान् परमर्षिरासुरये जिज्ञासमानाय तन्त्रं प्रोवाचेति" इत्येवं योगभाष्यादिषु बहुषु ग्रन्थेषु यस्य महिमा ब्रह्मसूत्रकृता कीर्त्तितस्तथैवालोकलोकतापि भाष्यकृता परिकल्पिता। सुतरां भवतामपि कियतां

तत्र कथञ्चिदनास्थैवोज्झिता परिलक्ष्यते साङ्ख्यादिसार्थकत्वविषयक-प्रश्नोपस्थापनात् । तस्मान्मयापि सम्प्रदायविद्द्वेषभयगृहीतं मौन-मपहाय श्रवणोत्सुकानां महतां पुरतः सर्वदर्शनसार्थक्यनिवेदनम् क्रियते ।

तत्र षड्दर्शनस्याप्तोपदेशत्वात् सामान्यतः प्रकृतपुरुषार्थसाधन-मिति प्रतिज्ञायते । आप्ताः के नामेत्याकाङ्क्षायां भ्रमप्रमादविप्रलिप्सा-रहितत्वमाप्तत्वमिति सुप्रसिद्धमेव तल्लक्षणं सामान्यतो ग्राह्यं, विशेषतश्च

"रजस्तमोभ्यां निर्मुक्तास्तपोज्ञानबलेन ये ।
येषां त्रैकालममलं ज्ञानमव्याहतं सदा ॥
आप्ताः शिष्टा विबुद्धास्ते तेषां वाक्यमसंशयम् ।
सत्यं वदन्ति ते, कस्मादसत्यं नीरजस्तमाः ?

इत्येवं चरकीयसूत्रस्थानादौ द्रष्टव्यम्; अनार्षदर्शनानां गौण-पुरुषार्थसाधनत्वं पश्चादेव प्रतिपादयिष्यते । प्रतिज्ञाते षड्दर्शनस्य परमपुरुषार्थसाधनत्वे प्रथमतस्तावदिदमेवालोचनीयं यदेतानि दर्शनानि किं प्रस्थानभेदाः, किं वैकप्रस्थानमिति, तत्रान्योन्यं विवदमानैः शवरादिभिः प्रस्थानभेदपरिकल्पनया यो महान् व्यामोहः प्रवर्त्तितः, स हि तदाप्तवचसां सामञ्जस्यमभिनिविशमानैरस्माभिः सुदूरमपसारणीयः । दर्शनानां तथात्वे हि "नान्यः पन्था विद्यतेऽय-नाये"ति श्रुतिविरोधभिया कस्यचिदेकस्यैव प्रोक्तसार्थक्यमङ्गीकृत्य अन्येषामानर्थक्यमेवापाद्यते शारीरकभाष्योक्तदिशा । ततश्च सर्व्व एवैकदेशिनो यथापूर्वं विवदिष्यन्ते, न तु युगसहस्रैरपि सामञ्जस्यमुप-लभ्येत भवद्भिरतः सर्व्वाण्येव साम्प्रदायिकमतानि वह्निप्रावारकभस्मवत् फूत्कारैरुत्क्षिप्य दृश्यतामार्षविज्ञानालोकः । यदेवमार्षदर्शनाना-मेकप्रस्थानत्वं मया प्रस्तूयते, तदप्यभिनवसाम्प्रदायिकवादोपस्थान-मिति न शङ्कितव्यं भवद्भिर्मया हि विहायार्षवाक्यं नैकमप्यक्षरमभि-धास्यते सामञ्जस्यसिद्धान्तायेत्यनुसन्धातव्यमेव ।

वेदान्तदर्शनीयतृतीयाध्यायचतुर्थपादे "पुरुषार्थोऽतः शब्दादिति वादरायणः ॥१॥ शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥२॥ आचारदर्शनात् ॥३॥ तच्छ्रुतेः ॥४॥ समन्वारम्भणात् ॥५॥ तद्वतो विधानात् ॥६॥ नियमाच्च ॥७॥ अधिकोपदेशात्तु वादरायणस्यैवं तद्दर्शनात् ॥८॥ तुल्यन्तु दर्शनम् ॥९॥ इत्येतेषु नवसु सूत्रेषु निष्प्रतीकं प्रणिधीयतां निपुणतमैर्भवद्भिरशेषदेशीयविविधविद्याकुशलैर्लब्ध-यशोपलब्धनिष्ठार्कैः। सूत्रकृतां स्वोक्तेषु दुरूहणीयांशव्याख्यानाय सूत्रान्तरं बहुशो दृश्यते। यथा "चोदनालक्षणोऽर्थो धर्म्म" इत्यत्र चोदनाशब्दव्याख्यानाय—"चोदना पुनरारम्भ" इति जैमिनेः सूत्रान्तर-मस्ति। दिङ्मात्रमिदं मया प्रदर्शितं। तथैवात्र वादरायणस्या-प्येतदादिमं सूत्रं ग्रन्थादिमसूत्रस्यस्थातः शब्दस्य व्याख्यानायैवारब्धम्।

तथाहि "अथातो ब्रह्मजिज्ञासे"त्यत्र अथेत्यधिकारानन्तरं अतः प्रयोजनाद् ब्रह्मजिज्ञासा भवतीति प्रथमसूत्रस्य निष्कृष्टोऽर्थस्तत्र कुतः प्रयोजनादित्याकाङ्क्षाया दुष्पूरतया स्वयं व्याख्यायते सूत्रकृता प्रथम-सूत्रस्यादतः शब्दात् पुरुषार्थो बोद्धव्य इति वादरायणो वक्तीति शेषः। निर्व्वाणमात्रं पुरुषार्थ इति मया प्रागेव स्फुटीकृत्य प्रदर्शितं। तदे-वात्र ब्रह्मजिज्ञासायाः साक्षात् प्रयोजनमिति प्राप्तम्। ननु वादरायण इति वक्तीत्यनेन पुनरन्यथापि कश्चिद्वदतीत्याक्षिप्तं तत्कथमित्या-काङ्क्षायामाह "शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनि"रिति द्वितीयसूत्रम्। जैमिनिराचष्टे "अथातो धर्म्मजिज्ञासेति मदीयसूत्रे अतः शब्दात् पुरुषार्थवादो बोद्धव्य इति पुरुषार्थं विहाय पुरुषार्थवादः कथं प्रयोजनीक्रियेत इत्याशङ्कायां शेषत्वादिति पुरुषार्थवादस्यापि पुरुषार्थाङ्गत्वादित्यर्थः। तथा च यथान्येषु न्यायवैशेषिकसाङ्ख्य-योगेषु पुरुषार्थाङ्गानामेव प्रयोजनत्वं तथात्रापि पुरुषार्थवादस्येति दृष्टान्तोपन्यासेन प्रोक्तं दृढ़ीकृतम्। (क्रमशः)

---

# नलदमयन्तीयम्

## नाटकम्

( प्रविशति सूत्रधारः )

कालिन्दीकलगानसङ्गतवियत्सञ्चारिवेणुस्वरो,
राधाकुञ्जलतान्तसौरभहरः श्यामप्रभासुन्दरः।
नन्दानन्दकरक्रियासहचरो गोपीहृदां तस्करो,
गोविन्दो वितनोतु वः शिवपदं शृङ्गारदेवो हरिः॥

अपि च

भक्तानामभयाय यस्य महिमा दुःखाय कोपाङ्कुरः
पाञ्चभ्यश्च यदर्चनासु विमतिः पुण्याय यन्नामना।
यः स्रष्टा चतुराननः स्थितिहते विष्णुः शिवः संहृतौ,
सोऽयं वो विदधातु वाञ्छितफलं सर्वार्थकल्पद्रुमः॥

अपि च

कालं कञ्चन गोकुले व्रजवधूसङ्गादनङ्गीभव-
न्नक्रूरेण जगाम यो हि मथुरां निक्षिप्य शोकेऽखिलान्।
विस्मृत्येव चिराय गोपजनतासुत्सारयामास यः,
सोऽयं वो वितनोतु वाञ्छितवरं शृङ्गाररङ्गी चिरम्॥

(निष्क्रान्तः)

(ततः प्रविशति प्रमोदं नाटयन् स्थापकः)

स्थापकः—अलमतिप्रसङ्गेन, नूनमिदमस्माकं प्रमोदस्थानं सामाजिकचित्तमनुवर्त्तयतां, यदस्मत्सतीर्थगीतेन श्रोत्रामृतेन नान्दीसङ्गीतेन चित्रार्पितारम्भ इव सर्वतो भाति रङ्गः ; तथाहि—

दृष्टिर्निश्चलतां दधाति नितरां योगे यथा योगिनाम्,
दिव्यानन्दविलोपशङ्कित इव स्थैर्यं गतो विग्रहः।

दूरे प्रस्खलितमन्तरेण सहसा कस्यैचिदासत्तये,
गीतानुस्खलतो न गीतविरतिं सामाजिका जानते ॥

अथवा किमत्र चित्रं यत् सुधाकरः सुधाकिरणसम्पातेन शरीरं, नैवं मानसञ्च सुमनसां सन्तर्पयतीति। तथाहि—एतत्सङ्गीतपरिचयं लब्धवतो ममापि—

यावद्दूरं मूर्च्छनायाः प्रचारस्तावद्दूरं मानसं सम्प्रहृष्टम्।
भावावेशाद् विस्मृतं सर्वमेतद् गीतं लोके सर्वसौभाग्यसीमा ॥

तन्मन्ये शुभोदर्कोऽयं समारम्भो भविष्यतीति, कुतः—

आदौ जलधरमाला विलसति तदनन्तरं वृष्टिः।
कुसुमविकाशादूर्द्ध्वं भवति फलानां समुद्भेदः ॥

( विस्मृतिं नाटयन् ) अथ कीदृशस्तावदद्यतनः प्रकृतसमारम्भः ? (स्मृतिमभिनीय) आं स्मृतमिदानीं,—

अद्य खलु निरवद्यविद्याविद्योतितमतीनां वासन्तमहोत्सवे सम्मिलितानां रसभावविदां कोविदमहत्तमानां बहुमानाय पुरन्दरवंशाङ्कुरेण सुगृहीतनाम्ना तर्काचार्य्यपदलाञ्छनेन कविना—समर्पितमस्माकं "नलदमयन्तीयम्" नाम नाटकं यथारसमभिनेतुम्। यस्य हि कवेः

शैशवात् प्रभृति काव्यसम्पदा धीरधीनयति धीरसमाजम्।
पादपो विपुलविग्रहलम्भी सूच्यते प्रथमतः किल पत्रैः ॥

अपि च तत्र

तर्के सुविशदतत्त्वे प्रतिभा प्रथिता यथाकामम्।
नानादर्शनविद्यामाज्ञापयति प्रभोस्तुल्या ॥

अस्ति च सूक्तमिदं कवेरस्यैव तत्र, यथा—

कालानुरूपरचनाप्रचितं यदि स्यात्
काव्यं, तदा कवयितुः कविता चकास्ति।
वीरस्य भूषणमरातिवधे कृपाणं,
शृङ्गाररङ्गसमये तदयोग्यमेव ॥

तदु यावदनेन कालानुरूपप्रसादरचनाललितेन नवीनरूपकेण सामाजिकानाराधयितुं पारिपार्श्विकमामन्त्रयामि। (नेपथ्याभिमुखमालोक्य) अये ! अयाचितादेव जलधरात् प्रस्रवतीयं जलधारा, यदनामन्त्रित एव स्वयं पारिपार्श्विकः प्राप्तः। अये ! किमयं सचिन्त इवोपलक्ष्यते ? भवतु पश्यामि। (तदभिमुखं स्थितः)।

(प्रविश्य सचिन्तः पारिपार्श्विकः)

पारि—भाव, अभिवादये।

स्थापकः—मारिष, सचिन्त इव लक्ष्यसे, तत् किन्नु खल्विदं ? कच्चित् नातिमात्रचिन्ताकारणं किञ्चित् ?

पारि—भाव, महदिदं चिन्ताकारणमुपनतम्।

स्थापकः—कथमिव ?

पारि—भाव, श्रूयताम्,—योऽसौ देवव्रतस्य पुत्रो दानव्रतो नाम बहुलप्रयत्नेन दमयन्तीभूमिकामध्यापितः, स खलु साम्प्रतं परीक्षावाञ्छया मया पृष्टो मत्त इव सर्व्वं विशृङ्खलमेव कथयति। अथ तस्य कारणमन्विच्छता मया तदीयप्रियसुहृदो विश्वावसोर्मुखात् श्रुतं, यथा कदाचिदसौ दानव्रतो वसुमित्रस्य भवनं कार्य्यव्यपदेशेन गत्वा यदैव तदात्मजां वसुमतीं चित्रे दृष्टवान्, ततः प्रभृत्येव तस्य मानसविकारो जात इति। तदद्य दमयन्तीभूमिकाभिनयस्य कीदृशी गतिः कर्त्तव्या ?

स्थापक—अहो दैवम् !

तटिनी विपुलतरङ्गा तरणी लग्ना तटोपान्ते।
तरितुं वाञ्छति पान्थे मरुता सहसा विभग्नासौ॥

(विचिन्त्य) अथवा मारिष, अलं चिन्तया, अयमहं सर्व्वासु भूमिकासु सुगृहीतपरिचयस्तदधिकारमनुतिष्ठेयम्। अथ मारिष, दानव्रतो नाम नाम्ने सुतरामनुरागवान् आसीत्, सोऽपि तादृशीमवस्थां नीतः कन्दर्पेण ? अथवा नास्ति किञ्चिदशक्यं कामदेवस्य, तथाहि—

कामात्महेन्द्री गुरुदारगामी, पद्मासनो दीव्यति देहजायाम् ।
प्रज्ञा च लज्जा च मनोबलञ्च प्रलीयते सर्व्वमिदं स्मरेण ॥

(नेपथ्ये) साधु शैलूषपुत्र साधु, सम्यगुक्तवानसि, "प्रलीयते सर्व्वमिदं स्मरेण" इति ।

पारि—भाव, क एष नेपथ्यस्थानगतो भवद्वचनमनुहरति ?

स्थापकः—मारिष, प्रियं नः प्रियम्, एष तावदस्मत्सतीर्थो मित्रगुप्तो विदूषकभूमिकामधितिष्ठन् इत एवाभिवर्त्तते, तदेहि आवामपि स्वनियोगमनुतिष्ठावः । (निष्क्रान्तौ)

प्रस्तावना

---

(प्रविश्य विदूषकः)

विदू—साधु शैलूषपुत्र साधु, सम्यगुक्तवानसि, "प्रलीयते सर्व्वमिदं स्मरेण" इति । अन्यथा य एव मे प्रियवयस्यः पुरा कौमारसुलभलज्जापेशलो रमणीनां नामापि नैव स्मृतवान्, सोऽयमिदानीं रमणीजनवियोगदुर्भरमात्मानं मन्यमानः कथं शोचनीयां दशामनुप्राप्नुयात्, नायं सम्प्रति प्रियेषु रमते, नापि राजकार्य्येषु मनो दधाति, केवलं शून्यान्तःकरण इव शून्यमुदीक्षमाणो दीर्घं दीर्घं निश्वसिति, अन्तरान्तरा च तद्गतेन चेतसा परिचिन्तयतो गण्डाभोगे मुक्तास्थूला अश्रुबिन्दवः प्रवहन्ति । अहो विचित्रशक्तिमानितोऽपि मे प्रियवयस्यः, येन तथाभूतं वाष्परयप्रवर्त्तकमपि वेदनासम्भारमन्तर्निरुध्य एतावतो दिवसान् राज्यकार्य्याणि सम्पादितवान्, अद्य तु कामेन सुदुःसहामवस्थां नीतः प्रकाशमानं भावं रक्षितुकामः पुरोपकण्ठोपवनविहारव्याजमाश्रित्य इह मिलितः । (विभाव्य) अथ कीदृशीयं विदर्भनन्दिनी, यां ललितलावण्यां चित्रगतामीक्षमाणः सुतरामधीरतां यातो मे प्रियवयस्यः ? यादृशी चित्रगतामी परिदृश्यते, यदि सा तथैव, तदा समुचित

एव तादृशो मानसनिर्बन्धो वयस्यस्य; किन्तु तत्रैव भूयान् संशयः समुदेति, अपि सम्भवति मानुषे लोके तथाभूता कमनीयलावण्यसम्पत्? अत्र विदर्भप्रत्यागता वन्दिनः कामिनीगुणकथनावसरे तथैव तामुद्घोषयन्ति; तत्र विदर्भप्रदत्ता उत्कोचविशेषा एव प्रभवेयुः। भवतु यथा तथा वा, दमयन्ती नारीकुलेषु परमामेव प्रशस्तिमुपगच्छति इत्यत्र नास्ति सन्देहः। भवतु साम्प्रतं वनपालमाहूय वयस्यस्य निर्वृतियोग्यं प्रदेशं निरूपयामि। (परिक्रम्य) अये! एष वनपालो लज्जितरूपया वनपालिकया सनृत्यसङ्गीतमनुतिष्ठन् इत एवाभिवर्त्तते, भवतु एतयोर्विश्रम्भपरिपालनाय पादपान्तरालमाश्रयामि।

(पादपान्तरालमाश्रयन् स्थितः)।

(ततः प्रविशति वनपालिकया सह सनृत्यसङ्गीतम् अनुतिष्ठन् वनपालः)

वनपालः— मार्जय लघु पर्णराशिगहनकाननम्,

(चल) काननमनु कुसुमं चिनु सुतनु! मोहनम्!

वनपालिका—

सलिलसेकमनुधारय रेणुविरहमनुपालय

परिचर नवलतिकाकुलमवनीशरणम्।

वनपालः—(सस्वरं) सिञ्चति तव चरणकमलदाम एष नीरम्

वनपालिका—(सस्वरं) धिक् प्रहसनमाशु वचनमुपसंहर धीरम्

(कोपं नाटयति)

वनपालः— कुरु कुरु सति कृपया मयि सरललोचनम्

उभौ—(चल) काननमनु कुसुमं चिनु सुजनमोहनम्।

विदू—अहो रागपरिवाहिणी सङ्गीतपद्धतिः!

वनपालः—अले पुत्तप्पसविणि, अवि ओधालेसि, अज्ज इध महालाओ आअदोत्ति?

वनपालिका—अज्जउत्त ण क्खु, ओधालेमि, ता कधं विअ?

वनपाल:—सुणु, जइ ण ओधालेसि, अज्ज केण वि कालेण विअलिदहिअओ महालाओ वअस्सवह्मणेण अत्तणकेलएहिं पलिअणेहिं अ अणुगदो काणणं एदं पलिप्पत्तो, ता णिच्चकादव्वं कलिअ अहिअं वि सक्कालं काणणस्स कलेह्म।

वनपालिका—अध अज्जउत्त, महालाअस्स वि दुक्खं वट्टदि? जेण सो वि विअलिदहिअओ होदि?

वनपाल:—कुड़ुम्बिणि, किं णु क्खु, एदं ण जाणेसि, जधा जस्स जाव सुहं, तस्स दाव दुक्खं, जधा णाम महालाओ अहिअं सुहं अणुहोदि, तधा ज्जेव कालणविसेसेण दुक्खं वि अहिअं ज्जेव।

वनपालिका—एव्वं से दं?

वनपाल:—अधइं।

विदू—अहो निपुणवेदिता वनपालस्य!

वनपालिका—अध एव्वं ट्ठिदे, किं णु क्खु माणुसो लाअसुहं अहिकासेदि?

वनपाल:—तं क्खु सुहमेत्तविसाणेण मोहादो ज्जेव।

वनपालिका—अध अह्माणं लाआ किं अदो ज्जेव कालणादो लाअघलअं पलिहलिअ काणणुद्देसं प्पट्ठिदो?

वनपाल:—को वा भणउ? सुदुग्गमा क्खु लाअचित्तवित्ती, कधं अह्मेहिं अणुहोदव्वा? ता चिट्ठदु एदं जाव दाणिं अत्तणकेरआइं कज्जाइं सम्पादेह्म। (वनभूमिं संस्कुरुत:)

वनपालिका—णाह, अज्ज क्खु उज्जाणेसुं प्पविसन्तो लाअपुलिसा लुक्खआणं महन्तं विआरं उप्पादअन्तो ण मे रोअन्ति।

वनपाल:—कधं विअ?

वनपालिका—किं ण क्खु पेक्खदि णाहो, एसो वसन्तावदाररमणिज्जे वि समए अवणीदपुप्फकिसलओ लुक्खसमूहो भूसणसुण्णो विअ लाआ अहिअं ण सोहदि, लुक्खतलेसुं खण्डिदा पुप्फकिसलआ

सूलकिलणमिलासा अहिअं मानसदुक्खं उवजणअन्तो राअन्ति।

वनपालः—कुड़ुम्बिणि, किं एत्थ दुक्खं, लाअपुलिसाणं किदे ज्जेव संवड्ढिदा अह्मेहिं रुक्खआ, ता जइ लाअपुलिसा ज्जेव तधा अणुचिट्ठन्ति, णं कड़त्था क्खु एदे।

वनपालिका—तह वि पुत्तआणं सलीलक्खोहो विअ लुक्खआणं पुप्फकिसलअव्भंसो मं दुक्खावेदि।

विदू—युज्यते, वनपालिकायाः पुत्रकेष्विव वृक्षकेषु स्नेह एवम् अनुभावयति।

वनपालः—अले जहा तहा होदु, एहि रुक्खएसुं जलं सिञ्चेह्म।

वनपालिका—जहा आसवेदि अज्जउत्तो! (इत्युभौ परिक्रामतः)

विदू—(दृष्ट्वा) अये एष वनपालो वनपालिकया पादपालवालेषु सलिलसेकाय इत एवाभिवर्त्तते, तत् कथमिदानीं आत्मपक्षः परिरक्ष्यताम्? अथवा, किमात्मपक्षपरिरक्षणचिन्तया, अहं खलु प्रबलपराक्रमस्य निषधराजस्य वयस्यो, यदेव मया प्रस्तोतव्यं, तदेवात्मपक्षपरिरक्षणक्षमं भवेत्, तदलमन्यथा शङ्कया, अथवा यदि नासिकागर्जनेन निद्रां नाटयेयं, तदैव स्वपक्षो रक्षितः स्यात्, तदेवमेव करिष्ये, यावदेतौ मां गभीरनिद्रामूढ़ं मन्येयाताम्

(नासिकागर्जनेन निद्रां नाटयति)

वनपालिका—(सभयं) अज्जउत्त, कुदो णु क्खु, एसो सूअलघोणासद्दो प्पसलदि, णत्थि एत्थ पुला को वि सूअलो दिट्ठो, ता किं णु क्खु एदं?

वनपालः—एसो संसओ मं वि पज्जाउलं कलेदि, ता तुमं इध चिट्ठ जाव अहं पेक्खामि।

वनपालिका—मा क्खु! मा क्खु, सूअलो णाम पइदिपलुसा जादो, ता अलं तस्स समीवप्पट्ठाणेण, एहि उड़अं गच्छेह्म।

वनपाल:—भील, अलं आसङ्काए, अथवा आअच्छ तुमं वि मह ज्जेव, जाव सव्वं देक्खिस्ससि।

वनपालिका—एव्वं भोदु। (इत्युभौ विदूषकमभिसरत:)

वनपाल:—अले ण क्खु एसो मूअलो, एसो को वि माणुसो पादवस्स तलट्ठाने णिद्दासुहं अणुहोदि,

वनपालिका—णं को णाम एसो भवे? अथवा अअं लाअपलिजणो त्ति णत्थि एत्थ सन्देहो।

वनपाल:—थध पेक्खिअ किदणिच्चओ होमि।

(इति निपुणं वीक्षते)

विदू—(लब्धसंज्ञ इव) अरे को नाम एष महाराजनलस्य प्रियवयस्यं नानाविधभूषणप्रसाधितविग्रहं ग्रामशब्दपदसञ्चारेण चोरयितुमिच्छति? तिष्ठ रे जाल्म तिष्ठ (इत्युत्थाय वनपालं सासूयमिव पश्यन्) किन्नु खलु? त्वमेवंविध: सञ्जातोऽसि? धिक् भ्रान्तम्।

(मुखं परावर्त्तयति)

उभौ—प्पसीददु प्पसीददु अज्जो, ण क्खु अह्मे ईदिसस्स अकज्जस्स कालके। णिद्दं गदस्स अज्जस्स णासिआगज्जणं सुणिअ भीदेहिं अह्मेहिं णिच्चअं कादुं एव्वं अणुचिट्ठिदं ह्मि।

विदू—अत्र क: प्रत्यय:?

वनपाल:—अज्ज! एत्थ मे प्पमाणं भअवदीओ वणदेवदाओ, ममकेरअं हिअअं अ। को असो एत्थ प्पमाणं भवे?

विदू—साधु, सम्यक् प्रमाणयसे मन:स्त्वं, तदिदानीं त्वां निरपराधं सम्भावयामि, भ्रान्त्या युवयोराकृतिरपि निरपराधतामेव स्वीयामनुभावयति।

वनपाल:—अज्ज, अणुग्गहीदा अह्मे, ता जाव दाणिं आसवेदु अज्जो णिअं कज्जं अणुचिट्ठिदुं, अज्ज वि सावसेसो णिअव्वावारो।

वनपालिका—अज्ज वन्दामि, आसवेदु अज्जो, जाव गच्छह्म।

विदू—श्रूयतां, अपि विज्ञायते, यथा अद्य केनापि विकारेण विमनायितो महाराजः स्वं मानसं निर्वर्त्तयितुं विलासोद्यानमिदं परिप्राप्त इति ?

उभौ—अज्ज, अधइं।

विदू—तदत्र तथा कञ्चित् प्रदेशं स्वच्छन्दसञ्चारं अपनीतजीर्णतृणपत्रं निरूपय, यथास्य तत्र निषण्णस्य मलयवातमासेवमानस्य विकारोपशान्तिः सुलभा भवेत्।

वनपालः—अज्ज किं त्ति बहुलणिरूवणेण, रमणिज्जाइं सव्वाइं पदाइं एत्थ विलासोज्जाणे, तधा हि पेक्खदु भवं, एदे पुप्फफलभारणमिदसिहरा रुक्खआ सव्वस्सिं ट्ठाणे सोहन्ति, तधा सव्वदो वट्टन्ति सुधाधवलवसा सिलापट्टआ, एसा अ माहवीलदा पुप्फसोहारमणिज्जा सोहग्गं ज्जेव संमूचेदि भोइजणाणं। ता एदं ज्जेव तधा सुहपदं भवे।

विदू—अरे कुशलस्त्वं स्वेषु कृत्येषु, तदेतेन प्रचुरमेव राजप्रसादमर्हसि!

वनपालः—अज्ज, लाअप्पसादो मए सुचिलं ज्जेव भअवदो प्पसादेण अणुभविज्जदि।

विदू—इतोऽप्यधिकतरं लभस्वेति प्रार्थये।

वन—अज्ज! अणुग्गहीदा ह्म।

विदू—अथ त्वं परिजनैः साकं चिरमत्रैव तिष्ठसि ?

वन—भअवं, अधइं ; जइ चिलं एत्थ ण चिट्ठेमि, तदो विलासोज्जाणं तिणेहिं परिकीसं जिसपत्तदुप्पवेसं सव्वधा अवट्ठाणजोग्गत्तणं ज्जेव पलिच्चअदि साधालणाणं वि, का कधा लाअपदोवजुत्ताणं भवादिसाणं।

विदू—अथ अत्र किं वस्तु भुञ्जाना यूयं जीवनयात्रां निष्पादयथ ?

वनपालः—अज्ज, किं णु क्खु एव्वं भवं पुच्छदि ? अवि एदं

ण विसादं अज्जेण, जधा अह्मे रक्खो भिच्चआ वणदेग्गं रक्खिदुं।

विदू—तेन किं स्यात्?

वनपालः—तेण क्खु राअकोसादो लद्धेहिं अत्थेहिं णिव्विग्घं जीवणं धारेह्म।

विदू—आः मूढ़! अत एव पृच्छासि, यदि तावदहमस्य विलासकाननस्य परिपालकपदमगमिष्यं तदा प्रतिवासरमेव तरुलताभ्यः प्रचुराणि फलानि सञ्चित्य दैवं कुक्षिगतं वैश्वानरं निरवापयिष्यम्। को नाम सुखोपनतामीदृशीं सम्पदं हेलया परित्यज्य आयासेषु पदं कुर्य्यात्?

वनपालः—अज्ज, मा एव्वं भण, विलासोज्जाणं एदं लाअकीलअं, एत्थ उप्पसाइं सव्वाइं ज्जेव दव्वाइं लाआधिआलं अरिहन्ति, ता एत्थ उप्पसाणं फलाणं कधं अह्मेहिं उवभोओ? भट्टुणो अणणुमदीए गहीदेसुं भट्टुणो दव्वेसुं चोलत्तणं उवगदं भवे, अदो ज्जेव अह्मे ईदिसकज्जस्स ण कालकी।

विदू—(स्वगतं) अहो नीचजातिरपि वनपालस्य साधुता! दुर्लभस्तावदेवं विमलचरित्रो मानुषेषु, तदयं विजयते मम प्रियवयस्यस्य पवित्रो राज्याधिकारः। तथाहि अद्य तपोवनेषु निरुपद्रवाः सोमपीथिनो यज्ञोद्बहविःसौरभैः प्रियं कुर्व्वन्ति देवतानां, कालवर्षी पर्जन्यः समावर्जयति वसुन्धरां शस्यस्तम्बकैः, सर्वा एव प्रजाः सुखमनुभवन्ति पुरन्दरपुरनिवासिनेव निषधनिवासिनः, नूनमहं भाग्यवतामग्रेसरो महनीयप्रभावस्य महाराजनलस्य वयस्यपदवीमध्यासीनः। अहो कीदृशं मया समाचरितं जन्मान्तरे पुण्यकर्म्म, यस्य तथाभूतमनुत्तमं फलमिदं समनुभूयते! नून सौभाग्यवती मे प्रियतमा भानुमती, या हि मामीदृशं सकलवसुन्धराधीश्वरस्य प्रियवयस्यं पतिपदे समुपलभ्य स्पृहणीयतामाश्रितवती निखिलानां नारीजनानां। भवतु, अलमनया चिन्तया, यावदिदानीं प्रकृतसंवादेन भूयोऽपि वनपालं संवादयामि।

(प्रकाश्यं) अरे, कथितं मे हृदयेन, समुचितमेव ब्रवीषीति, तदाशिषं प्रयच्छामि, यथा एवं साधुभावं दधानः सुचिरं सपरिजनः सुख सेधा इति। (क्रमशः)

---

# उपासना

(पूर्व्वतोऽनुवृत्ता)

लेखकः—श्रीशरत्कमलभट्टाचार्य्यन्यायस्मृतितीर्थः।

तर्पणरूपायामुपासनायां विश्वात्मनो भगवत एव उपासनं न तावज्जड़ानामुपासनमिति "देवा यक्षा" इति मन्त्रतात्पर्य्यं प्रकाशयता प्राक् प्रतिपादितम्। "देवा यक्षा" इत्यनेन सामान्यतः सर्व्वभूततर्पणद्वारा सर्व्वभूतात्मकभगवदुपासनं विहितम्, साम्प्रतं विशेषभूततर्पणमुखेन विशेषभूतात्मकभगवत उपासनमाह—

"सनकश्च सनन्दश्च तृतीयश्च सनातनः।
कपिलश्चासुरिश्चैव वोढ़ुः पञ्चशिखस्तथा।
सर्व्वे ते तृप्तिमायान्तु मद्दत्तेनाम्बुना सदा॥"

"सनकादय ऋषय आदिमनुष्या ब्रह्मणो मानसपुत्राः प्रसिद्धाः; कपिलादयश्चादिविद्वांसः सांख्याचार्य्याः कीर्त्तिताः, अस्मद्दत्ततर्पणजलेन तेषां सर्व्वेषामिवाचया तृप्तिरस्तु"—इति पिण्डीकृतो मन्त्रार्थः।

अत्रायं प्रश्नः पदं करोति—"देवा यक्षा" इति मन्त्रे "ये जीवा" इत्यनेन सर्व्वेषामेव तर्पणं सिद्धम्, कथं पुनः "सनकश्च" इत्यादिना सिद्धमपि तत् साधयति? नहि जात्वपि लोकानां सिद्धसाधने प्रवृत्तिरुपलभ्यते?

अत्रोत्तरम्—यावत् सर्व्वेषु भूतेषु तद्भावो (भगवद्भावः) नोपजायते तावदुपासनं सर्व्वथा कर्त्तव्यमिति पूर्वं वर्णितम्। "देवा यक्षा" इति मन्त्रेण सामान्यात्मना सर्वभूतेषु भगवद्भावनात्मिका उपासनोपदिष्टा, "सनकश्च" इत्यादिना विशेषात्मना तादृशी उपासना उपदिष्टा इति निरवद्यम्। अत एव "सर्वं खल्विदं ब्रह्म"—इति सामान्यात्मना आम्नातमपि ब्रह्मस्वरूपं—"स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्। स एव विष्णुः स प्राणः सः कालाग्निः स चन्द्रमाः।" (१) "ब्रह्मेदममृतं पुरस्ताद् ब्रह्म पश्चाद् ब्रह्म दक्षिणतश्चोत्तरेण"(२) इत्यादिविशेषात्मना बहुधा पुनराम्नातम। ततश्च एतदुक्तं भवति—येन खलु भगवता देवयक्षनागाद्यात्मकसामान्यभूतविग्रहवता भक्तिदत्तं मत्तर्पणजलं सानुग्रहं गृहीतम्, स एव सर्वशक्तिर्भगवान् सनकादिविशेषविग्रहवान् गृह्णन् दत्तमिदं जलं लभ्यतु—इति प्रार्थना।

इदमपि तात्पर्य्यान्तरं भवितुमर्हति—"देवा यक्षा" इति मन्त्रे मनुष्यनाम न परिसूयते तस्मादादिमनुष्याणां सनकादीनां तर्पणं पृथगभिहितम्। अत एव सनकादितर्पणं "मनुष्यतर्पण"मिति नाम्ना व्यवदिश्यते। वयं यतो मनुष्या अतः सर्वेषामस्माकमादिपुरुषा आदिमनुष्यास्तेन कथमस्माभिस्तर्पणीयाः? अन्यथा सर्वथैवाकृतज्ञतापद्येत। तथाहि येषां मनुष्यनामानुसारेणास्माकमद्यापि "मनुष्ये"ति नाम, यदि नामास्माकं तेषां नामास्मरणनामावहति तदा मनुष्यत्वहानिरप्युपजायेत, ततश्च येषां नाम्ना येषां ख्यातिस्तेषां नामस्मरणं तेषां सर्वदैव कर्त्तव्यमिति कृत्वापि प्रतिदिनं स्मरणार्थं तेषां तर्पणं पृथगभिहिततां लब्धुमर्हत्येव।

सनकादयो ब्रह्मणो मानसपुत्रा इत्युक्तं प्राक्। मानसपुत्रा इत्यस्य कोऽर्थः? तथाहि ब्रह्मणो ध्यानपूतान्मनसो जाता ये पुत्रास्ते तस्य (ब्रह्मणः) मानसपुत्राः। तत्राच श्रीभागवते तृतीयस्कन्धीयद्वादशाध्यायवचनानि—

दृष्ट्वा पापीयसीं सृष्टिं नात्मानं बह्वमन्यत।
भगवद्ध्यानपूतेन मनसान्यांस्ततोऽसृजत्।
सनकञ्च सनन्दञ्च सनातनमथात्मभूः।
सनत्कुमारांश्च मुनीन् निष्क्रियानूर्द्ध्वरेतसः॥
तान् बभाषे स्वभूः पुत्रान् "प्रजाः सृजत पुत्रकाः।
तन्नैच्छन् मोक्षधर्म्माणो वासुदेवपरायणाः॥

"तस्य (सनकादेः) वासस्थानं जनलोक" इति वागीशखण्डम्। एवञ्च निवृत्तिपथसमाश्रितानां परमज्ञानिनामूर्द्ध्वरेतसां (नैष्ठिकब्रह्म-चारिणां) भगवत्परायणानां जनलोकनिवासिनां सनकादीनां तपःणं "ये जीवा" इति सामान्यात्मना सिद्धमपि नैवरूपेण सिध्यतीति न पूर्वोक्ता सिद्धसाधनाशङ्का।

ये खलु सृष्टिसूर्त्तेर्भगवतो ध्यानादाविर्भूता ध्यानमयविग्रहाः सततपरब्रह्मयोजितचित्ता अविरतं ब्रह्मण्येव परमे विचरन्ति, ब्रह्म-प्रतीकभूतानां तेषां प्रतिदिनं सभक्तितर्पणं कीदृशमनुपासनमिति सम्प्रति स्वत एवागच्छति।

अत्रेदमपरं विभावनीयम्—मनुष्यशरीरं प्रति शुक्रशोणितादीनां कारणत्वादादिमनुष्याणां सनकादीनां शरीरं प्रति तादृशकारणता-ऽदर्शनात्तेषां तादृशशरीरकल्पना (ब्रह्मणो ध्यानपूतमनोजातशरीरकल्पना) न प्रमाणसिद्धेति न वक्तव्यम् परमर्षिकणादेन तादृशशङ्काया निरा-कृतत्वात्। तथाहि कणादसूत्राणि—

"धर्म्मविशेषाच्च"।

अदृष्टवदात्मसंयोगादेव सर्गादौ परमाणूनां कर्म्म, तेन कर्म्मणा सम्भूय परमाणवो द्व्यणुकादिप्रक्रमेण अयोनिजं देवर्षीणां शरीरमारभन्त इत्यर्थः।

"समाख्याभावाच्च"।

समाख्या अन्वर्था संज्ञा श्रुतिस्मृतीतिहासादिषु प्रसिद्धा। तथाहि

दुर्वासःप्रभृतयो मानसा अहङ्कारेभ्यः, अङ्गारेभ्यः समभवदङ्गिरा इत्यादिका।

"संज्ञाया आदित्वात्"।

सर्गादौ या ब्रह्मादिसंज्ञा आदिभूता प्राथमिकतया ज्ञायते अस्ति अयोनिजं शरीरमिति, नहि तदा ब्रह्मणो मातापितरौ स्तः, याभ्यां ब्रह्मादिसंज्ञा कृता स्यादिति भावः।

"वेदलिङ्गाच्च"।

वेदो मन्त्रः, स लिङ्ग्यते ज्ञाप्यते अनेनेति वेदलिङ्गम्—ब्राह्मणम्। ततोऽप्ययोनिजं शरीरं प्रतिपद्यत इत्यर्थः। तथाहि ब्राह्मणम्—"प्रजापतिः प्रजा अनेका असृजत्, स तपोऽतप्यत प्रजाः सृजेयमिति, स मुखतो ब्राह्मणमसृजत्, बाहुभ्यां राजन्यमूरुभ्यां वैश्यम्, पद्भ्यां शूद्रम्"। वेदोऽपि "ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः। ऊरू तदस्य यद् वैश्यः पद्भ्यां शूद्रोऽजायत" इत्यादि।

हेतुभूतपूर्व्वोक्तवैशेषिकसूत्रैः सप्रमाणतद्व्याख्यानवचनैः श्रुतिस्मृतीतिहासपुराणादिभिश्च सनकादीनामयोनिजं तादृशशरीरं प्रमाणसिद्धमेव न च कणादसूत्रस्याप्रामाण्यमाशङ्क्यं, तस्य परमर्षित्वात् (ऋषेर्दर्शनात्) "योगाचारविभूत्या यस्तोषयित्वा महेश्वरम्। चक्रे वैशेषिकं शास्त्र"मिति प्रशस्तपादाचार्य्यवचनाच्च। वेदस्य भगवदुच्चरिततयाऽपौरुषेयतया वा प्रामाण्यं सुप्रसिद्धमेव, तन्मूलकतया स्मृत्याद्यागमानामपि प्रमाणत्वमवगन्तव्यम्।

स्यादेतत्, साम्प्रतं प्रकृतमनुसरामः—"सनकश्च" इति मन्त्रे कपिलादीनामपि तर्पणं विहितम्। कपिलश्च सांख्यप्रवक्ता आदिविद्वान्। तथाहि श्वेताश्वतरमन्त्रः

"ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्त्ति जायमानञ्च पश्येत्।"

भगवानेव स्वयं करुणया कपिलरूपेणाविर्बभूवेति पौराणिकाः प्रवदन्ति। तथाच श्रीभागवते—

"कपिलस्तत्त्वसंख्याता भगवानात्ममायया।
जातः स्वयमजः साक्षादात्मप्रज्ञप्तये नृणाम्॥"

तथा तं (कपिलं) प्रति तन्मातुः (देवहूत्याः) उक्तिर्यथा—

"य आद्यो भगवान् पुंसामीश्वरो वै भवान् किल!
लोकस्य तमसान्धस्य चक्षुः सूर्य्य इवोदितः॥"

ततश्च कपिलतर्पणं साक्षाद्भगवत्तर्पणमेव। आसुरिप्रभृतयः सांख्याचार्य्याः। तथाच कारिका (ईश्वरकृष्णाचार्य्यकृता)—

एतत् पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ।
आसुरिरपि पञ्चशिखाय तेन च बहुधा कृतं तन्त्रम्॥

मुनिः कपिलः अनुकम्पया एतत् सांख्यशास्त्रमासुरये, आसुरिः पञ्चशिखायानुकम्पया प्रददौ, तेन शास्त्रमिदं बहुधा कृतमिति आसुरिप्रभृतीनां सांख्यसम्प्रदायप्रवर्त्तकत्वमायातम्। अत्रापि पूर्व्वोक्तदिशा कपिलादिविशेषविग्रहवतो भगवतस्तर्पणरूपमुपासनमवगन्तव्यम्।

(क्रमशः)

---

# दुर्गेशनन्दिनी।

लेखकः—श्री........

## अष्टादशः परिच्छेदः

कारामुक्तेन जगत्सिंहेन पितृकटके समुपस्थाय कृतः स्वप्रतिश्रुतिमनुसृत्य मोगलपाठानयोः सन्धिबन्धः। आसन् पाठाना दिल्लीश्वरस्य अधीश्वरत्वं स्वीकृत्यापि उत्कलदेशप्रभवः। सन्धेर्विस्तृतं विवरणमितिहासे वर्णनीयम्। अत्रालमतिविस्तरेण। सन्धिं समाप्य उभावेव कियन्ति दिनानि यथास्थानं तस्थतुः। नवप्रीतिसंवर्द्धनार्थञ्च कतलुखानस्य पुत्रान् समादाय प्रधानामात्यः खाजाईशः

सेनापतिरोसमानश्च महाराजस्य मानसिंहस्य शिविरमुपगतौ गजानां सार्द्धशपतमराणि च महार्घाणि द्रव्याणि उपहृत्य महाराजस्य परितोषमुत्पादयामासतुः। महाराजोऽपि तान् बहु समादृत्य सामन्तपदवीञ्च दत्त्वा विससर्ज। एवं सन्धिबन्धं समापयतां शिविरभङ्गोद्यमञ्च कुर्वतां तेषां कतिचन दिवसा गताः।

अथ समागते राजपुत्रसेनायाः पाटलिपुत्रगमनसमये जगत्सिंह एकदा ससहचरः पाठानदुर्गमाजगाम आप्रष्टुम् ओसमानादीन्। कारागृहसमागमादनन्तरं न पुनः प्रकाशितं सौहार्दम् ओसमानेन राजपुत्रं प्रति। अद्य तावत् स्वल्पमेव सम्भाष्य तं विससर्ज। सखेदमामन्त्र्य ओसमानं जगत्सिंहः ख्वाजा-ईशम् आप्रष्टुं गतः। ततोऽपि आमन्त्रणाभिलाष एव आयेशामभि प्रस्थितः। तत्र केनचित् अवरोधरक्षिणा प्रेषितः सन्देशः सविधे आयेषायाः। रक्षी च राजपुत्रेण एवमुपदिष्टः "कथय ताम्। न जातं तया सह दर्शनं परलोकगमनादनन्तरं नवाबस्य! अधुना गमिष्यति मया पाटलिपुत्रम्। पुनर्दर्शनसम्भावनापि विरला एव। अत इच्छामि तामभिवाद्य गन्तुम्।"

वर्षवरः क्षणान्तरे प्रत्यागम्य प्रोवाच नवाबनन्दिनी सन्दिष्टवती 'सा युवराजेन सह न करिष्यति साक्षात्कारम्। अपराधश्चैष मार्जनीय' इति।

संवर्द्धितविषादो राजपुत्रः स्वशिविरं प्रति प्रस्थितः। दुर्गद्वारे दृष्टस्तेन प्रतीक्षमाण ओसमान। ओसमानस्तु पुनरपि अभिवाद्य गच्छन्तं राजपुत्रम् अनुससार। राजपुत्रः समभाषत सेनापते, प्रकाशयतु भवान् यदि कश्चिद्वर्त्तते भवदादेशः। कृतार्थो भवाम्यहं तं प्रतिपाल्य।

ओसमानः प्रत्युवाच—वर्त्तते वचनविशेषो भवता सह। न वक्तुं शक्नोमि सहचरसमक्षम्। आदिश्यन्तां परिजना अग्रसरणाय। आगच्छतु च एकाकी मया सह।

राजपुत्रः विचारमकृत्वैव सहचरान् अग्रगमनाय आदिश्य एकाकी

पाठानेन सह चलितः। ओसमानोपि अश्वमानाय्य आरूढ़ः। कियद्दूरं गत्वा ओसमानो राजपुत्रेण सह निविड़काननाभ्यन्तरं प्रविष्टः। आसीत् तत्र वनमध्ये काचित् भग्ना अट्टालिका। सन्ये पुरा कश्चित् राजद्रोही अत्रागत्य काननाभ्यन्तरे आसीत् लुक्कायितः। शालवृक्षे अश्वं बद्धा ओसमानो नीतवान् राजपुत्रं तदट्टालिकामध्यम्। मानवविहीना सा अट्टालिका। अन्तरा आयतं प्राङ्गनम्। तस्य एकतो वर्त्तते एकं यावनं समाधिखातम्। अन्यतश्च काचित् सज्जिता चिता। न विद्यते तत्र कश्चित् शवः। प्राङ्गनमध्यमागत्य राजपुत्रः पप्रच्छ—किमेतत्?

ओसमानः प्रत्युवाच—ममाज्ञया एव अनुष्ठितमेतत् सर्व्वम्। अद्य मम चेन्मरणम् भवेत्, तदा भवान् मामत्र समाधिमध्ये स्थापयिष्यति। न कोपि तत् ज्ञास्यति। भवतश्चेत् प्राणत्यागो भवति तदा चितायामस्यां ब्राह्मणैर्भवतोऽन्त्येष्टिक्रियां कारयिष्यामि। नान्यः कोपि तदवगमिष्यति।

विस्मितो राजपुत्रः पप्रच्छ—कः खलु गूढ़ार्थ एतद्वाक्यजातस्य। ओसमानः समभाषत वयं पाठानाः। प्रज्वलिते अन्तःकरणे औचित्यमनौचित्यं वा न गणयामः। अस्मिन् जगति न विद्यते आयेषायाः प्रणयाकाङ्क्षिद्वयस्य स्थानम्। एकतरः खलु आवयोरत्र प्राणान् त्यक्ष्यति।

राजपुत्रो विज्ञाय सर्व्वमतीव क्षुब्धः सञ्जातः। उवाच च—किमभिप्रायः सम्प्रति भवान्?

ओसमानः प्रत्युवाच—सशस्त्र एव वर्त्तसे त्वम्। युध्यस्व मया सह, शक्तिश्चेत् वर्त्तते मां हत्वा स्वकीयं पन्थानं मोचय। नोचेत् मम हस्ते प्राणान् सन्त्यज्य मुञ्च मम पन्थानम्।

एवमुक्त्वा ओसमानः प्रत्युत्तरावसरमदत्त्वैव जगत्सिंहाय, असिहस्तस्समाचक्राम। राजपुत्रश्च आत्मरक्षार्थं द्राक् कोषादसिं निष्कास्य

ओसमानकृतघातानां प्रतिघातमकार्षीत्। कृतश्च ओसमानेन पुनः पुनर्महान् उद्यमो राजपुत्रस्य प्राणनाशाय। राजपुत्रो भ्रमेणापि ओसमानमाहन्तुं नाचेष्टत। केवलमात्मरक्षणपर एव अवातिष्ठत। उभावेव शस्त्रनिपुणौ। सुचिरमभूत् युद्धम्। परं कोपि न कमपि अशाक पराजेतुम्। यवनस्य अस्त्राघातेन राजपुत्रस्य शरीरं विक्षतमभूत्। अङ्गानि शोणिताद्र्राणि जातानि। ओसमानं स सकृदपि न आजघान। रुधिरस्रावेण शरीरमवसन्नमवलोक्य ईदृशे संग्रामे मरणं निश्चितञ्च बुद्ध्वा जगत्सिंहः कातरस्वरेण प्रोवाच—विरम्यतामोसमान। मया तु स्वीक्रियते पराभवः। ओसमान उच्चैर्विहस्याब्रवीत्—ज्ञातपूर्व्वं मया राजपुत्रा मरणभीता इति। युध्यस्व, त्वामहं हनिष्यामि। न खलु क्षमिष्ये। जीवति त्वयि नाहमधिगमिष्यामि आयेषाम्।

राजपुत्रः प्रोवाच नाहमायेषाभिलाषी।

ओसमानः खड्गं घूर्णयन्नुवाच न खलु त्वमायेषाभिलाषी। परम् आयेषा त्वदभिलाषिणी। युध्यताम्। न वर्त्तते क्षमा।

राजपुत्रो दूरे खड्गं निक्षिप्यावदत्—नाहं योत्स्ये।

ओसमानः सक्रोधं राजपुत्रं पदेनाहत्य अभाषत यः खलु योधः बिभेति युद्धात्, एवं तेन योधयामि।

लुप्तं राजपुत्रस्य धैर्य्यम्। त्वरितहस्तः स भूमितः खड्गमुत्थाप्य शृगालदष्टः सिंह इव सरभसमुत्पत्य यवनमाचक्राम। न खलु यवनः सोढ़ुं शशाक तं प्रहारम्। स राजपुत्रस्य खड्गाघातेन भूमौ पपात। राजपुत्रस्तस्य वक्षसि आरुह्य हस्तादसिम् उज्जग्राह। स्वकरस्थं प्रहरणं स तस्य गलदेशे संस्थाप्य अभाषत किं निवृत्तः समराभिलाषः?

ओसमानः प्रत्यभाषत—न खलु जीवतो मम।

राजपुत्रः प्रोवाच—म्रियताम् तथा। न चेत् जीविष्यति त्वां जिघांसुः शत्रुः।

जगत्सिंहोऽभाषत—तिष्ठतु नाम ! न खलु तेन बिभेति राजपुत्रः। प्राणांस्ते हन्याम्। परं रक्षितास्त्वया मे प्राणाः। मयापि रक्ष्यन्ते तव।

एवमुक्त्वा बद्धपाणिपादस्य तस्य शरीरात् अस्त्राणि एकैकशो जग्राह। ततस्तं मोचयित्वावदत्—गम्यतामधुना निर्विघ्नं गृहं प्रति। यवनेन त्वया राजपुत्रस्य शरीरे कृतः पादाघातः। अत एव जाता ते इयमवस्था। न चेद्राजपुत्रा नैवं कृतघ्नाः यदुपकारिणः शरीरं स्पृशेयुरिति।

मुक्तः ओसमानोऽनुक्त्वा वचनान्तरं अश्वमारुह्य सपदि दुर्गं प्रति द्रुतं प्रतस्थे। राजपुत्रो वस्त्रेण प्राङ्गनस्थात् कूपात् जलमुद्धृत्य गात्रमधावीत्। गात्रं प्रक्षाल्य शालवृक्षादश्वं मोचयित्वा समारूढः। अश्वारूढेन तेन दृष्टा अश्वस्य प्रग्रहे लताबद्धा कापि पत्रिका। प्रग्रहात् पत्रमुन्मोच्य दृष्टं तत्र वन्धनं मानवकेशरचितम्। उपरि च विद्यते लिखितं दिवसद्वयेन नोन्मोचनीयमेतत्—अन्यथा अस्य आशयो विफलतां गमिष्यतीति।

राजपुत्रः क्षणं विचिन्त्य लेखकस्य आशय एव प्रतिपालनीय इति अवधारयामास। पत्रं कवचमध्ये संस्थाप्य स शिविरमभि अश्वं चालयामास।

राजपुत्रः शिविरं प्राप्य द्वितीयं पत्रमेकं दूतहस्तात् समधिजगाम। लिपिरेषा आयेषया प्रेषिता। तद्वृत्तान्तस्तु परवर्त्तिनि परिच्छेदे एव वक्तव्यः।

---

## ऊनविंशः परिच्छेदः

### आयेषाया लेखः

लेखनीहस्ता आयेषा पत्रलेखनव्यापृता बभूव। मुखच्छाया तस्या अतीव गम्भीरा स्थिरा च। जगत्सिंहस्य प्रेष्यते सन्देशः। लेखपत्रम्

एकमादाय सा तत्र लेखितुमारब्धा। पूर्वं तावत् लिखितं प्राणाधिक इति सम्बोधनम्। तदेव तदपनीय निवेशयामास राजकुमार इति। प्राणाधिकशब्दं विलोप्य राजकुमारशब्दारोपणे तस्या नयनविगलिता अश्रुधारा पपात लेखमध्ये। अतः सा चिच्छेद तत् लेखपत्रम्। पुनरपि सा अन्यस्मिन् पत्रे लेखमारोपयितुं प्रचक्रमे। परं कथं कथमपि लिखितेषु पङ्क्तिकतिपयेषु भूयोऽपि पत्रम् तज्जातम् अश्रुकलङ्कितम्। सापि लिपिर्विलोपं नीता। अथ समाप्य कामपि अश्रुचिह्नशून्यां पत्रिकां तां पठन्त्यास्तस्या नयनवाष्पेण दर्शनशक्तिलोपः समजनि। कथमपि सा तां लिपिकोषे निवेश्य दूतहस्ते प्रायच्छत्। दूतश्च लिपिमादाय राजपुत्रशिविरं प्रति प्रतस्थे। आयेषा च एकाकिनी पर्यङ्कलीना रोदनरता बभूव। जगत्सिंहः समधिगम्य पत्रिकामित्थं वाचयति स्म।

राजकुमार,

नाहमात्मधैर्य्यं प्रति अपगतविश्वासा,—यन्मया न कृतं दर्शनं भवतः। न तावत् मन्यताम् आयेषा अधीरा इति। ज्वलितः स्वकीये हृदयमध्ये अग्निरोमसमानेन। कृते भवतसन्दर्शने यदि नाम स क्लेशमधिगच्छेदिति न कृतं दर्शनं भवतः। नाहमाशंसे, अजाते सन्दर्शने क्लेशः समधिगन्तव्यो भवता इति। स्वकीयः क्लेशः सुखदुःखे सर्व्वं भगवतश्चरणे एव समर्पितम्। यदि नाम समक्षमेव भवन्तम् आपृच्छे, तदापि तं क्लेशं अनायासमेव असहिष्ये। भवद् दर्शनक्लेशमपि पाषाणमयीव सहे।

तदा कथं लिख्यते एषा लिपिरिति? वर्त्तते काचित् भिक्षा। तदर्थमेव प्रेष्यते एषा पत्रिका। यदि तावत् श्रुतं भवता, त्वयि बद्धानुरागा अहमिति तदा विस्मर्य्यतां तत्। आसीत् मे सङ्कल्पो यावज्जीवमेतन्न प्रकाशयिष्यामीति। विधातुरिच्छया प्रकाशतां गतमेतत्। इदानीं विस्मर माम्। नाहं तव प्रेमाकाङ्क्षिणी। दत्तं मया यदियम्।

नाहं याचे तस्य प्रतिदानम्। तथा बद्धमूला मे प्रीतिर्यया अकृतेऽपि भवता स्नेहे अहं सुखिता एव स्थास्यामि। परमलम् अनेन वचसा।

दृष्टो मया भवान् असुखितः। यदि कदापि अधिगम्यते सुखं तदा स्मरणीयाहं सन्देशप्रेरणेन। न चेत् रोचते भवते अलं सन्देशेन। यदि कदाप्यनुभूयते चित्ते क्लेशसञ्चारस्तदा किं न स्मरणीया आयेषा ?

यन्मया लिख्यते एष लेखो, लिखिष्यते वा अन्यच्च तज्जनैर्वचनीयम्। पापरहिताहं न तव पश्यामि कमपि दोषम्। यदा रोचते पर प्रेषणीयम्।

त्वमधुना देशमेतं परित्यज्य गच्छसि। नैते पाठानाः प्रिय-शान्तिकाः। अतः सम्भवति पुनरपि भवतोऽत्रागमनम्। पुनर्न भविष्यति तदा मया सह दर्शनम्। पुनः पुनर्विचिन्त्य एवं मया स्थिरीकृतम्। दुर्दमनीयत्वात् रमणीहृदयस्य अनुचितं साहसाधिक्यम्।

सकृत्तावत् भवद्दर्शनाभिलाषिणी एषा। यदि नाम क्रियते भवता परिणयोऽत्र प्रदेशे तदा विज्ञापनीय एष जनः। विवाहसमये समु-पस्थाय सम्पादनीयं मया शुभकार्य्यम्। या खलु भविष्यति भवतो महिषी तदर्थं संगृहीतम् अलङ्कारजातम्। अधिगते अवसरे स्वहस्ते-नैव नियोजयिष्यामि तदङ्गेषु।

पुनरपि प्रार्थ्यते—आगम्यतां तदैकदा यदा आयेषायाः मरणवार्त्ता प्राप्स्यते भवता। भवदर्थं करङ्कमध्ये यत् स्थाप्यते तत् तदा ममा-नुरोधेन कृपया ग्रहीतव्यम्। किमन्यत् लेखिष्यामि। इच्छामि बह्नन्येव वाक्यानि लेखितुम्। परमलमनेन। जगदीश्वरस्तव सुखं विदध्यात्। आयेषां संस्मृत्य कदापि दुःखं मा गमः।

जग सिंहः पत्रिकां पठित्वा सुचिरं कटकमध्ये पद्महस्तः पद्मां विचचार। पश्चात् सहसा त्वरमाणो लेखपत्रमादाय एवं विलिख्य दूतहस्ते विससर्ज।

त्वं भो रमणारत्नम्। जगत्यस्मिन् मनःपीड़ेव मन्ये विधातुर्विधानम्। न दीयते प्रत्युत्तरं तव लेखस्य। अनेन कातरतां गतोऽस्मि। अस्य सम्भवति यदुत्तरं तदधुना न शक्यते दातु। न तावत् विस्मर्य्यतामयं जनः। यदि जीवामि, वर्षात् ऊर्द्धं दास्याम्यस्य प्रत्युत्तरम्।

दूत इदं प्रत्युत्तरमादाय आयेषामभिप्रस्थितः।

(क्रमशः)

---

## अभिनन्दनम्।

विगते सौरमाघस्य सप्तमे दिवसे सोमवारे सायं पञ्चमघटिकायां वङ्गीयशिक्षाविभागाध्यक्षाणां श्रीमतां होर्णेल महोदयानां (W. W. Hornell, D. P. I, Bengal) भारतवर्षतः प्रस्थानमुपलक्ष्य समाहूता परिषद्गृहे कापि महती सभा, यत्र बहव एव मनीषिणः समवेताः सभायाः गौरवातिरेकं जनयामासुः। तत्र श्रीमता क्षितीश-चन्द्रचक्रवर्त्ति (एम, ए; वि, एल) महोदयेन कृते सभापतिवरण-प्रस्तावे समर्थिते च तस्मिन् अध्यापकश्रीयुक्तभागवतकुमारशास्त्रि (एम, ए) महोदयेन, श्रीमता अध्यापकप्रवरेण देवदत्तरामकृष्णभाण्डार-कारमहोदयेन अलङ्कृतं सभापतेरासनम्। ततश्च सभापतिमहोदयेन या नाम प्रदत्ता भावगरीयसी काचन वक्तृता तस्याः संस्कृतानुवादो-ऽधस्तात् अस्माभिः सारतः प्रदीयते।

"वङ्गीयशिक्षाविभागाध्यक्षाय श्रीमते हर्णेलमहोदयाय प्रशस्ति-पत्रप्रदानरूपं किमपि दुःखप्रचुरं कृत्यं निष्पादयितुं समवेताः वयमद्य सायम्। शिक्षाविस्तारः, सुशिक्षा, शिक्षासौलभ्यविधानञ्च नत्येषा-सोदस्य कृत्यशैली, या नामात्रभवतो महोदयस्य न केवलं शिक्षाधिपत्यं

अपि तु नीतिज्ञानवत्त्वमपि प्रकटयति। महत्या ज्ञानवत्तया सार्द्ध-मेतस्मिन् महात्मनि वरीवर्त्ति किमपि दूरदर्शनमतुलम्। तथा चैत-देवात्र भवतः शिक्षाधिपतिभ्योऽन्येभ्यः शिक्षानीतिवेदिभ्यश्च प्रायशः व्यावर्त्तको धर्म्मः। शिक्षाध्यक्षेषु केवलं सुम्बयीविभागीयशिक्षाध्यक्षचर-हार्श्रोयार्ड महोदय एव (Mr. Howard—D P. I Bombay) अस्य तुलामधिरोढ़ुमलमभूत्, शिक्षानीतिवेदिषु च सार् आशुतोष-मुखोपाध्याय एव अनेन तुलयितुं पार्य्यते महात्मा येन च साकमासीदस्य सौहार्दम्। एतयोरेव महात्मनोः समुपस्थितिरेकमलञ्च वङ्गाना-मिदानीन्तनसमुन्नतेर्मुख्यं कारणम्। हौर्णेलमहोदयानाञ्च नीति-विदुधुरीणानां कर्म्मपद्धतिः वङ्गीयानामुपकारीन्वभी न तु अन्येषां कर्म्माधिकृतानामिव राजनैतिकनीतिसङ्कुलासीदिति तैर्महात्मभिरेव शिक्षाविभागीयकर्म्माधिकृतेषु यथा भारतीयानामपि स्थानं बाहुल्येन भवेत् तथा महान् एव प्रयत्नोऽङ्गीकृतः। तथा च स्मरणपथमापतन्ति नः प्रेसिडेन्सिविद्यालये अन्यत्र च अध्यापकवर्य्यनियोगाः। शिक्षासु नास्ति सा शाखा शिक्षाविभागीयाध्यक्षरूपेण या नाम तेन नानु-शीलिता। तथा च नैतच्चित्रं यत्तेन प्राच्यशिक्षायामनुरागातिरेकात् तस्याः समुन्नतये अङ्गीकृताऽनेन अखिला प्रयत्नपरम्पराः। ये तावत् तेन सार्द्धं विस्रब्धं मिलिताः, शृणुम तेभ्यो यथा न केवलं तेन विशुद्धया वङ्गभाषया आलपितुमेव पार्य्यते निर्बाधं परं वङ्किमचन्द्रस्य आख्याना-दिकमपि तेन सवक्रोक्तिकमेवाववुध्यते, यासां नाम वक्रोक्तीनामवबोधे वङ्गीयचरित्रस्य निपुणं ज्ञानम् अतितरामेवावहति प्रयोजनम्। एवं स्थिते वस्तुनि यत्तेन पालिसंस्कृतशास्त्राणां समुन्नतिविधौ समुत्साहः प्रदत्तस्तत्तु स्वाभाविकमेव। इयमपि नः परिषत् तेषान्तिके कनैरव प्रतीयमानापि तदीयस्नेहार्थ साहाय्यादिलाभे समर्था समजायत। कियन्तञ्चैदधिकं कालं तेनात्रावास्थास्यत निश्चितमेव सर्व्वेषाम्वास्माकं धारणोपयोगिगृहनिर्म्माणादिमाधकोऽपि अर्थस्तेनादास्यत। इदानीञ्च

सर्वेषामेव लोपस्थितानां प्रत्यक्षमेवेदं यथा स्थानस्याल्पतया कष्टेनैव नोऽव नं सम्भवतीहेति। परमाशास्महेऽस्माभिर्यथा तत्पदाभिषिक्तेन अभावोऽयं नः सदयं दूरीकरिष्यते निश्चितम्।

यदत्रभवतां होर्णलमहोदयानां परिषदं प्रति प्रीतिरकपटेति तत्र इतो महत्तरेभ्यः सभादिभ्यः पुरुषवरेभ्यश्च सत्यपि निमन्त्रणे असंख्येयदद्य तेन परिषदो निमन्त्रणं सादरमङ्गीकृतं तदप्यन्यतमं प्रमाणम्। परं भो महात्मानः, एतद् अपि वक्तव्यं यथा भवत्सु अस्मदीया प्रीतिः सारल्येन प्रगाढ़तया अन्यदीयापेक्षयाधिकतरेति। स्वकीयशिष्टतया सर्व्वेषामेव प्रीतिः समाकृष्टा भवता। यैर्नाम क्वापि टालपत्रिकाधिकृतैः केषाम् अपि आङ्गलदेशवासिनां नोद्घष्यते प्रशंसावादस्तैरपि निर्बाधं भवतां कृता प्रशंसा तदेव सूचयति औदार्य्यं माहात्म्यञ्च यन्नाम सर्व्वमेव विरोधं विद्वेषञ्च स्ववशमापादयति।

अतश्च शिक्षाव्यापारस्य इदानीन्तन्यां दुर्गतौ, प्राच्यविद्यायाः सम्भाव्यमानविपत्पातसमये, भवतां साहाय्यमन्तरेण च आशुतोषमहोदयैः कर्त्तव्ये विरोधिभिः सह संग्रामे भवतामितः प्रस्थानं सर्व्वैरेव निखिलभारतवर्षेषु विपत्पातस्वरूपतोऽवधार्य्यते।

यच्च पुनर्वङ्गानामतीवानिष्टं स एव च चीनानां निश्चितमेव महान् लाभः, यत इदानीं प्राच्यदेशानां नवीनजीवनसञ्चारणार्थं जगतां समुन्नतये कर्म्मप्रवृत्तिजननार्थं च भवन्त इव गभीरज्ञाना अपेक्ष्यन्ते पाश्चात्याः। आशास्महे साग्रहमेवास्माभिर्यथा भवत्पदाभिषिक्ते भवदीयगुणाः संक्रान्ताः सन्त तमपि भवदनुसृतरीतिपरिपालनाय प्राच्यज्ञानस्य (विशेषतश्च भारतीयज्ञानस्य) गौरवसमुपलब्धये तथा पाश्चात्यशिक्षणीयवस्तुभिस्तस्य साम्यापादनाय उपयोगिनं विधास्यन्तीति।"

अवसितायां सभापतिमहोदयानां वक्तृतायां कलिकाताविश्वविद्यालयोपाध्यक्षचर-सारश्रीयुक्त देवप्रसादसर्वाधिकारिसूरिरत्न-श्रीयुक्त दुर्गाचरणसांख्यवेदान्ततीर्थ श्रीयुक्तप्रियनाथविद्याभूषणमहोदयैः होर्णल

महोदयानां गुणावलीवर्णनपुरःसरमारचिता काञ्चन मनोरमा वक्तृता:। अथ परिषदस्यतमसम्पादकेन श्रीमता पशुपतिनाथशास्त्रि-महोदयेन वाचिता होर्णेलमहोदयानां भारतपरित्यागमुपलक्ष्य विरचिता संस्कृतसाहित्यपरिषदः प्रशस्तिः भूर्ज्जपत्रोपरि मुद्रिता कौशेय-वसनसंयुक्ता चन्दनकाष्ठपेटिकानिहिता सभापतिमहोदयैरुपहृता होर्णेलमहोदयेभ्यः।

---

वङ्गीयशिक्षाविभागाध्यक्षाणां

**श्रीमतां डब्लु डब्लु हर्णेल एम् ए सि आइ इ महोदयानां**

भारतपरित्यागावसरे

## संस्कृतसाहित्यपरिषदः प्रशस्तिः

# A Farewell Address

TO

W. W. Hornell Esq M. A., C. I. E.,

*Director of Public Instruction, Bengal.*

BY

The Sanskrit Sahitya Parishat,

**Calcutta.**

शिक्षाधिनायपदवीं समुपेत्य धीमान्
वङ्गेषु कीर्त्तिमतुलां परितो व्यतानीत्।
स्वैर्भानुभिः किल तुषारकरः समन्ताद्
आलोकराशिमभिवर्षति तन्न चित्रम्॥

As by the Lunar Orb, its silv'ry
beams are spread,

Thy fair fame doth, O learned Sage,
all quarters pervade.

सौजन्यसङ्गतभवद्व्यवहारलाभात्
सर्व्वेऽत्र पण्डितजनाः सुखसिन्धुमग्नाः ।
मन्दाकिनीकनकपङ्कजगन्धबन्धः
कं वा न नन्दयति मन्दिरमाग्रहाणाम् ॥

Charmed at thy suave portment
the lettered country is,
As by the odour of lotus illumined
River of Paradise.

पुष्टा भवत्करुणया परिषद् विनीता
सम्माननां वितनुते भवतः कृतज्ञा ।
नीराभिषिकपरिवर्द्धितवृक्षराजो
धत्ते फलं गृहपतिभ्य इति स्वभावः ॥

Thy love-foster'd Parishat pays
to thee its grateful homage,
As doth a plant yeild to him
that waters it, full fruitage.

यत्रैव ते गमनमस्तु ततः प्रदेशात्
सञ्चार्य्यतां स्मृतिपथे परिषत् प्रिया ते ।
दूरान्तरीक्षशयनोऽपि सहस्ररश्मिः
पङ्केरुहेषु सहसा दिशति प्रकाशम् ॥

Where'er thou art, be thy belov'd
Parishat from thy mind, no exile,
Even as the sun cheers the lotus
from many a separating mile.

अन्या: शिवोऽस्तु तव गम्यपदे च कीर्त्ति-
स्तत्रापि लोकहृदयेषु तनु प्रभावम् ।
आशास्यते किमथवा नियतं किलेदं
स्वीया गुणा: प्रतिभुवस्तव सन्ति यस्मात् ॥

In thy different station, fame and popularity—
as doubtless thy merits warrant—
Be thy meed, and may Fortune
her every gift to thee, lavishly grant.

मुग्धा गुणैस्तव चिरं परिषद्विनीता
किं वा करोतु परितोषकृते सुदीना ।
संयाचते ननु परेशपदोपकण्ठे
दीर्घायुरेधि, सुखसम्पदिहास्तु पूर्णा ॥

With what may thee
this poor Parishat, greet ?
Be thy life one long stream
of bliss infinite.

तदनन्तरञ्च हीर्णलमहोदयै: संस्कृतसाहित्यपरिषत्कृतं तदीयसम्माननं साग्रहमभिनन्द्य या नाम कृता वक्तृता ललितभावमनोहरा तस्या: सानुवादान् अंशानुद्धराम: ।

"I have always felt interested in the Sanskrit Sahitya Parishat. Institutions of the type of this Parishat where education is imparted in the old style are essential for the uplift of India. ... ... I am glad to think that I have been able to render some small assistance to this Parishat I trust that my successor will take as much interest as or more than

45

what I took for this Institution If there were more genuine culture Bengal would be a happier country I wish the Parishat every success"

अस्य भावः—"संस्कृतसाहित्यपरिषदो हितं मम चिराभिलषितम्। एवंविधानि प्रतिष्ठानानि भारतस्य समुन्नतयेऽपेक्षितानि यत्र प्राचीनरीत्या शिक्षा वितीर्य्यते। मया अस्याः कृते किञ्चित् साहायकं कर्त्तुं पारितमिति विचिन्त्य आनन्दोऽनुभूयते। मम यावान् अनुरागोऽस्यामासीत् मम उत्तराधिकारिणस्तावान् तदपेक्षया अधिको वा भविष्यतीति सम्भावयामि। यदि सुशिक्षाया एवम्भूतानि केन्द्राणि वङ्गेषु अधिकानि भवेयुस्तदा वङ्गानां सौख्यं वर्द्धेत। परिषदः सर्व्वथा समुन्नतिराशास्यते मया।"

सभापतिवक्तृतावसाने परिषन्निर्म्मिते एव रङ्गे परिषत्सदस्यैः प्रयुक्तं महाकवेर्भासस्य कृतिरूरुभङ्गनामकं रूपकम् यन्नाट्यप्रयोगं प्रत्यक्षीकुर्व्वाणाः सामाजिकाश्चित्रार्पिता इव व्यभाव्यन्त। प्रयोगावसाने वङ्गीयव्यवस्थापकसभासदस्यैः श्रीमाङ्क्षतीन्द्रनाथवसुमहोदयैः कीर्त्तिते सभापतिसाधुवादे समाप्तमगात् सभाकृत्यमखिलमिति शम्।

---

कलिकाता-राजकीय-संस्कृतमहाविद्यालये

## शताब्दी-महोत्सवः।

विदितमस्तु पारिषदमुख्यानां यद् विगतसौरमाघस्य षोड़शदिने बुधवासरे सायं चतुर्थघटिकायां सुसम्पन्नस्तावत् राजकीयसंस्कृतविद्यालयस्य शतवार्षिकोत्सवः। शतवर्षं यावत् अयं विद्यालयः खलु सर्वेभ्य एव विद्यालयेभ्यः संस्कृतशिक्षाप्रचारादिनानाहितकरकार्य्यनिकरैः आत्मनो वैशिष्ट्यं विशेषेण प्रकटयन् वर्त्तते। तस्यैव

विद्यालयस्य एवंविधे उत्सवे समुत्सुका एव वयं तत्र गतवन्तः! पत्र-पुष्पपताकाराजिभिः सुशोभितोऽभूत् प्रासादवरो महोत्सवेऽस्मिन्। वङ्गेश्वरः श्रीमान् लिटनमहोदय एवात्र कर्म्मणि सभापतेः पदमलमकरोत्। प्रारम्भे एव उत्सवस्य अभ्यर्थिता सभापतिमुख्याः ब्राह्मणमाणवकैर्गीतेन मङ्गोतेन श्रीमत्कृष्णकमलभट्टाचार्य्यप्रमुखैः प्रदत्तेनार्घ्यवारिणा च। ततो गीतन्तावत् सतानलयं स्वागतमङ्गीतं श्रीमन्महामहोपाध्यायगणनाथसेनवरेण सुरचितम्। श्रीमदाशुतोष-शास्त्रिपादास्तदनन्तरं स्वकीयमनोरमभाषाशैलीनिबद्धां भावग्रन्थियुतां श्लोकमालां सादरं प्रदत्तवन्तोऽभ्यागतजनेभ्यः। अवसिते तावत् पूर्व्व-कृत्ये अधीतं तावत् शतवार्षिकविवरणमध्यक्षमहाशयैः। ततः श्रीमन्तो वङ्गेश्वराः समवेतान् सामाजिकानाहूय स्वाभिभाषणं पठितवन्तः। ततोऽनुष्ठितं सभापतीनां धन्यवादः सभ्यानां तृप्तये च कश्चित् भोजनव्यापारः। ततः सादरमामन्त्रितैः परिषत्सदस्यैः अभिनीतं तावत् भासकवेर्मध्यमव्यायोगरूपकम्। श्रीमद्वङ्गेश्वरा अपि सामोद-मान्तं प्रयोगदर्शनचातुर्य्येण सन्तुष्टा अभवन्। ततो रात्रौ समागतायां चलच्चित्रप्रदर्शनेन सह उत्सवस्य समाप्तिर्जाता।

---

कलिकाता-राजकीय-संस्कृतविद्यामन्दिरस्य शतवर्षसमाप्तिमहोत्सवे

## स्वागतसंगीतकम्

( सं १९८० माघकृष्णदशमराम् )

स्वागतमतिथिवराणाम्। (सुदिने)

राजप्रतिनिधि-लाट-लिटन-रविकिरणोत्फुल्लमुखानाम्॥

शुभशतवर्षसमापननन्दितपण्डितवन्दितचरणाम्।

को न नमति निजमन्दिरमहितां वाणीं बुधजनशरणाम्॥

वेदचतुष्टयमन्त्ररचिता
भारतरामायणनिधिसहिता
जीवति न मृता त्रिभुवनभाषाजननी भाषा सुधियाम्।
कपिल-पतञ्जलि-कणाद-गौतम-जैमिनि-मुनिमुख्यानाम्॥
माघभारविकालिदासकविहर्षबाणप्रमुखानाम्।
अमरकवीनाममरा वाणी पूजां भजतु नृपाणाम्॥

( महामहोपाध्यायगणनाथसेनरचितम्।)

(लेखकः श्रीआशुतोषशास्त्री राजकीयसंस्कृतकलेजाध्यक्षः)

वेदध्वनिप्रतिनिनादनदत्प्रकोष्ठा
षड्दर्शनेन्दुविमलद्युतिनिस्ततमस्का।
काव्यप्रसूनसुरभीकृतदिग्विभागा
माताऽद्य नो जयतु संस्कृतपाठशाला॥ १॥

धर्म्मार्थशास्त्रपरिशीलनशुद्धबुद्धीन्
विद्यार्थिनोऽमृतरसस्त्रुति पाययन्ती।
स्तन्यं प्रबोधमयमङ्गसुपानयन्ती
माताऽद्य नो जयतु संस्कृतपाठशाला॥ २॥

आस्ते शतायुरपि या कमनीयकान्ति-
स्तारुण्यभावविलसत्सविलासहासा।
भासा दिशः स्वयशसो दश भासयन्ती
माताऽद्य सा जयतु संस्कृतपाठशाला॥ ३॥

दोर्दण्डशासनवशीकृतराजलोकै-
रिलण्डभूमिपतिभिः परिपुष्यमाणा।
प्राच्यप्रतीच्यविदुषां सुखमादधाना
माताऽद्य नो जयतु संस्कृतपाठशाला॥ ४॥

या मुग्धबोधजननं रमणं बुधानां
गीर्व्वाणवाक् प्रसरणं सुतरां व्यतानीत् ।
वर्षैः शतेन जगतां हितमावहन्ती
सा शाश्वतीरिह समा लभतां प्रतिष्ठाम् ॥ ५ ॥

---

कलिकाताराजकीयसंस्कृतविद्यामन्दिरस्य

## शताब्दीमङ्गलपञ्चकम् ।

शम्भुप्रेमहरिप्रसादभरतैर्याभूत् पुरा संस्तुता
या नारायणदीननाथगिरिशैः कौवलमहेशेश्वरैः ।
तारावीरहरप्रसादजयगोविन्दाद्यकालीशिवैः
कामाख्याप्रमथप्रसन्नमधुभिश्चोज्जीविता चोर्ज्जिता ॥ १ ॥

चन्द्रनीलमणिलक्ष्मणोज्ज्वला
द्वारिकेशमुरलीनिनादिता ।
या सतीशकरलाञ्छिताधुना
प्याशुतोषमहिमप्रतिष्ठिता ॥ २ ॥

सेयं संस्कृतशाला न कस्य सन्देहदष्टसामर्थ्या ।
चुतसंस्कारा विदुषो वागिव चित्तं वितापयति ॥ ३ ॥

श्रुतसम्पदा च वयसा गरीयसी
बहुलीभवन्मधुरकीर्त्तिसौरभा ।
मुदमातनोतु विदुषां पुरेव सा
लभताञ्च वङ्गवरतीर्थगौरवम् ॥ ४ ॥

शताब्दीपूरणानन्दमङ्गलव्यापृतात्मनाम्।
शताब्दीमङ्गलं भूयो भूयादत्वार्थनेति नः ॥ ५ ॥

अन्यतमाध्यापक-श्रीसुरेन्द्रनाथशर्म्मणाम्।
३०।१।२४।

---

१। शम्भुचन्द्रवाचस्पतिः; प्रेमचन्द्रतर्कवागीशः; हरिप्रसादतर्कभूषणः (१८२४ खृः अ); भरतचन्द्रशिरोमणिः; शम्भु हरिभक्तनटैः क्रतस्तवेति ध्वनिः।

रामनारायणतर्करत्नः; दीननाथन्यायरत्नः; नाथुरामशास्त्री (१८१४ खृः अः); गिरिशचन्द्रविद्यारत्नः; Cowell साहेब; महेशचन्द्रन्यायरत्नः; ईश्वरचन्द्रविद्यासागरः; तारानाथतर्कवाचस्पतिः; ताराप्रसन्नविद्यारत्नः; वीरेश्वरचट्टोपाध्यायः, M A; मं मं हरप्रसादशास्त्री, M A; (विविधविघ्नेऽपि क्रतित्वात्); जयनारायणतर्कपञ्चाननः; जयगोपालतर्कालङ्कारः; गोविन्दशास्त्री; आद्यनाथमुखोपाध्यायः, M. A. गणितशिक्षकः, वर्त्तमानप्रधानशिक्षकस्यापि नाम्न; मं मं कालीप्रसन्नविद्यारत्नः M A; कालीधनन्यायरत्नः; कालीनाथमुखोपाध्यायः B. A. इंराजीशिक्षकः; मं मं कामाख्यानाथतर्कवागीशः; मं मं प्रमथनाथतर्कभूषणः; प्रसन्नकुमारसर्वाधिकारी; मं मं मधुसूदनस्मृतिरत्नः; अन्यापि कामाख्याप्रमथोद्दिष्टनिर्म्मलमध्यैरुज्जीविता भवति।

२। मं मं चन्द्रकान्ततर्कालङ्कारः; चन्द्रकान्तमुखोपाध्यायः, B. A.; इंराजीशिक्षकः; मं मं नीलमणिमुखोपाध्यायः M. A.; मं मं लक्ष्मणशास्त्री द्राविड़; द्वारिकानाथविद्याभूषणः; मुरलीधरवन्द्योपाध्यायः M. A.; मं मं सतीशचन्द्रविद्याभूषणः M. A.;

**संस्कृतसाहित्यस्येतिहासः।** विदितमेव सर्वेषां यत् संस्कृतभाषायाः कोपीतिहासो न वर्त्तते। कस्मिन् समयेऽस्याः कीदृग् दशा जाता, सा तु अनवगतैव बहुभिः अथवा प्रायः सर्वैरेव। यद्यपि पाश्चात्यकोविदवरैः कृताः केचिदितिवृत्तग्रन्थाः संस्कृतसाहित्यस्य तथापि सम्यगालोचनाभावात् असाम्प्रदायिकत्वाच्च भ्रमबाहुल्यमेव लक्ष्यते तेषु। यदि नाम केचित् महाभागाः बहूनां जनानां जिज्ञासां तर्पयितुं प्रयतमानाः तस्मिन् विषये श्रमलवान् स्वीकृत्य प्रबन्धान् रचयेयुः, तर्हि महामहोपाध्याय-श्रीमत्पद्मनाथभट्टाचार्यपादास्तेषामुत्साहवर्द्धनार्थं द्वादशशतानि मुद्राः प्रयच्छेयुः। आशास्यते तावत् कश्चित् केचिद्वा महाभागाः महामहोपाध्यायपादानां एतमर्थं सादरं स्वीकृत्य अस्मिन् विषये श्रमस्वीकारं विधास्यन्ति। समयस्तावत् अष्टचत्वारिंशत् प्रबन्धा विधेयाः, प्रतिप्रबन्धं पञ्चविंशतिर्मुद्रा दीयन्ते।

---

स्यर आशुतोषमुखोपाध्यायमहिमप्रतिष्ठिता (१९१०—१९२० खृः अः) अधुनापि वर्त्तमानाध्यक्षाशुतोषमहिमप्रतिष्ठितास्ति।

२। सन्दिग्धसामर्थ्या च्युतसंस्कारदोषदुष्टा पण्डितवाणी। यथा काचित् सुपंस्कृता बाला वृथा सन्दिग्धसामर्थ्या च्युतसंस्कारा सती चित्तं तापयतीति ध्वनि।

---

---

---


प्रकाशको मुद्रापकश्च—श्रीजानकीनाथकाव्यतीर्थः।

संस्कृतसाहित्यपरिषद्भवनम्, श्यामबाजार ब्रीजरोड, कलिकाता।

मुद्रणस्थानं—श्रीप्रेस ; १०७, कर्णवालिस ष्ट्रीट, श्यामबाजार, कलिकाता।

१८४५ शकाब्दे | Reg. No. C. 1073. | ६ष्ठ वर्षस्य
फाल्गुने | | ११श संख्या
March 1924. | | Vol. VI. No. 11




संस्कृतसाहित्यपरिषदो मासिकं मुखपत्रम् ।

सम्पादकौ— | महामहोपाध्यायश्रीदुर्गाचरणसांख्यवेदान्ततीर्थः
श्रीकालीपदतर्काचार्य्यश्च

सहकारिसम्पादकः श्रीजानकीनाथसाहित्यशास्त्री ।



प्रतिखण्डमूल्यं ।० चतुराणकम् ] [ वार्षिकमूल्यं ३) रूप्यकत्रयम् ।
Foreign price 7s. yearly including postage.

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

१८४५ शकीये फाल्गुने, ६ष्ठ-वर्षस्य ११श-संख्या

## गुरुस्तोत्रम्

(स्वर्गीयनैयायिकप्रवरहरचरणतर्कचूड़ामणिः)

अशारि स्मृतिपिण्डतया मया पुरा वपुः प्रमादेन च यस्य दीपितम्।
गुरुं जगल्लोकविमुक्तिमन्त्रणानिसर्गमन्त्रं प्रवदन्तमाश्रये ॥ १
त्वमेकनाथोऽसि विरूपके त्वयि परामरार्चापि वृथा भवेन्मम।
तथा च रुष्टे सति भर्त्तरि स्त्रिया विशेषवेशेन फलं न लभ्यते ॥ २
गुरो त्वया श्रीचरणारविन्दयोर्विधीयतां मय्यमसाधवे दया।
असत्सुतार्थं वद दुग्धसञ्चयो न किं जनन्या स्तनयोर्विधीयते ॥ ३
त्वदीयदासो विदितो धरातले सुरक्षितोऽहं भवता न चेद् गुरो।
भवेत्तदैकं निजदासपोषणालसेन दोषेण यशोद तेऽयशः ॥ ४
दलैः सहस्रैर्धवलैः सुनिर्मलैर्मनोरमे सत्कमले सुकोमले।
कदोत्तमाङ्गे निलये पदं तव समाश्रयिष्ये पवनं परात्परम् ॥ ५
यदागतो मूलसरोजतो भवान् सुधामयीं कुण्डलिनीं सरोजिनीम्।
तदा भवन्तं त्रिहसन्तमाश्रये सदात्र खेलन्तमनन्तलीलया ॥ ६
वसन् सहस्रारसरोजिनीमपि सुदूरतो मूलसरोजतो भवान्।
मणिर्यथायः स्वमुखं नयत्यसौ तथैव हंसं नयतूर्द्ध्वमूर्द्धकम् ॥ ७

त्वमेव विद्याकर तर्कपूर्वया सुविद्यया ज्ञानतमो निहत्य मे।
प्रकाशय ज्ञानमहः शुचिस्मिता प्रकाश्यते नैशतमःक्षये यथा ॥ ८

---

## उपासना

(पूर्व्वतोऽनुवृत्ता)

लेखकः—श्रीशरत्कमलभट्टाचार्य्यन्यायस्मृतितीर्थः

तर्पणरूपमुपासनं बहुधा व्याख्यातमितः प्राक्। ऋषितर्पणम् "अग्निष्वात्ता"दिदिव्यपितृतर्पणं "यमाय धर्म्मराजाय" इत्यादि यमतर्पणं पितृपितामहादितर्पणं भीष्मतर्पणमिति क्रमः। "नरकेषु समस्तेषु यातनासु च ये स्थिता तेषामप्यायनायैतद्दीयते सलिलं मया" (१) एवम् "अग्निदग्धाश्च ये जीवा" (२) इति, तथा "आब्रह्मस्तम्ब-पर्य्यन्तं जगत्तृप्यतु" इत्यादि सर्व्वत्रैव भगवत एव उपासनं तस्य (भगवतः) सर्व्वात्मकत्वादिति पूर्व्वमेव श्रुतिस्मृतियुक्तिभिर्व्विशद-मालोचितम्।

सन्ध्यापि भगवत उपासनम्। तथाहि व्यासः

"न भिन्नां प्रतिपद्येत गायत्रीं ब्रह्मणा सह।
सोऽहमस्मीत्युपासीत विधिना येन केनचित् ॥"

"स" गायत्रीस्थभर्गप्रतिपाद्य ईश्वरः, "अहं" – जीवरूपोऽ"स्मि" भवामीति अजहत्स्वार्थलक्षणया जीवेश्वरयोरहङ्कारप्रतिफलित-त्वोपाधिरहितेन चिद्रूपेणैक्यं घटाकाशपटाकाशयोरुपाधिविगमादैक्य-मिव भावयन्नुपासीत। * "ऐक्यमिव" इत्यनेन द्वैतवादिना-मनुभव आयातः। तथाहि द्वैतवादिनां मते ब्रह्मणो जीवस्य वस्तुत ऐक्यं नास्ति, भगवन्तं प्रति प्रेमातिशय्यद्योतनार्थमुपासनाकाले-

* आह्निकतत्त्वे स्मार्त्तभट्टाचार्य्याः

ऽद्वैतभावना कर्त्तव्या। मदीय आत्मा यथा निरतिशयप्रियस्तथा मदुपास्यदेवोऽपि, इति तादृशैक्यभावनाफलम्। ततश्च "स उपास्यो देवो मम, अहमप्युपासकस्तस्य"—इत्युपासनायाः प्राथमिकी अवस्था, तदनन्तरं पूर्व्वोक्तरूपैक्यभावनाबलादुपास्योपासकयोरेकात्मता उपजायते दम्पतिवत्, यथा दम्पत्योर्नवप्रेमसुग्धा खलु युवतिः प्रथमं मन्यते "अयं स्वामी मम प्रियतमः," नवप्रेमसुग्धो युवकोऽपि मन्यते "इयं मे प्राणेभ्योऽपि गरीयसी," एवं दम्पत्योः प्राथमिकी अवस्था। तदनन्तरं यदोभयोः प्रेम परिपक्वतामापद्यते तदा एकात्म-बोध उपजायते। उपास्योपासकयोरप्येवं भवत्येव। तथा हि प्राथमिक उपासको "मदीय इष्टदेवो मे प्रियतम" इति भावयति, इष्टदेवोऽपि —"अयमुपासको मे भक्त" इत्यनुगृह्णाति, तदनन्तरमुपासकस्योपासनायाः परिपक्वदशायां तयोरेकात्मताबोध उपजायतेतरामितदर्थमेव ब्रह्मणा सहैक्यभावनमुपदिष्टं श्रुतिभिः ("अहं ब्रह्मास्मि" (१) "तत्त्व-मसि" (२) "ब्रह्मविद् ब्रह्मैव भवति" (३) इत्यादिभिः) इति द्वैत-वादिनो मन्यन्ते। अस्मिन्नेव द्वैतमत उपासनाया भक्तिमार्गः सफलतां गतः। तथाहि भक्ताः खलु आमनन्ति—

योगाभ्यासवशीकृतेन मनसा यन्निर्गुणं निष्क्रियं
ज्योतिः किञ्चन योगिनो हृदि परं पश्यन्ति, पश्यन्तु ते।
अस्माकन्तु तदेव लोचनचमत्काराय भूयाच्चिरं
कालिन्दीपुलिनोदरे किमपि यन्नीलन्तमो धावति॥

सायणाचार्य्यपादैस्तु स्वकृतगायत्रीभाष्ये द्वैताद्वैतोभयमतमेव व्युत्पादितम्। तत्राद्वैतवादिमते "सवितुर्भर्गो धीमही"त्यत्र "सवितु-" रिति अभेदे षष्ठी "राहोः शिर" इतिवत्। द्वैतवादिनां मते तु तत्र "वटस्य रूप"मितिवद् भेदे षष्ठी। ततश्चात्र प्रथममते "सवितृभिन्न" भूरादि सप्तव्याहृत्यात्मकं तत् प्रसिद्धं पूजनीयं ज्योतिरत्रं धीमहीत्यर्थः फलितः। भगवच्छङ्कराचार्य्यपादैस्तु अयमर्थ एव व्युत्पादितः,

विस्तरभयान्नोल्लिख्यते। ज्ञानवादिनामुपासकानामद्वैतवाद एव निर्भरः। यस्तावदुपासको यथाधिकारो तथैवोपासना तेन कर्त्तव्या। अस्माकन्तु भक्तिमार्ग एवालम्बनीयः, यतो ज्ञानमार्गे नास्त्येवास्माकं हीनशक्तीनामधिकार इति स्वहृदयसंवेद्यम्। सन्ध्यारूपायामुपासनायामस्यामस्ति पापिजनहृदयद्रवकरी प्रार्थना ततोऽप्यस्माकं मन्दमतीनां भक्तिपथ एव आश्रयणीयः। दिवाकृतं रात्रिकृतं वा यत् पापजातं कायमनोवाक्करणकं तत् सर्व्वमेव सूर्य्यात्मकपरमात्मज्योतिषि जुहोमीति प्रार्थना कोऽद्गीति साधकानां सुविदितमेव। एवं रीत्या सन्ध्योपासनस्य सर्वस्मिन्नेवांशे परब्रह्मण उपासनातत्त्वं सुस्पष्टमुपलभ्यते। विस्तरभयात् सर्वांशो नालोच्यते।

देवतापूजा यद्भगवदुपासनं तत्र किमु वक्तव्यम्! तथाहि पुंस्त्र्यादिभेदेन सर्व्वमेव देवतारूपं परब्रह्मणो रूपमेव। तदेतदाम्नातम्—

नैव स्त्री न पुमानेष नैव चायं नपुंसकः।
यद्यच्छरीरमादत्ते तेन तेन स युज्यते॥ (श्वेताश्वतरश्रुतिः)

तत्र शिवादिपञ्चदेवताः, नवग्रहाः दश दिक्पालाः, परमन्या अपि सर्व्वा देवता परब्रह्मैवेति सर्व्वशास्त्रतत्त्वम्। तदेतत् स्मृतम्—

चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः।
उपासकानां कार्य्यार्थं ब्रह्मणो रूपकल्पना॥

भगवता व्यासदेवेनापि परब्रह्मसविधे निवेदितम्—यथा

रूपं रूपविवर्ज्जितस्य भवतो ध्यानेन यत्कल्पितं (१)
स्तुत्यानिर्व्वचनीयताऽखिलगुरोर्दूरीकृता यन्मया (१)।
व्यापित्वञ्च निराकृतं भगवतो यत्तीर्थयात्रादिना (२)
क्षन्तव्यं जगदीश तद्विकलतादोषत्रयं मत्कृतम्॥

एवं रीत्या धर्म्मकृत्येष्वस्माकं यत्रैव दृष्टिः पतति तत्रैव भगवदुपासनातत्त्वमेव देदीप्यते। तत्सर्व्वमुपासकैः पूर्व्वोक्तदिशा विभावनीयं

सर्व्वथानुष्ठेयश्चेति सविनयं विज्ञापयाम:। यत:—अनुष्ठानमृत उपासनातत्त्वमपरोक्षं न भवत्येव। तदेतत् स्मृतम् योगियाज्ञवल्क्येन

गवां सर्पि: शरीरस्थं न करोत्यङ्गपोषणम्।
नि:सृतं कर्म्मसंयुक्तं पुनस्तासां तदौषधम्॥
एवं स हि शरीरस्थ: सर्पिर्वत् परमेश्वर:।
विना चोपासनादेव न करोति हितं नृषु॥

अत: कर्म्मभक्तिज्ञानमार्गानुसारतो यथाधिकारमस्माभि: स खलु भगवान् सर्व्वात्मनोपास्य:। विशेषतश्च वयं भारतीया: चिरदिनमेव वयं भगवच्चरणारविन्दसेवकास्तिष्ठाम: स्म। साम्प्रतमस्माकं शोचनीया परिणतिर्यद् वयं तच्चरणाद् भ्रष्टास्तस्मादेवास्मानाधिव्याधि-दु:खदैन्यप्रभृतय: सर्व्वदैव पीड़यन्ति। अत्र सन्देहलेशोऽप्यस्माभिर्न कर्त्तव्य:। अत इदानीं सर्व्वात्मना परमेश्वरस्योपासनमाचरमाणाना-मस्माकमियं खलु प्रार्थना भवतु यत्

"भूमौ पतितपादानां भूमिरेवावलम्बनम्।
त्वयि कृतापराधानां त्वमेव शरणं प्रभो॥"

इति शम्।

---

# शास्त्रसामञ्जस्यम्

( पूर्व्वानुवृत्तम )

लेखक: महामहोपाध्यायश्रीकेदारनाथचन्द्रकाव्यव्याकरणसांख्यपुराणतीर्थभट्टाचार्य:।

ननु वस्तुवादस्य वस्त्वङ्गत्वं कथमुपपद्यत इत्याकाङ्क्षायामाह "आचारदर्शनादिति"। दृश्यते हि लोके विवाहादिकर्म्मण: प्रस्तावोऽपि शुभेऽहनि क्रियते, यदि नैतस्य तदङ्गत्वं तदा कुतस्तस्यैव स्यापि शुभलक्षणापेक्षा स्यादतस्तादृशाचारदर्शनात् पुरुषार्थवादस्य पुरुषार्थशेषत्वमस्त्येवेति।

नन्वन्येषामपि दर्शनानां पुरुषार्थाङ्गैरेव प्रयोजनवत्त्वे न्यायस्य कुतः पुरुषार्थाङ्गादर्थवत्त्वमित्याकाङ्क्षायामाह "तच्छ्रुतेरिति" तस्य पुरुषार्थस्य श्रवणान्न्यायदर्शनस्यार्थवत्त्वमित्यर्थः।

ननु वैशेषिकस्य कस्मादर्थवत्त्वमित्याकाङ्क्षायामाह "समन्वारम्भणादिति" पुरुषार्थस्य सम्यग् आरम्भाद् वैशेषिकस्यार्थवत्त्वं वैशेषिकोक्तज्ञानकर्मभ्यां हि पुरुषार्थस्य आरम्भो भवतीति प्रतिपादयिष्यते।

ननु सांख्यस्य कुतोऽर्थवत्त्वमित्याकाङ्क्षायामाह "तद्दतो विधानादिति" तद्वतः समन्वारम्भणवतः पुरुषार्थस्य विधानात् स्फुटीकरणादर्थात् दुःखबीजस्य क्लेशादिरूपस्य तनूकरणेन दुःखनिवृत्तेर्विशेषकरणात् साङ्ख्यदर्शनस्यार्थवत्त्वमिति।

ननु योगस्य कुतोऽर्थवत्त्वमित्याकाङ्क्षायामाह—"नियमाच्चेति" पुरुषार्थस्य नियमादवश्यम्भावितापादनादर्थात् सत्त्वपुरुषान्यताख्यातिनिष्पादनात् योगदर्शनस्यार्थवत्त्वमिति। चकारोऽस्मिन् सूत्रे प्रक्रमपरिच्छेदसूचकः।

इत्थं पञ्चानां दर्शनानां पुरुषार्थाङ्गवत्तया सार्थकत्वे साधिते चरमसूत्रतः शङ्कान्तरमुदेति।

ननु योगदर्शनपर्य्यन्तेनैव यदि पुरुषार्थो नियम्यते तदा वेदान्तदर्शनेनालमित्याकाङ्क्षायामाह "अधिकोपदेशात्तु वादरायणस्यैवं तद्दर्शनादिति" योगजन्यसत्त्वपुरुषान्यताख्यात्या पुरुषार्थो नियम्यते इति सत्यं किन्तु वादरायणस्याधिकोपदेशात् ख्यातिवैराग्यार्थकाद्वैतोपदेशात् पुरुषार्थः समाप्यते। एवमित्थं वेदान्तोपदेशादेव तस्य गुणवैराग्यस्य दर्शनादिति।

ननु यतोऽधिकोपदेशात् पुरुषार्थः साक्षात् सम्पद्यते स एव निर्व्विशेषेणोपादेयः किमन्यैः पूर्व्वपूर्व्वोपदेशैरिति हठवेदान्तिनां व्यामोहस्योच्छेदनाय नवमं सूत्रं "तुल्यन्तु दर्शनमिति" वेदान्तादेव

पुरुषार्थः साक्षात् सम्पद्यत इति सत्यं किन्तु दर्शनं तुल्यं निर्व्विशेषमत्र सर्व्वमिवैतत् षड़्दर्शनमुपादेयं न तत्र क्रमत्रापि हेयता स्यात्।

तथाहि यथा क्षुत्प्रतीकारार्थिना क्षेत्रनिर्म्माणवीजाकरण-धान्याहरण-वितुषीकरण-पचन-भक्षणानि क्रमसम्पाद्यतया सर्व्वाण्येवाङ्गी कार्य्याणि तथैव खलु निर्व्वाणार्थिनापि मीमांसान्यायवैशेषिकसाङ्ख्य-योगवेदान्तदर्शनानि क्रमाधिकार्य्यतया सर्व्वाण्येवानुपिक्षणीयानि, तथापि हठवेदान्तिप्रभृतीनां या गतिः स्यात् सापि वक्ष्यते।

तदेवं षस्रामेव दर्शनानां साक्षात्परम्परान्यतरसम्बन्धेन पुरुषार्थ-साधनत्वं प्रदर्शितम्। यत्र यत्र विशेषतः साधनत्वं तत्तत् प्रसङ्गादुक्तमपि कथञ्चिदालोच्यते भवतामभिनिवेशसौकर्य्याय।

तदस्याप्रामाण्यनिषेधाय सर्व्वस्यैव तस्य क्रियार्थकत्वं जैमिनिना व्यवस्थापितं, न च भगवान् जैमिनिर्व्वेदैकदेशदर्शीति मन्तव्यन्तस्मात् तेन "चोदनालक्षणोऽर्थो धर्म्मः" इति सूत्रे यागयोगोभयसाध्यस्य धर्म्म-सामान्यस्यैव लक्षणं कृतमित्यसंशयमेव। सर्व्ववेदान्तप्रत्ययं ब्रह्म-चोदनाद्यविशेषादिति व्याससूत्रादप्युपनिषद्भागे कर्म्मविधिर्नास्तीति मूर्खप्रतिपत्तिर्नानुमन्तव्या। ततश्च धर्म्मलक्षणादनन्तरं प्रश्न उत्तिष्ठते "व्यतिविरुद्धानुष्ठानसाध्ययोर्धर्म्मयोः कस्य परीक्षा पुरुषेण कार्य्येति" "तस्य निमित्तपरीष्टिः" इति तदुत्तरसूत्रम्। तस्य धर्म्मस्य निमित्तात् प्रयोजनात् परीष्टिः परीक्षा कार्य्येति तदर्थः। अर्थात् अपवर्गार्थिना योगोऽनुष्ठेयः स्वर्गार्थिना च याग इति निष्कर्षः।

ननु द्वीपिहननमत्र निमित्तं चर्म्मैव धर्म्मस्य निमित्तं किञ्चिदपि न दृश्यते, तर्हि कथं नामाऽनिश्चितेऽर्थे धीमता प्रवर्त्तितव्यमित्याशङ्कायामाह "सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वादिति।" इन्द्रियाणां सता वस्तुना सम्प्रयोगे पुरुषस्य यद्बुद्धिजन्म भवति तत् प्रत्यक्षमर्थादिताद्दृग् लौकिकं प्रत्यक्षमत्रा-

निमित्तमतीन्द्रधर्म्मनिमित्तविषयकं न भवति तस्य विद्यमानवस्तु-विषयकोपलब्धिसाधनत्वादिति।

नन्वेवं तत्तद्धर्म्मनिमित्तमत्यन्तासदेव किं न नेति कथमवगन्तव्य-मित्याकाङ्क्षायां तदनन्तरसूत्रद्वयम् "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध-स्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्या-नपेक्षत्वादिति" कर्म्मैके तत्र दर्शनादिति च। व्याख्याविस्तरेणा-लमाद्येन बादरायणाख्ययस्य मुख्यपुरुषार्थं प्रति श्रुतेः प्रामाण्यमन्येन स्वकर्त्तव्यगौणपुरुषार्थं प्रति वेदोक्तकर्म्मणः प्रामाण्यञ्चाभिहितं मीमांसासूत्रकृता। अतोऽत्र प्रागुक्तपुरुषार्थाङ्गपुरुषार्थवादः सुस्थित एवेति सुधीभिरनुभूयताम्।

जन्ममरणाद्युपद्रववर्जितस्य नश्वरस्य योविरक्तस्य यदा ननु श्रेयोभ्यो निर्गतः पुरुषार्थोऽस्तीति न प्रतीयते न चानधिगतेऽर्थे सिसाधयिषादि-सम्भवस्तस्मात् स कुतोऽवगन्तव्य इति जिज्ञासा समुत्पद्यते तदा तं प्रत्येव गोतमसूत्राणि। प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्ता-वयवतर्कनिर्णयवादजल्प-वितण्डाहेत्वाभास-च्छल-जाति-निग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम इति प्रथमसूत्रं, तदुत्तरम् प्रमाणादि निग्रहस्थानान्तानां षोड़शपदार्थानां याथार्थ्यज्ञानान्निःश्रेयसस्य श्रेयो-विनिर्गतपुरुषार्थस्याधिगमो ज्ञा भवतीति शेषः।

ननु तत् कुतो निष्पद्यते, इत्याकाङ्क्षायामाह दुःखजन्मप्रवृत्तिदोष-मिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः। दुःखादि-मिथ्याज्ञानान्तानां पञ्चानामुत्तरोत्तरापाये सति तदनन्तरापायादपवर्गः सम्पद्यत इति शेषः।

तर्हीदानीं तत्सामान्यज्ञानाय प्रमाणादय एव निर्दिश्यन्तामित्या-काङ्क्षायां तृतीयादिसूत्राणामवतारस्तत्र चतुर्षु प्रमाणेषु सूत्रितेषु ननु निःश्रेयसं हि नः प्रमेयं शब्दप्रमाणमात्रसाध्यं तर्हि कुतः प्रत्यक्षादि प्रमाणान्तरत्रितयमुपन्यस्तमित्याकाङ्क्षायामाह "आत्मशरीरेन्द्रियार्थ-

बुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयमिति । निःश्रेयसं हि वः प्रमेयमिति सत्यं किन्तु आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गाः प्रमातव्या इति शेषः । आत्मादिदुःखान्तानां ज्ञानं विना केवलस्यापवर्गस्य ज्ञानं न सम्भवतीत्यतस्तदङ्गतया तेषामपि प्रमेयत्वमावश्यकमिति निर्गलितार्थः । एतच्च साङ्गमपवर्गं प्रति प्रमाणचतुष्टयस्यैवोपयोग इति निर्णयः ।

एवञ्च "तच्छ्रुतेरिति" यन्न्यायदर्शनस्य विशेषप्रयोजनमुक्तं तत् सुस्थितमेव, ततश्च षोड़शपदार्थज्ञानान्निःश्रेयसलाभ इति व्यामोहः सुदूरमपसारणीयः । तथात्वे हि प्रमाणादीनां तत्त्वज्ञानान्निःश्रेयसमित्येतावदेवाख्येयं न तु सूत्रेऽनावश्यकलाभार्थकाधिगमशब्दप्रयोगोऽङ्गीकार्य्यस्तथात्र मोक्षलाभे विवक्षिते द्वितीयसूत्रानुत्थानप्रसङ्गश्च । वक्ष्यति हि स्वप्नविषयाभिमान इति, ततश्च मिथ्याभूतात् प्रमाणादिज्ञानादपवर्गः मिथ्याज्ञानापायादप्यपवर्ग इति व्यतिविरुद्धं सिद्धान्तमङ्गीकर्त्तुं कः सहेत विमूढ़तमादन्यः । किं बहुना—प्रतिपित्सितापवर्गनिरूपणानन्तरमेव "तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः" । "ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवाद" इति सूत्राभ्यां श्रुतमोक्षस्योत्तरोत्तराधिकाराणां सुविस्पष्टाभिधानेऽपि कथमज्ञानामसम्बन्धप्रलापैर्मतिमन्तोऽपि विप्रलब्धव्याः स्युरिति विस्तरेणालम् ।

---

(क्रमशः)

# लीला

(पूर्व्वानुवृत्ता)

लेखकः—श्रीभवभूतिविद्यारत्नः ।

अभिमानवारिते मयि कतिचिद्वर्षाणि लीलाविषयं मनसा नालोचितवत्यपि, साम्प्रतं लीलादर्शनलाभेन विशेषतस्तस्या आत्मीयताचरणेन निराकृताभिमानस्य मम हृदये पुनरेव प्रबलं समुदिता मुहुर्लीलासाक्षात्कारवासना। ततोऽहं लब्धावसरस्तद्भवनं गन्तुमारभे। एवं कतिपयदिवसानां गमनागमनैः सात्त्विकभावजनिताः सर्व्व एव ते सङ्कोचा मे विलुप्ताः। तद्दर्शनं मे निर्व्वाधमेव सञ्जातम्। क्रमेण प्रशुद्धप्रायमावयोस्तत् पूर्व्वसखित्वमभूत्। किन्तु नियतमेव तस्याः कमपि निर्ल्लिप्तभावमपश्यम्। मया सार्द्धं यद्यपि तया विहितानि विविधमधुरसम्भाषणानि, विविधानि च सखुरचितमधुराचरणानि, तेषु तु घुणाक्षरेणापि न दृष्टः कोऽपि तस्याश्चित्तविकारः। एतावत्तस्या औदासीन्यं प्रबलं व्यथयति स्म मम मिलनपिपासु हृदयं यदि च बहिस्तन्न प्राकाशयम्। एकदा वसन्तरजन्यां पूर्णचन्द्रधवलज्योत्स्नाङ्कितायां नानाकुसुमगन्धोद्वाहिमृदुलमलयानिलसुखस्पर्शानुषेवितायां पादपान्तरालोपविष्टकोकिलवधूकूजनप्रबोधितसुमादकसहलायामहं प्रबललीलाचिन्तापारम्पर्य्येण हृतनिद्र एकलः शयनसौधशयानो व्यचिन्तयं—"विधिना यदि संघटितं लीलायाः पुनर्दर्शनं, तया सह मिलनं न किमु संघटेत ? किं वा तत् तस्या अकाम्यं भवेत् ? साम्प्रतं विपुलधनशालिनी सा पतिहीनतया स्वयमेव भूस्वामिनी बहूनामिव प्रभवति। शक्तिमत्याः खलु तस्या आदेशं तदधीनासु प्रजासु को वा लङ्घयेत् ? तन्मया यद्येतस्मिन्नवसरे तया सह पुनरुद्वाहप्रस्तावः क्रियेत, आबाल्यादुभयोस्तं प्रेमविषयं विचिन्त्य किं सा तत्प्रस्तावं न समर्थयेत् ? एतद्देशीयवरणीयप्रतापस्याधिवासिक-

पदमधितिष्ठतो मे तत्प्रस्तावं को वाऽन्यायी भवितुं शक्नुयात्? विशेषतो विधवानां पुनरुद्वाहे साम्प्रतमुदारचित्तसमाजसंस्कारकाणां प्रबलः खलु प्रयत्नो दृश्यते। तल्लीलासकाशं गत्वा त्यक्तलज्जेन मया पुनर्विवाहप्रस्तावः करणीयः, यदि सा सदया तत्प्रस्तावमानुकूल्येन गृह्णीयात्।"

एवं लीलामिलनसुखचिन्तारतस्य मम विनिद्रस्यापि रात्रिरविदितगतयामा व्यरंसीत्। सौभाग्यतः परेद्यवि अवकाश आसीत्। लीलाभवनगमनवेगवशादतित्वरया निःशेषितप्राह्णकृत्यो लीलागृहाभिमुखं प्रयातः। मदागमनमात्रेणैव लीला मत्समीपमुपागता। क्षणिकालापात् परं तामहमकथयं—"लीले, आबाल्यादहमुत्सुकोऽहं तवाप्यन्तर्निगूढं मनोभावं परिज्ञातुमभिलषामि।" मद्वाक्यश्रवणेन सा किञ्चिच्छङ्कितेव मां निरीक्ष्य 'कथय किं ते वक्तव्य'मिति मृदुवचनमब्रवीत्। अहं तस्या एतन्निरुत्साहभावदर्शनेनात्मप्रस्तावस्य विफलतामाशङ्कमानोऽपि हृदयावेगवशात् तस्य सफलतायामेव जातनिश्चयः पुनरवोचम्—"लीले! स्मर्यतां सुखेनैवावयोः समतीतः स शैशवकालः यदा खलु त्वं मद्गतजीविता नियतमेव मामनुसृतवती, अहमपि त्वद्गतप्राणस्तव नित्यसहचर आसम्। सदाकृष्टचित्तायास्ते नियतमनुवर्त्तनं, नित्यमङ्गलराजिकीर्त्तनं, मदीयदोषगोपनप्रयतनं सर्वमिदानीं मम हृदयपटे सुस्पष्टमिव प्रतिभात् सत् नितरां तत् शैशवस्वपनं स्मारयति। सुखमिलनं न केवलमासीदावयोर्हृदयकल्पनं सर्वेषामिव पल्लीवास्तव्यानां सुमहान् जल्पनविषय आसीत्। विधात्रा यच्चाप्यवरुद्धं तदानीं तदाकाङ्क्षणीयं मिलनद्वारं, इदानीं तत् समुद्घाटितं पुनरेतेन निधनावसरप्रदानेन। विशेषतस्त्वमिदानीं पतिहीना वर्त्तसे। अहमत्रानभिभवनीयशक्तिरधिकारिको जनः, त्वं च गतिशालिनी भूस्वामिनी, आवयोः प्रतिकूलाचरणं केन वा सुकरं भवेत्? तद् यदि त्वं मया सह पुनरुद्वाहसूत्रेणाबद्धा स्याः,

पूर्णा हि भवेदावयोराबाल्यसंपोषिता सा मिलनवासना। विधवाया: पुन:परिणयो देशेऽस्मिन्नप्रचलितोऽपि न हि नूतन इदानीञ्च लोकवरेण्यै: समाजसंस्कारकै: प्रवर्त्तयितं चेष्टते। पुनर्जानीहि केवलं तवैवकृते न कृतो दारपरिग्रहो मया प्राज्ञातुल्लादिभिश्च तत्र विषये सनिर्बन्धमप्यनुरुद्धेन। एतन्मम दृढ़व्रतं यत् त्वद्विरहितमेतद्धृदयं चिरशून्यं वर्त्तेत तथापि वरं, त्वया भिन्नां तु कामपि हृदये न कदापि धारयिष्यामि। तन्मद्विषयं विचिन्त्य पूरयिष्यसि किं पुनर्जीवितं मे मिलनमनोरथ"मिति।

मदनकृतमोहोन्मत्त: केवलात्मचिन्तनरतचित्त: कथनकाले नाप्रश्नमवकाशं तां विशेषेण द्रष्टुम्, इदानीं तदभिमतजिज्ञासोर्मम नयनयुगले तन्मुखोपरि पतिते, दृष्टं मया तस्या आनतवदनं वस्त्राञ्चलेनावृतं व्यक्ताव्यक्तगुप्तमनोभावरोधातिविषमप्रयासं मुहुर्दीर्घश्वासोपलक्षितञ्च। तद्दृष्ट्वाहं किमेतत्तस्या भावान्तरं पूर्व्वप्रणयस्मृतिजागरणफलमथवा मत्प्रस्तावाननुमोदनसूचकस्वपतिशोकनिमित्तमिति बोद्धुमक्षम: किञ्चिद्दोलायमानचित्तोऽभवम्। सापि क्षणं तथावस्थिता कातरस्वरं "क्षमस्व मां विशेषकर्म्मवशादिदानीमेव त्वत्सङ्गं परिवर्ज्जयन्तो"मित्येतन्मात्रमभिधाय मत्प्रस्तावविषयकं तु किमप्यभिमतं न विज्ञाप्य झटिति मां व्यसर्ज्जयत्। अहमप्येतां पुन:परिणयकथां समुत्थाप्यात्मना सुष्ठु कृतं न वेति निर्णेतुमक्षमो मिलनोत्सुकचित्त "एतादृग्गुरुतरविषयं चिन्तयन्त्यास्तस्या मौनमेतन्नानुचितम् अथवैतदन्त: सम्मतिलक्षण"मित्येवं वितर्कयन् मनसा कृतपुनरागमननिश्चय: स्वावासं प्रत्यागत:।

परेद्यवि लब्धकर्म्मावकाशो लीलाभवनं गतस्तत्परिजनवर्गेणापरदिनवत् न तु सादरमभ्यर्थित:। अहमप्येतदनादरभाव आत्मीयतानिबन्धन इति मन्यमानोऽनपेक्षितभृत्यजनसंवर्द्धन: स्वयमेवोपरितलस्थितं तत्प्रकोष्ठं प्राविशम्। गमनमार्गस्थितं परिजनमेकं समादिश्य

मदीयागमनवार्त्तां ज्ञापयितुं तस्या गृहस्वामिनीम्। तत्राहं लीलादिदृक्षुः प्रायः प्रहरकालमत्यौत्सुक्येनात्यवाहयं लीला तु नागता। व्यथितहृदये मयि स्वावासं प्रत्यागन्तुं प्रवृत्ते, काचित् सेवका मामुपसृत्याब्रवीत् "भूस्वामिन्या सार्द्धमद्य भवतः साक्षात्कारो न सम्भवती"ति। "कथ"मिति मया जिज्ञासिता सा "न जाने, तयैवं सम्मुखेन ज्ञापितो भवानि"ति ससम्भ्रमसुक्त्वा तत्स्थानादपसृता। लीलाक्लिष्टचित्तोऽहं मन्ये तदाचरणं तस्या मदवगणनानिमित्तकमिति लीगतोऽप्यविगणय्य सा कस्मिंश्चिदपरिहार्य्यविषयकर्म्मणि व्यापृता भवेदिति कृतनिश्चयः स्वस्थाने प्रत्यावृत्तः।

ततः परेऽहन्यहं लीलाभवनं गत्वा पूर्व्वदिवसवत् कदाचरणमलभे। कठोरप्राणया लीलया न मे दत्तं दर्शनम्। तस्या एवमसकृदसदाचरणेन विचूर्णितो मे तत्पक्षपातजनितो धैर्य्यबावः। एतत् सर्वं मत्प्रतिकूलायास्तस्या हि मदवगणनमूलकमिति विचिन्त्य अभिमानसंवेगात् कम्पमानकलेवरः "अहो! मया या नियतं हृदयमणिरिव गण्यते, सा पुनः पुनर्मां प्रत्येवं सावज्ञं समाचरती"त्यात्मनो हृदयदौर्बल्यं निर्द्दयप्रकृतेस्तस्याश्च मायिकत्वं बहुधा विनिन्दन् विषवल्लज्ञानेन हृदयात् समुन्मूलिततन्मिलनाशापादपो विपुलचित्तसंक्षोभात् तत्रत्ये कस्मिन्नपि वस्तुन्यनर्पितनयनपातो निखिलं विश्वं तमोमयं पश्यन् उन्मत्तवदक्रमविन्यस्तचरणस्तत्स्थानादपासरम्।

पथि गच्छन्नमन्ये गृहं प्रत्यागत्य लीलाचिन्तनं सर्वथा परिहरिष्यामीति। बाल्यप्रणये तु कोऽप्यनिर्वचनीयो मोहो विद्यते येन खल्वाक्रान्तः कथमपि नापारयमात्ममश्चित्तपटाङ्कितां तस्याः प्रेममयच्छविमपसारयितुम्। यदि च पुनः प्रत्याख्यानभयात् तत्सकाशमहं पुनर्न गतस्तथापि तदवाप्तिनैराश्यदावानलदग्धचित्तस्य मे रात्रिन्दिवं नासीत् किमपि समाश्वासनम्। शृङ्खलितहस्तपादपिपासातुरस्यान्तिकस्थं निर्म्मलवारीव सन्निहितापि सा न मे लोचनगोचरीभूता

सूचीवेधनमिवैतच्चित्तदहनमहर्निशमव्यथयन्मे कोमलमर्म्मस्थलम्। तदेतद्दारुणचिन्तां परिहर्त्तुमात्मकर्म्मस्वधिकतरं चित्तं नियोजयितुं प्रायते, किन्त्वहो। लीलाविरहितं शून्यं चित्तं कुत्र वा नियोजयिष्यामि? क्रमेण सञ्जातं मे प्रकृतिसिद्धं कर्म्मशैथिल्यम्। लीलाधिष्ठिते स्थाने तद्विस्मरणं सर्वथैवाशक्यं तन्निमित्तं कर्म्मशैथिल्यमप्यपरिहार्य्यमिति विचिन्तयन् विशेषतस्तद्दर्शनसौभाग्यवर्ज्जितस्यात्मनस्तदधिष्ठितस्थानावस्थानमतिनिर्वेदकरं मन्यमानो मदीयोच्चतरकर्म्मचारिभ्योऽन्यत्र गमनाय कृतावेदनस्तदादेशेनाहं पश्चिमबङ्गस्थिते कुत्रचिज्जनपदे प्रेषितः। मयमनसिंहवास्तव्याः सर्व एव जना सर्वसन्तोषणैकव्रतस्य ममैतदतर्कितस्थानान्तरगमनेन संव्यथिता अतिकष्टेन मां व्यसर्जयन्।

(क्रमशः)

## मधु-मङ्गलम्।

(लेखकः—श्रीयामिनीकान्तसाहित्याचार्यः)

जीवनिकर! ननु परिहर शिशिरसमयकृशतां
वत्सरपरमुत्सवभरमुपनय हृदि भृशताम्
किमसि मलिनवेशः
केवल-तनु-शेषः
प्रकृतिरतति पश्य जगति पुनरपि तादृशतां
जीवनिकर! ननु परिहर शिशिरसमयकृशताम्॥

किमसि गगन! दीनवदनमविरलहिमगुप्तं
पश्य विषमशिशिरमसमवैरिणमवलुप्तं

क्व तव निखिलसारः
सुविमलमणिहारः
मण्डय तनुमतनुमिह नु खण्डय चिरसुप्तं
किमसि गगन दीनवदनसविरलहिमगुप्तम् ॥

ललितमतुलललतिकाकुल कलय कलय लास्यं
दर्शय परिहर्षणकरकालकुसुमहास्यं
कथय किमसि दीनं
विषयविपदि लीनं
ननु परिहर तुहिननिकर निष्ठुरतरदास्यं
ललितमतुलललतिकाकुल कलय कलय लास्यम् ॥

दर्शय वनवल्लभ ! नवपल्लवमयि चूत !
तर्षय किल षट्पदकुलमुज्ज्वलरसपूत !
शीतविरसवातः
सङ्गतविनिपातः
किमसि रहसि मूर्च्छित इव जागृहि रतिदूत !
दर्शय वनवल्लभ ! नवपल्लवमयि चूत !

धर धर धर परभृतवर ! पञ्चमकलनादं
शमय शमय शीतसमयसम्भृतमवसादं
मञ्जुकुसुमपुञ्जे
मुखरितनवकुञ्जे
रचय रचय सम्प्रति नवदम्पतिरतिवादं
धर धर धर परभृतवर ! पञ्चमकलनादम् ॥

विलसति किमु मन्दमलयगन्धवहन नाशं
योजय ननु जीर्णजगति यौवननवभासम्

दीर्घविरहशीर्णं
दैन्यदहनदीर्णं
लम्भय तव वह्निवलयमुज्ज्वलसितहासं
विन्दसि किमु मन्दमलयगन्धवहन नाशम् ॥

मधुमय मधुमास ! रचय वङ्गविपिनयानम्
प्रापय तरुवल्लरि तव सङ्गममधुपानं
पतति मधुरवेला
दिशि दिशि कुरु खेला
नभसि पयसि वसुधोरसि विलसतु विहगानं
मधुमय मधुमास रचय वङ्गविपिनयानम् ॥

---

## दुर्गेशनन्दिनी।

लेखक—श्री........

विंशः परिच्छेदः
निर्व्वाणप्रायः प्रदीपः

आसमान्या सह तिलोत्तमाया आयेषां विसृज्य गमनादनन्तरं न विद्यते कापि तस्या वार्त्ता। तिलोत्तमा, विमला, आशमानी, अभिरामस्वामी च सर्व्वे एव निरुद्देशा बभूवुः। सम्प्रति मोगल-पाठानयोः सन्धिबन्धे वीरेन्द्रसिंहस्य तत्परिजनानाञ्च शोच्यां दशां स्मृत्वा उभावेव पक्षौ सम्मतौ वीरेन्द्रसिंहस्य पत्नीकन्ये अन्वेष्टव्ये मन्दारणदुर्गे च पुनरवस्थापयितव्ये। अत एव ओसमानखाजा ईशः मानसिंहादयश्च सर्व्वे एव तदन्वेषणरता बभूवुः। परं तिलोत्तमायाः

मश्च आसमान्या, आयेषासमीपात् आगमनात् परं किमपि कोपि नावजगाम। अथात्र नैराश्यं गतो मानसिंहः कमपि विश्वस्तमनुचरं मन्दारणदुर्गं समवस्थाप्य आदिदेश अत्रावस्थाय अनुसन्धेहि मृतस्य सामन्तस्य पत्नीकन्ये। प्राप्यते चेदुद्देशस्तदा दुर्गं संस्थाप्य आगन्तव्यं मम सकाशे। तदा त्वं मया भूमिदानेन पुरस्कार्य्यः।

एवं स्थिरीकृत्य मानसिंहः पाटलिपुत्रगमनोद्योगी बभूव।

मुमुर्षोः कतलुखानस्य मुखात् यत् श्रुतं तेन जगत्सिंहस्य हृदय-मध्ये किमपि भावान्तरं जातं न वा न प्रकाशतां गतम्। तेन तावत् शारीरिकः क्लेशः अर्थव्ययश्च स्वीकृतौ। परं न केनापि परिज्ञातम् पूर्व्वस्मृतिसम्बद्धः स यत्नः अथवा मानसिंहादिप्रदर्शितस्य यत्नस्य समकारणसम्भूतः पुनः संजातप्रेमानुरोधाद्वा समुत्पन्नः स यत्नातिशय इति। यदेव भवतु तस्य कारणं, तादृशो यत्नो विफलतां गतः।

मानसिंहस्य सेनया शिविरं भग्नम्। परेद्यवि प्रभाते प्रयाणं भविता। प्रयाणात् पूर्व्वदिवसे आगतः खलु अश्वरश्मिग्रामस्य लेखस्य पठनकालः। कौतूहली राजपुत्रः लिपिसुन्मोच्य पपाठ। तत्र एवं तावत् लिखितम्—"यदि विद्यते धर्म्मभयं, यदि वर्त्तते ब्रह्मशापभीति-स्तदा पत्रपाठमात्रमत्र एकाकिना त्वया आगन्तव्यमिति अहं ब्राह्मणः।"

लिपिपाठात् सञ्जातविस्मयो राजपुत्रोऽमन्यत किमेतत् शत्रुचातुर्य्यं भवेत्, किं गन्तव्यम्? ब्रह्मशापभयात् नान्यत् किमपि प्रबलं राजपुत-हृदये। ततो गमनमेव निश्चितं तेन। परिजनाश्चादिष्टाः यदि नाम सेनाप्रयाणसमयमध्ये स नागच्छति तदा न कर्त्तव्या तस्य प्रतीक्षा। सेना चेदग्रगामिनी भवति, नास्ति कापि हानिः। पश्चात् वर्द्धमाने राजमहले वा स उपस्थास्यति सेनाम्। एवमादिश्य जगत्-सिंह एकाकी शालवनमभि प्रस्थितः।

पूर्व्वोक्तमट्टालिकाद्वारं समुपस्थाय राजपुत्रो यथापूर्वं शालवृक्षे अश्वं बबन्ध। इतस्ततो दृष्टिं दत्त्वा न कमपि दृष्ट्वा प्रविवेश अट्टालिका-

मध्यम्। स तत्र ददर्श प्राङ्गणमध्ये एकत: समाधिमन्दिरम् अन्यतश्च रचितां चिताम, चिताकाष्ठोपरि च निषसम् अधोमुखं रुदन्तं ब्राह्मणम्।

राजपुत्र: पप्रच्छ—भद्र, किमादिष्टोयं भवतात्रागमनाय।

ब्राह्मणो मुखमुन्निनाय। राजपुत्र: पृच्छया अयमभिरामस्वामीति विवेद।

राजपुत्रस्य मनसि युगपद् विस्मय:, कौतूहलं आनन्दश्च त्रयमेव आविर्भूतम्। प्रणम्य सोत्कण्ठमुवाच—भवद्दर्शनाय महान् मया यत्न: स्वीकृत:। कथमत्र भवतोऽवस्थानम ?

अभिरामस्वामी नयनं परिमार्ज्य प्रोवाच—अधुना अत्रैव वसामि।

अभिरामस्वामिन: उत्तरश्रवणमात्रमेव राजपुत्र: पुन: पुन: पप्रच्छ —कथमहम् आहूत:। कथं वा रुद्यते भवता ?

अभिरामस्वामी प्रत्युवाच—यत एव रुद्यते तत एव त्वमाकारित:। तिलोत्तमाया मरणमासन्नम्।

शनै:शनैर्योधपतिस्तत्र भूतले निषसाद। तदा आदित: प्रभृति सर्व्वमेव वृत्तान्तजातं क्रमश: समुदितं तस्य मनसि। एकैकशो हृदय-मध्ये दारुणतीक्ष्णच्छुरिकाघात: समजनि। देवालये प्रथमं सन्दर्शनम् शैलेश्वरसमक्षं प्रतिज्ञा, कक्षमध्ये प्रथमपरिचये उभयो: प्रेमाश्रुवर्षणम् तस्या एव अश्रुभरजन्या वृत्तम्, मूर्च्छितायास्तिलोत्तमायामुखम्, यवनागारे तस्या: पीड़नम्, कारागृहे स्वकीयो निर्दयो व्यवहार:, ततश्च वनवासकाले मरणम्—एतत वृत्तजातमेकैकशो राजकुमारस्य हृदये वात्याप्रघातवत् आजघान। पूर्व्वहुताशन: शतगुणं प्रचण्ड-ज्वालया प्रज्वलित:।

राजपुत्रश्चिरं मौनमवलम्ब्य समासीनस्तस्थौ।

अभिरामस्वामी प्रत्यवादीत्—यदैव विमलया यवनं हत्वा वैधव्य-निर्य्यातनं कृतं तद्दिनादेव प्रभृति मया सकन्यकादौहित्रीकेण यवन-

भयेन नानास्थानानि अज्ञातं परिभ्रान्तानि। तद्दिनादेव तिलोत्तमायाः रोगसञ्चारः। रोगकारणमपि तव सविशेषं विदितमेव।

जगत्सिंहस्य हृदये शल्यं विद्धम्।

ततः प्रभृति सा नानास्थानेषु नीत्वा बहुशः चिकित्सिता। स्वय मायोवनात् अधीतं चिकित्साशास्त्रम्। बहवश्च रोगाश्चिकित्सिताः। अन्याविदितञ्च बहु एव श्रौषधं ज्ञायते। परं हृदयस्थस्य रोगस्य नास्ति कश्चित् प्रतीकारः। निर्जनत्वादस्य स्थानस्य अद्य पञ्चषान् दिवसान् वसामि अत्र निभृते कस्मिंश्चिदंशे। दैववशात् त्वां समागतं विलोक्य तव अश्वप्रग्रहे बद्धा मया काचित् पत्रिका। आसीत् मे अभिलाषः, यदि नाम तिलोत्तमा न आरोग्यं लभेत तदा त्वया सह एकदा दर्शनेन करिष्यामि तृप्तं तस्या अन्तःकरणमन्तिमकाले। अतएव त्वमागमनाय लिखितः। तदापि न दूरं गता तस्या आरोग्य-लाभाशा। परं वुद्धम् मया न चेद्भवति कश्चिदुपशमः दिवसद्वयेन तदा आगमिष्यति अन्तिमः समयः। अत एव दिवसद्वयावसाने पत्रपाठाय अनुरुद्धो भवान्। अधुना तावत् समागतं तद्भयम्। नास्ति काचि-दाशा तस्या जीवने। जीवनप्रदीपो निर्व्वाणप्रायः।"

एवमुक्त्वा अभिरामस्वामी पुनरपि रोदनरतोऽभवत्। जगत्सिंहो ऽक्रन्दीत्।

अभिरामस्वामी पुनरपि उवाच—न खलु सहसा गन्तव्यम् त्वया तिलोत्तमासमीपम्। न जाने, अस्यामवस्थायां सा उल्लासाधिक्यं सोढुं शक्नुयान्नवेति। पूर्व्वमेव कथितं मया तुभ्यं प्रेषितः सन्देशः तव आगमनमपि सम्भवेदिति। अधुना तावत् आगमनसन्देशं प्रापयामि। पश्चात् समागच्छ।

एवमुक्त्वा परमहंसोऽन्तःपुराभिमुखं जगाम। क्षणान्तरे प्रत्यागत्य प्रोवाच—आगच्छ।

राजपुत्रः परमहंसेन सह अन्तःपुराभिमुखं गत्वा ददर्श अभग्न-मैकं कक्षम्। तन्मध्ये जीर्णे पर्य्यङ्के शयानां व्याधिक्षीणाम् अनति-विलुप्तरूपराशिं तिलोत्तमाम्। अधुनापि परिवेष्टिता सा पूर्व्वलावण्य-मृदुप्रभया। निर्व्वाणप्राया प्रभाततारकेव मनोमोहिनी। समासन्ना काचित् विधवा संवाहयति हस्तम्। सा एव निरा. रणा मलिना दीना विमला। राजपुत्रः प्रथमं तां न अभिज्ञातवान्। कथं वा ज्ञास्यति। आसीत् या स्थिरयौवना—साधुना स्थविरत्वं गता। राजपुत्रस्तिलोत्तमायाः शयनपार्श्वमागत्य तस्थौ। आसीत् तिलोत्तमा मुद्रितनयना। अभिरामस्वामी तामाकार्य्य उवाच—तिलोत्तमे समागतो राजपुत्रो जगत्सिंहः।

तिलोत्तमा नयने उन्मील्य जगत्सिंहं प्रति दृष्टिं व्यापारयामास। सा दृष्टिः कोमला स्नेहव्यञ्जिका एव। तिरस्कारणाभिलाषलक्षण-विहीना तदैव विनमितं तया विगलिताश्रुधारं लोचनयुगलम्। राज-पुत्रोऽपि न शशाक आत्मानं संयमयितुम्। दूरं गता तस्य लज्जा। तिलोत्तमायाः पदप्रान्ते उपविश्य स नयनासारैस्तस्या देहलतां सिषेच।

---

# न्यायविद्या ।

लेखक:—श्रीताराानाथन्यायतर्कतीर्थ: ।

अपारेऽस्मिन् संसारपारावारे निरन्तरमेव कति नाम समाविर्भवन्ति परिप्लवन्त विलीयन्ते च हन्त वैचित्र्यवन्त: पदार्था:, स्थावरजङ्गमादि-भेदभिन्नेषु तेषु निखिलजीवमात्रस्यैवायमेवं स्वभावबन्धो यत् यां कामपि दशामुपभुञ्जाना ये केचित् सर्व्वे एव जीवा: प्रतिकूलवेदनीयतया स्वसंवेदनसिद्धं तत्तदनुभूयमानं दु:खजालं विजिहासवस्तत्तदुपाय-जिज्ञासया नियतमेव नितान्तमाकुला: परिलक्ष्यन्ते, केवलं विचित्र-संसारगभीरार्यतत्त्वसार्थविशेषदर्शिनो विचक्षणा: प्रेक्षावन्त एव प्रति-रुद्धबहिर्वृत्तिकतया समुद्भासितान्त:करणैरेकं परमेश्वरतत्त्वमाक्षात्-कारमेव तदुपायत्वेनावधारयन्ति, विप्रतिपद्यन्ते च "कस्तावदसा-वधीश्वर: किं वा तत्र प्रमाणम् ?" इति निर्णेतुमनोहमाना अशक्नुवन्तो वा स्वकल्पितमेव तत्त्वाभासं सिद्धान्तसारं मन्यमाना बहवो विरुद्ध-वादिन: । एवञ्च सज्ज्ञानवैरूप्ययो: सिद्धान्ततदाभासयो: समाकलितेन महता संघर्षेणाभिहन्यमाना: सन्देहदोलायितमानसा विपन्ना एव साधारणा भवन्तीति विवेकवन्तस्तत्रभवन्तो विज्ञानपरीचिताशेषतत्त्वा विप्रतिपत्तिनिरासैरित्थमेव तत्त्वमित्यादर्शयन्तो महर्षयो दर्शनशास्त्र-निर्म्माणमुखेनैव तच्चिराय प्रतिपादयामासुरीश्वरतत्प्रमाणादिप्रामाण्य-सन्देहनिरासपुर:सरं प्रकृतावधारणोपायजातं येन नि:सन्देहमेवो-पादेयमवगन्तुमलं भविष्यन्ति तत्तदभीप्सव: सावधानमन्वीक्षमाणा जीवा: । तेषु च अक्षपादकणादकपिलपतञ्जलिजैमिनिवेदव्यासनाम-धेया एव षण्णामास्तिकदर्शनानां सूत्रकारा भारतभूमे: परं गौरवावहा: । एतेषु च षट्सु महर्षिवर्य्येष्वन्यतमस्तत्र भवानक्षपादो गोतमापरनामा सप्तविंशतितमे युगे प्रभासतीर्थे प्रादुर्भूतो ब्राह्मणरूपेणावतीर्णो महा-

48 2

देवादेव शास्त्रोपदेशमासादितवान्, तथाहि वायुपुराणे महेश्वरब्रह्म-संवादे—

सप्तविंशतिमे प्राप्ते परिवर्त्ते क्रमागते,
जातुकर्ण्यो यदा व्यासो भविष्यति तपोधनः।
तदाप्यहं भविष्यामि सोमशर्म्मा द्विजोत्तमः,
प्रभासतीर्थमासाद्य योगात्मा लोकविश्रुतः।
तत्रापि मम ते शिष्या भविष्यन्ति तपोधनाः,
अक्षपादः कणादश्च उलूको वत्स एव च॥"

इत्यादिकं महेश्वरोक्तम्। ततश्च भगवदनुगृहीतेन तेन भगवत एव हृदाकाशादुत्पन्नायाः (आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिस्तथैव च, एवं व्याहृतयश्चासन् प्रणवोऽप्यस्य दह्रतः इति श्रीमद्भागवतवचनात्।) न्यायविभूतेः सूत्रादिरूपेण प्रकाशः कृतः।

'गवा' वाचा 'तमयति' परान् परिभावयतीति व्युत्पत्त्या महर्षेरस्य गोतम इत्यपि सार्थकं नामान्तरम् इत्येवंविधविषयेषु विशेषजिज्ञासुभिः कृपया काशीधामप्रवासिना पण्डितमण्डलीमण्डनेन तत्र भवता श्रीमत्फणिभूषणतर्कवागीशमहोदयेन सम्पादितस्य न्यायदर्शनस्य भूमिका अनुसन्धेया।

सेयं न्यायविद्या "प्रदीपः सर्व्वविद्यानामुपायः सर्व्वकर्म्मणाम्। आश्रयः सर्व्वधर्म्माणाम्" इत्यादिकं सुष्ठु समुद्घोषयता भाष्यकृता वात्स्यायनेन सर्व्वेषामिवोपादेयतया प्रख्यापिता। शास्त्रं हि स्वाध्यायनाद्यधिगतपाण्डित्ययशः सम्मानादिभिरैहिकं, प्रकृष्टकर्म्मप्रवर्त्तनादिना पारत्रिकं, क्रमेण च तत्त्वज्ञानप्रतिष्ठादिभिः परमार्थं मोक्षमपि सुगमीकरोतीति तत्र व्युत्पत्तिविशेषे लब्धव्ये न्यायशास्त्रस्यास्ति महानेवोपयोगः, तथाहि व्याकरणसाहित्यधर्म्मशास्त्रदर्शनशास्त्रादिषु सर्व्वत्रैव शास्त्रकाराणामुपजीव्यविषयवैशद्यार्थमवलम्बितेषु मार्गेषु, प्रदर्शितेषु विचारकौशलेषु, गृहीतेषु च प्रमाणेषु तथाविधा

काऽपि दुरूहता स्वभावादेवापतिता या खलु न्यायानुगृहीतविशुद्ध-बुद्धिप्रतिभापाटवैरेव सम्यग् विशदीकर्त्तुमर्हा, आलोड्यमानेऽपि द्राक्षादौ रसनास्पर्शमन्तरेणेव समालोच्यमानेऽपि शास्त्रार्थसार्थे न्याय-प्रतिभायोगमन्तरेण न जायते माधुर्य्योपलब्धिः। न च तर्कपुरःसरा-नुसन्धानं विना धर्म्मतत्त्वावबोधः, तथाचोक्तम्—"आर्षं धर्म्मोपदेशञ्च वेदशास्त्राविरोधिना, यस्तर्केणानुसन्धत्ते सधर्म्मं वेद नेतरः" इति। मोक्षरूपपरमार्थसाधने च "आत्मावाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यः।" "द्वे ब्रह्मणी वेदितव्ये परञ्चापरमेव च" "स हि तत्त्वतो ज्ञातः स्वात्म-साक्षात्कारस्योपकरोतो"त्यादिबहुतरश्रुत्यर्थतात्पर्य्यबलात् परमा-त्मस्वरूपस्य स्वस्य मननं परं प्रयोजकत्वेन प्राप्तं, मननञ्च बहुभिः साधनैरनुसानं, तत्प्रणालीसंवेदनमेवास्मदालोच्यशास्त्रस्य प्रधानमङ्गं तथाचैवमुदयनाचार्य्याः—"न्यायचर्च्चेयमीशस्य मननव्यपदेशभाक्, उपासनैव क्रियते श्रवणानन्तरागता।" अत्र च "नाप्रत्यक्षं किञ्चित् प्रमाणम्" इत्युच्चैःकारमुद्घोषयन्तः केचिन्महान्तः परिर्णायिनः, तेषान्तु उक्तप्रकारे वचसि 'वदतोव्याघात' एव दोषः, अप्रत्यक्षाणा-मप्रामाण्यस्य तैरपि प्रत्यक्षेण साधयितुमशक्यत्वादनुमान एव पर्य्य-वसानात्। स्फुटञ्च तच्चार्व्वाकमतं खण्डितं तत्र भवद्भिरुदयनाचार्य्य-पादैः कुसुमाञ्जलिग्रन्थे। अस्यैव न्यायशास्त्रस्य सिद्धान्तसारमहत्त्व-मङ्गीकुर्व्वता पदार्थविभाजकरूपमात्रसंक्षेपं सम्पादयता श्रीमता गङ्गेशोपाध्यायेन तत्त्वचिन्तामणिसमाख्यया कृतं शास्त्रमिदं नव्यन्याय इति प्रख्यातं, तच्च क्रमेण मैथिलानां मिश्रादीनां वङ्गगौरवानां रघुनाथशिरोमणिप्रमुखाणाञ्च महामहोपाध्यायानामैकान्तिकसाधना-बलेन परमोपचीयमानमुपयोगभूयिष्ठञ्च सत् स्वगौरवप्रकर्षेण प्रह्वी-करोति समग्रं धरामण्डलं। ये केचित् धर्म्मादितत्त्वसमाख्यानं गृहजनोद्देशि तर्ज्जनीसञ्चालनमिवातिसुकरमनाशङ्कञ्च मन्यमानाः— "धर्म्मं व्याख्यातुकामस्य षट्पदार्थोपवर्णनं, सागरं गन्तुकामस्य हिम-

वदुगमनोपमम्" इत्यादिभिरुपहसन्तो धन्या भवितुमुत्सहन्ते ते किं न विचारयन्ति यत् 'ईश्वर' इत्यादि पदोच्चारणमात्रेणोत्पद्यमानं यथाकथञ्चिदीश्वरादिज्ञानमेव न तावत् तदीयतत्त्वज्ञानं, किन्तु तत्त्वपदेन याथार्थ्यं, तस्मिंश्च विज्ञेये यस्य तद् विज्ञेयं तस्य सूक्ष्मानुसूक्ष्मरूपेण उद्देशलक्षणपरीक्षादिप्रकारेण स्वरूपविज्ञानमेवावश्यकम्। अतः कथं केवलं सारल्यं लाघवं वा परमार्थतया प्रतिपाल्य अवच्छेदकावच्छिन्नत्वादिशब्दसम्पर्कं विभीषिकामिव समाशङ्क्य प्रतिपदमुदयमानशङ्कासहस्राणां समाधानपथं सुस्पष्टमनुज्ञासयन्त एव महान्तः शास्त्रकाराः स्वकीयकर्त्तव्येषु कथङ्कारमकाण्ड एव विराममधिगच्छन्तु ? इति। अत एव तथाप्रयत्नपरिशीलिता सर्व्वतोभाविनोपयोगिनीयं न्यायविद्या कण्टकक्षतिभिया कमलिनीव काठिन्यभिया नार्हति परिहरणीयतामुत्साहवताम्। "आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्नम्" इत्यलं पल्लवितेन।

---

# नलदमयन्तीयम्

उभौ—अज्ज, अणुगहीदा अह्मे तुह एदिणा वअणेण ।

विदू—तद् गच्छ, यावदिदानीमनुतिष्ठ स्वनियोगम्

उभौ—जं अज्जो आणवेदि, अज्ज वन्दामि (गन्तुमीहते) ।

विदू—नहि नहि, तिष्ठ ।

वनपाल:—आणवेदु अज्जो ।

विदू अस्मिन् कानने चिराय त्वमधिकृतो महाराजेन, त्वमेव जानासि काननस्यास्य सर्वान् तादृशप्रदेशान्, यत्र यत्र सम्भाव्यते चित्तशान्तिः, तदस्माभिः सार्द्धं काननमिदं परिक्रम्य परिदर्शयस्व तान् प्रदेशान् यत्र लोचनतृप्तिं हृदयानन्दञ्च विन्देम ।

वनपाल:—अज्ज अणुग्गहो ज्जेव एसो अह्मारिसजनेसुं महालाअस्स, ता इदो एदु अज्जो ।

विदू—(विचिन्त्य) अथवा अलं त्वया, अद्य खलु मे प्रियवयस्यो मामन्तरेण जनान्तरं समीपे नानुमोदते, तदहम् एक एव तदनुगन्ता भवेयम् । अथापरं श्रूयतां; अद्य भवतां महाराजो नितरामनुरज्यति विकचदलेषु कुसुमस्तवकेषु कामिनीजनाधरताम्रेषु च पल्लवभङ्गेषु, तद्यावदस्य सन्तोषणाय तानि तानि वस्तूनि महाराजस्य उपायनी-क्रियन्ताम् ।

उभौ—अज्ज अणुग्गहीदा अह्मे । ता वन्दामो (निष्क्रान्तौ) ।

विदू—स्वस्ति भूयात् । (दृष्ट्वा) गतः खलु वनपाल: प्रियवयस्यस्य कृते मया समादिष्टानि पल्लवभङ्गविकचकुसुमादीनि संग्रहीतुम्, तद् यावदहमिदानीं वयस्यमुपसर्पामि । (परिक्रम्य नेपथ्याभिमुखमवलोक्य) भोः क्व नु खलु प्रियवयस्यो मे नलो भविष्यति, स मया सहकार-तरोरधश्छायायां मर्म्मरशिलातले विसृष्टः, तत्र तु साम्प्रतं नोपलक्ष्यते, तत् क्व नु खलु साम्प्रतं मया वयस्यः प्राप्तव्यः ? भवतु य एते

राजपरिजनाः समन्ततो विचरन्ति, एतानेव पृच्छामि, (आकाशे) अरे दास्याः पुत्राः ! क्व नु खलु साम्प्रतं प्रस्थितो भवतां महाराजः ? (श्रुतिमभिनीय) किं ब्रूथ ? एष महाराजः सहकारकुञ्जं समया माधवीलतामण्डपं प्रस्थित इति ? अथ के के तस्य सहचारिणः ? (श्रुतिमभिनीय) किं ब्रूथ ? अनुव्रजतोऽपि अस्मान् गभीरं प्रतिषिध्य केवलं भवन्तमेव अनुगमिष्यन्तमावेद्य महाराजस्तां दिशं प्रस्थित इति ? भवतु, तिष्ठत यूयं, एषोऽहमेव वयस्यस्य मानसमनुवर्त्तितुं माधवीलतामण्डपं गच्छामि । (निष्क्रान्तः)

( विष्कम्भकः )

(ततः प्रविशति सहकारकुञ्जं समया माधवीलतामण्डपे कामयमानावस्थो राजा)

राजा—(आत्मगतम्) भगवन् मन्मथ, सहसैव किमेतावतीं भूमिमाश्रितोऽसि ? अपि तावत्कालं मया प्रतिषिद्धाधिकारः सम्प्रति यथावसरं वैरेण मां पीड़यसि ? अथवा निरपराधो भवानस्मिन् मत्पीड़नकृत्ये, किन्तु सैव सापराधा मे प्रियतमा विदर्भराजनन्दिनी, अथवा कथं सैव, नालोकिता मया साक्षादेव सा ललितलावण्या, किन्तु निपुणचित्रकरोपनीते सुललिते चित्रशिल्पे, तदत्र परमनिपुणः चित्रकर एव सुतरामपराध्यति । अहो अनभिभवनीयस्वभावो मानसजन्मा, तथाहि—

प्रियाप्रथमदर्शनात् प्रभृति चित्रशिल्पे नवे,
मनो मधुरवासनारसविशेषमुग्धायितम् ।
अहो बत पदे पदे हृदयभावविद्रावणे,
प्रयत्नविनियोजना सपदि किञ्च मिथ्यायते ॥

तदद्य मन्ये प्रायेण सर्व्वैरेव समुपलक्षितो मे हृदयविकारः, कुतः ?—

गण्डाभोगे विलसति परं पाण्डिमा प्रौढ़कान्तिः,
वाचां मध्ये स्फुरति सहसा नामभागः प्रियायाः ।

श्वासो दीर्घं प्रसरति चिरं शून्यशून्येव दृष्टिः,
चीणप्राणा न चलति पुरो विव्रता देहयष्टिः।

तदद्य कं वा शरणमुपगच्छामि? अथवा कोऽन्य मन्दारकं प्रियवयस्यमन्तरेण मे शरणं मन्दभाग्यस्य? स हि सुखे दुःखे च निर्विशेषः सन्ततं द्वितीयं हृदयमिव मामनुवर्त्तमानो लक्ष्यते, स एव मे हृदयवेदनां पदे पदे स्वकीयामिव प्रतिपद्यते, कथितञ्च मया तस्यैव साम्प्रतिकं सकलमेव मानसं वस्तु, तत् क्व नु सम्प्रति मन्दारको भवेत्? (चिन्तां नाटयति)

(ततः प्रविशति राजान्वेषणपरो विदूषकः)

विदू—(आत्मगतम्) राजपरिजनैरावेदितं मे यथा प्रियवयस्यो मे माधवीलतामण्डपं प्रस्थित इति। तत् क्व नु खलु प्रियवयस्यो भवेत्? अपि तत्रैव तमासादयितुमर्हेयम्? (दर्शनमभिनीय) अये एष मे प्रियवयस्यः काम्यमानावस्थो निर्निमेषदृष्टिरमणीयः वाह्यवस्तुविनिवृत्तान्तःकरणः पश्यन्निव प्रियजनं हृदयवर्त्तिना लोचनयुगलेन सुतरामभिभूतो विभाव्यते, तदस्य पराङ्मुखस्यैव पश्चात् गत्वा नयने पिधाय परमकौतुकसमुत्पादनेन भावान्तरमुपजनयामि। मा तावत् पदविक्षेपशब्दः समुत्पन्नः प्रबोधमस्य समुत्पादयेत्! तदिदानीं प्रकृतमनुसरामि, (नानाविधभङ्गीविशेषान् नाटयन् राज्ञः पश्चादुपसर्पति) अथ यदि नयने पिधाय तूष्णीं तिष्ठेयं, तदा काम्यं कौतुकं विघटेत, सम्भाषणे प्रस्तुतेऽपि परिचितपूर्व्वः कण्ठस्वर एव शङ्कां प्रत्यभिज्ञां जनयेत्, तदत्र कीदृशमनुष्ठातव्यम्? (विचिन्त्य जायमाननृत्यप्रयत्नं संयम्य) भोः लब्धं प्रतिविधानम्, गृहीतनारीभूमिक इव नटमन्दनः कण्ठस्वरपरिवृत्तिं करोमि, तेनैव सम्पत्स्यते काम्यसिद्धिः। (पुनरपि विविधं भङ्गीविशेषमाश्रित्य पश्चात् गत्वा राज्ञो नयने पिदधाति)।

राजा—(कराभ्यां करयोः विदूषकमवलम्ब्य) अये केनानेन मे लोचनपिधायकेन भवितव्यं ? अथवा कोऽत्र प्रियवयस्यमन्दारकं विना मे लोचनपिधायको भवेत्? नूनं मदीया विमनायमानता वयस्यमेवं प्रवर्त्तयति, तद् भवतु सम्भाषणेन विनिश्चितार्थो भवामि, (प्रकाशम्) अयि नयनपिधायक, अपि भवानेव मे प्रियवयस्यो मन्दारकः ?

विदू—(अविकृतकण्ठं) नहि नहि, (भ्रान्तिमभिनीय) अहो प्रमादः अविकृतकण्ठस्वरोऽस्मि! (कण्ठस्वरं परिवर्त्त्य) नहि नहि, नाहं मन्दारको हरिचन्दनो वा, अन्यो वा कश्चन त्रिदिवपादपः।

राजा—तत् को वा भवान् ?

विदू—(विकृतकण्ठं) कथमद्यापि को वा भवान् इति ?

राजा—तत् किं वा वक्तव्यम् ?

विदू—का वा भवतीति।

राजा—(स्मितं कृत्वा) तत् का वा भवती ?

विदू—एवं साम्प्रतं गृहीततत्त्वोऽसि, तदिदानीमाकर्णय प्रकृतवृत्तान्तं, अहं खलु दुहिता विदर्भराजस्य, मामधिकृत्य भवन्तं सुतरां विमनायमानं श्रुत्वा रागविवशा भवतो वैमनस्यमपाकर्त्तुम् इह विचिन्वती माधवीलतामण्डपं प्राप्तास्मि। तदनुगृह्यतामियं दृष्टिदानेन।

राजा—(स्वगतम्) अहो! यदि यथार्थमिदं मन्दारकवचनं स्यात्, तदा सकलदुःखनिकेतने वसुन्धरायामपि मे त्रिदिवमहोत्सवः सम्भाव्येत, अथवा कथमेतावत् सौभाग्यं मे मन्दभाग्यस्य ? तथाहि

जातु क्षितिधरपीठात् न जायते कोमलं कमलम्।
प्राक्तनकर्म्मविपाको वितरति लोके सुखं दुःखम्॥

विदू—प्रियतम, किमेवं तूष्णीमवतिष्ठसे ? यदि सम्भाषणमपि नास्ति, तत् का वा मन्दभाग्याहं त्वत्प्रणये ? एषाहं प्रतिष्ठे।

राजा—अयि कौतुकप्रिये, अभिमानिनि, अलमनया कोपकल्पनया, कीदृशेनोपचारेण कौतुकप्रियायास्ते सम्भावनं क्रियतां तदेव सम्यक् विचार्य्यते।

विदू—अपि साम्प्रतं निर्णयं गतोऽसि ?

राजा- अथकिम्।

विदू—कीदृशोऽसौ निर्णयः ?

राजा—प्रिये, एष निर्णयः। (परावृत्य सस्मितमालिङ्गति)

विदू (स्वगतम्) अये ! कथं प्रकाशं गतोऽस्मि वयस्यस्य ? तत् किमिदानीं प्राप्तकालमुत्तरं प्रतिपत्स्ये (चिन्तयति)।

राजा -(सोपहासम्) अयि प्रिये, किमिदानीं त्वं—

इन्द्रजालोपनीतस्य वस्तुनः परिणामवत्।
सहसैवान्यथाकारा दृश्यसे न स्वरूपतः॥

तत् किं विविधकलाकौशलचतुरा भवती पुरुषायिता माम् उपहसितुम् ?

विदू—(सप्रतिभं) नहि नहि इदानीं तव प्रिया नास्मि, किन्तु प्रियवयस्यो मन्दारक एव, अन्यथा कथमिदानीं पुरुषजनोचितः कण्ठस्वरः सम्भवेत्।

राजा—वयस्य, कथमिदानीमेव, प्रथमतोऽपि भवान् मया मन्दारक एव गृहीतः, किन्तु भवदनुवृत्तिं कुर्व्वता मया तथा तथा वाचो विसृष्टा इति।

विदू—कथमिव ? मया तु स्वरूपतिरोधाने महानेव यत्नः समाश्रितः।

राजा—वाढ़ं समाश्रितमहायत्नोऽसि, तथापि -

यस्ते कोमलकामिनीसमुचितः कण्ठस्वरः कृत्रिमः
तत्रासीत् पुरुषोचितस्वरकला पूर्व्वं प्रकाशं गता।

वाङ्ग ते कठिनो वचोऽपि परुषं मुग्धाजनानां म तत्,
प्रागल्भ्यञ्च परं ममाजनि तदा पुंस्त्वाववोधाय ते ॥

अथवा यदि सा समक्षमेव समुपगता स्यात् तथापि न तथा विश्वसितु-मर्हामि, कुतः—

सा कल्पपादपविसृष्टमनर्घरत्नं
क्षीरोदसागरभवा च सुधा मनोज्ञा।
मन्दाकिनीकनकपङ्कजविन्दशोभा
सा कापि पुण्यपरिपाकफलस्य सीमा ॥

विदू—भो वयस्य, यद्येवं, तत् किमेवं पर्य्याकुलो भवान्? असीमपुण्यसम्पदधिकारिणा राजचक्रवर्त्तिना भवता ननु सुलभैव सा भविष्यति।

राजा—वयस्य, न सम्यक् जानीषे; कुतः?

वणिग्जनात् स्वल्पपणेन लोहं
क्रीणाति लोके ननु येन लोकः।
क्रेतुं न तेनैव मणीनपीष्टे,
पुण्यानुरूपं फलमात्मन स्यात् ॥

तत् कियानेष पुण्यमहिमा यत्परीपाकात् सा मया लब्धव्येति सम्भावयितुमर्हसि। यदपि राजचक्रवर्त्तित्वमतितरां पुण्यस्य फल-मित्युपक्षिपसि, तदपि मे वाढं पातकफलमिवाद्य प्रतिभाति, कुतः?

राज्यार्थं ननु चिन्तया विघटते सा मे मनोमन्दिरे,
विच्छिन्नः परिकल्पनाव्यतिकरो भूयो न सन्तिष्ठते।
प्रत्यक्षं तददर्शनेऽपि हृदये तद्दर्शनादुद्भवन्
आनन्दो न मयाद्य राजपदवीयोगादहो लभ्यते ॥

अत एवाद्य दुर्म्मनायितमात्मानं राजकृत्येषु अपर्य्याप्तं विभाव्य सचिवा-रोपितराज्यचिन्ताभारो मानसनिर्वृतये विलासोद्यानमिदमायातोऽस्मि, किन्तु नास्ति तथापि मे चित्तस्य शान्तिः।

विदू—भवतु भो वयस्य, एहि यावदुद्यानशोभामवलोकयावः। अनासाद्यैव पथ्यभेषजे रोगमुक्तिमभिवाञ्छसि? तदेहि।

राजा—यदभिरुचितं वयस्यमन्दारकाय।

विदू—भो वयस्य, पश्य पश्य विलासोद्यानस्य परां रमणीयतां, वसन्तकुसुमोपहारसमलङ्कृतास्तरवो विलासिन इव परिदृश्यन्ते, वनपालपरिमार्जितेषु तलप्रदेशेषु परिचितैः सुरभिकुसुमकदम्बकैः स्वयमिव स्वपूजामभिनिर्वर्त्तयन्ति। एते च गृहीतनवीनपल्लवा रसालपादपा वातविकम्पितशरीरा निर्वापयितुमिव मदनतापतप्तं ते शरीरं व्यजनानिलं व्यापारयन्ति। माधवी चेयं अचिरोन्मीलित-कुसुमभारनिर्भरा समालिङ्गन्ती रसालपादपं विलासिनीव सानुरागा कञ्चन रसातिशयमावर्जयति मानसे सुमनसाम्। तद्वयस्य, रमणीय-स्तावदयं काननोद्देशः, तदत्र क्षणं विश्रम्य मानसावसादम् अवसादय।

राजा—वयस्य, सम्यगुपलक्षितं भवता, सत्यमेवैषा विश्रान्तिभूमि-रवसादटुर्मनायितानाम्, तथाहि—

सन्दं मन्दमुपेत्य मुग्धपवनो दूरात् प्रसूनाचलं
लीलामाश्रयतीव तदुगतलतास्पर्शात् प्रहर्षादसौ।
गन्धैरन्धयति मिलिन्दनिवहान् रम्या वनश्रीरियं
वासन्ती वितनोति किञ्चन सुखं दैवादिवासादिता॥

अपि च—

नवकुसुमविभूषां सन्दधानः शरीरे,
किशलयरुचिरागं सर्वतः सम्प्रविन्दन्।
मधुरुचिदयितायाः सम्प्रसादं विधास्यन्,
मलयपवनयोगात् कम्पिताङ्गो रसालः।

विदू—वयस्य, पश्य पश्य, असौ फलभारनम्रः सहकारो भवन्त-मचिरागतं सार्वभौमं सम्भावयितुमिव विनयेन वर्त्तते।

राजा–वयस्य, कोऽत्र विस्मयः? रीतिरियं परोपकारव्रतानां, तथाहि–

परार्थमेते निजशीर्षभागे, फलानि सन्धार्य्य नमन्ति वृक्षाः।
पयोधराः शस्यविवृद्धिहेतो, रब्धेः समादाय जलं क्षिपन्ति॥

विदू–भो वयस्य, यद्येते परोपकारार्थमेव फलानि धारयन्ति, तदा किमिदानीमस्माकं नोपकुर्व्वन्ति?

राजा–कथमिव?

विदू–किमत्र प्रष्टव्यं नाम? युज्यते तावदिदानीं परिणतैः फलस्तवकैरस्माकमाराधनम्, यतो वयं वनविहारपरिश्रान्ताः क्षुत्-पिपासापर्य्याकुलाः स्मः।

राजा–वयस्य, अचेतनाः खल्वमी पादपाः, कथं चेतना इव फलान्यस्माकमुपनयन्तु?

विदू–तत् स्वयमेव समाहृत्य वयमेषां परोपकारव्रतं पूरयामहे।

राजा–वयस्य, मा मैवम्, कुतः?

फलञ्च पुष्पञ्च महीरुहाणां, शोभा न सा जातु वियोजनीया।
सुवर्णसौभाग्यवियुक्तदेहा, न कामिनी नेत्रसुखं विधत्ते॥

विदू–भोः, अभिचारकर्म्मणा मनोरथं सम्पादयितुकामेन हिंसादि-निबन्धनं पातकफलमिव नेत्रसुखमुत्पादयितुकामैरस्माभिः किमु क्षुत्-पिपासाज्वालया नामशेषतापि समुपेक्षणीया? तदलमीदृशेन कानन-विहारेण, यत्र सत्स्वपि समीपे नानाविधेषु भोज्यवस्तुषु नास्ति मे मन्दभागस्य भोजनावकाशः। (कतिचित् पदानि गच्छति)। अथवा का गतिः? मृदङ्गादिभिरिव तालप्रयोगे वीणानिक्कणो मयापि वयस्य-मानसमेव अनुवर्त्तनीयम्।

राजा–वयस्य, मन्दारक, अद्य भवदनुवृत्तिरेव अस्यामप्यवस्थायां मे निर्वृतिमुपजनयति, तदलं संरम्भेण वनविहारानन्तरमचिरमेव पटवासमुपगम्य त्वदीयमन्तःकरणमनुवर्त्तिष्ये। (क्रमशः)

# प्राप्तपत्रे

## १। प्रतिवादः

### (उद्वाहतत्त्वसमालोचनस्य)

विद्वद्वर्य्य-श्रीयुक्तसंस्कृतसाहित्यपरिषत्-पत्रिका-सम्पादकधुर्य्येषु—

सबहुमानमाभाषणम्—

परिषत्पत्रिकायाः पौषमासीयप्रकाशे भवद्भिर्विहितं स्मार्त्तप्रवर-श्रीम (द्ध) श्यामचरणतर्कालङ्कारमहोदयेन सम्पादितमुद्वाहतत्त्वम धकृत्य समालोचनमधीतवताम् अस्माकमस्ति किञ्चि (द्) वक्तव्यम्। सम्पादकानां कर्त्तव्यं खलु व्यक्तिविशेषपरिचयमतोत्यैव वर्त्तते। न हि तैर्विस्मर्त्तव्यं वादापि यत् शत्रोरपि गुणा वाच्या दोषा वाच्या गुरोरपीति महाजनवचनम्। अलमनधिकारचर्चया, प्रकृतमनुस्त्रियते।

समालोचितोद्वाहतत्त्वस्य परिशिष्टीयगोत्रप्रवरभागः पठत एव न केवलमर्थतोऽनेकत्र पदतश्च स्मारयति लो गोत्रप्रवरविमर्शाभिधस्य कस्यचिन्निबन्धस्य, यो हि परिषद एव कस्मिंश्चिन्मासिका-धिवेशने श्रीयुक्तदुर्गामोहनकाव्यसाङ्ख्यपुराणतीर्थेन वाच्यमानः सावधानमस्माभिराकर्णित आसीत्। सम्भावयामस्तन्निबन्धकर्त्तार भ-धानमत्र कुत्रचिदिङ्गितेनापि तर्कालङ्कारमहाशयेन कथं नोटलेखि। यदुभयेषाम् आकर एक एवेत्युच्यते तदा—विषयो हि समानादेवा-करात् उद्धृतः सन्नुभयत्र समः सम्भवतु; क्वचिच्च शब्दः। परमत्र परिलक्षितं पंक्तिशः सामान्यं न तथात्वे सम्भवितुमर्हतीति चिन्तनीयं भवद्भिः।

अन्यच्च—यद्भूमिकायां परिशिष्टे च जिकनकृतो ग्रन्थः ग्रन्थसम्पादकेन गृहीत इत्युक्तं, तदपि न तथ्यतया प्रतिभाति। यद्यपि जिवन-

50 1

निबन्धस्य कुत्राप्यलब्धत्वात्। यदि वा तर्कालङ्कारमहोदयेन स निबन्धो वस्तुगत्या लब्धः, तत् प्राकाश्येन उच्यतां, येन पुराविदां महानुपकारो भविष्यतीति। †

कलिकाता | सत्यान्वेषिणः
२२।१०।३० | श्रीपञ्चाननदेवशर्म्मणः।

---

† अत्रास्माकमुत्तरम्। नहि कर्त्तव्योपदेशः पत्रप्रेरकशर्मणोऽस्माभिरपेक्षितो वर्त्तते। उदाहृतश्चं समालोचयतामस्माकमपि गोत्रप्रवरविमर्शाभिधो निबन्धः स्मृतिपथे समुदगात् किन्त्वाकरैक्यादेवं सम्भवेदिति मन्वानैस्तदुपेक्षितमस्माभिर्न हि व्यक्तिविशेषपक्षपातात्। भूयोदर्शनक्रमेण पत्रलेखकस्यैवं प्रतिभास्यति, यदध्यायसाम्यमपि ग्रन्थान्तरेषु आकरसाम्यादुपलभ्यत इति। यातु, अत्र पुनरनुसन्धानेन विज्ञातमेतत्—सत्यमिदं यत परिषदि याचितोऽसौ निबन्धः कञ्चित् कालं तर्कालङ्कारमहाशयस्यान्तिकेऽवर्त्तत इति। निबन्धकर्त्ता नवीनः सांख्यतीर्थस्तु स्वप्रबन्धं स्वगुरुणा स्मार्त्तप्रकाशकेन तर्कालङ्कारमहोदयेन स्वग्रन्थे वात्सल्यादुद्धृतं विलोक्य कृतार्थमात्मानं निबन्धञ्च विशेषेण गौरवान्वितं मन्यते। वयमत्रेदानीं ब्रूमो निबन्धुर्नामापि चेदवक्ष्यत ग्रन्थभूमिकायां तर्कालङ्कारपादेन, तदा साधुतरमभविष्यदिति। 'जिकनग्रन्थो'ऽतिदुर्लभ इति वयं जानीमः, किन्तु "कुत्राप्यलब्धत्वा"दिति हेतुवादोऽस्माभिर्न गृह्यते कालोह्ययं निरवधिर्विपुला च पृथ्वीति विजानद्भिः। परिषदो व प्राचीनपुस्तकसञ्चये एवमनेकानि दुर्लभपुस्तकानि वर्त्तन्ते यानि, कुत्राप्यन्यत्र पुराविद्भिर्न लब्धपूर्व्वाणि। परिशेषे पत्रलेखकं सविनयमावेदयामो यत्, समालोचनं न दोषावहं, किन्त्वसूयां न साधु शंसन्ति साधवः; न वा ते स्वयमसूयाधारकभाषया गुणसिद्धान्तमभाषन्त इत्यलं विस्तरेण।

२ । मन्त्रशास्त्रविषयकः प्रश्नः ।

श्रीचण्डीसप्तशत्याः शतचण्डीविधानं पण्डितैः सर्वत्र क्रियते। तत्र यदि प्रत्यक्षं हवनतर्पणमार्जनादि क्रियते, तर्हि नास्माकं प्रश्नावसरः। किन्तु यदि हवनादि प्रत्यक्षं न क्रियते, तर्हि कति पाठाः कर्त्तव्याः? प्रधानशतपाठानन्तरं हवनतर्पणमार्जनाद्यर्थं विंशतिः पाठाः, एवं विंशत्युत्तरशतपाठैः शतचण्डीविधानं सम्पूर्णं भवतीति केचिन्मन्यन्ते। अन्ये च प्रधानशतपाठोत्तरं दशांशहवनार्थं द्विगुणपाठाः २०, तर्पणार्थमेकः, मार्जनार्थञ्चैकः, इति द्वाविंशत्यधिकशतपाठैः शतचण्डीविधानं सम्पद्यते इति वदन्ति। इतरे विचक्षणा न विंशतिपाठैः न वा द्वाविंशतिपाठैः हवनाद्यङ्गपूर्त्तिः, किन्तु हवनार्थं यथा द्विगुणत्वाद् विंशतिः पाठाः, तथैव मार्जनार्थमपि द्विगुणत्वाद् द्वौ तर्पणार्थमपि द्विगुणत्वात् द्वौ पाठौ एवं चतुर्विंशत्यधिकशतपाठैः १२४ रेव शतचण्डी यथोचिता भवति नान्यथेति प्रतिपादयन्ति। किमत्र तत् प्रमाणं सुयुक्तिकं वाऽभियुक्तैरिष्यते?

इति पृच्छति कश्चिन जिज्ञासुः।

## सन्देशाः ।

**रामनाथस्मृतिसमितिः**—कति समाः समभवन् नैयायिकधुरन्धराणां महर्षिकल्पमहामहोपाध्यायानां रामनाथसिद्धान्तपञ्चाननपादानां स्वर्लोकप्राप्तेः। पण्डितवराणां तेषां पुण्यस्मृतिसंरक्षणाय बहुदिनादेव प्रतिष्ठितास्ते तदीय जन्मभूमौ कोटालिपाड़ायां तद्गुणमुग्धानामिका समितिः। तया 'रामनाथस्मृतिसमित्या' इतः प्राग् विज्ञापितमासीत्, यत् रामनाथजीवनकथामुद्दिश्य योग्यतमनिबन्ध-

लेखकाय समितिरियं रौप्यपदकमेकं दास्यतीति। विगतमाघीयशुक्ल-सप्तम्यां महामहोपाध्यायानां तेषां महाप्रयाणवासरे संस्कृतसाहित्यपरिषन्मन्दिर एव महामहोपाध्याय-श्रीयुक्तदुर्गाचरणसांख्यवेदान्ततीर्थमहोदयानामाध्यक्ष्येण समितेस्तस्या विशिष्टमेकमधिवेशनं सम्पन्नम्। बहव एव पण्डिताः पण्डितानुरागिणश्च तत्र समवेताः सिद्धान्तपञ्चाननमहोदयानां गुणावलीरकीर्त्तयन्। तत्र रामनाथजीवनस्मृतिमधिकृत्य वङ्गभाषायां विलिखितयोर्निबन्धयोरनुवाचनानन्तरमन्यतरलेखकाय श्रीमते अश्विनीकुमारवसिष्ठाय समुपहृतमासीत्तत् प्राक् प्रतिश्रुतं रौप्यपदकम्। अन्ते च समितेरन्यतरसम्पादकेन श्रीदीनबन्धुसाहित्यशास्त्रिणा सभायां विज्ञापितं यत् आगामिनि वर्षे समितिरियं सिद्धान्तपञ्चाननमहोदयानां जीवनसमकालं नव्यन्यायस्य स्थितिं प्रभावं चाधिकृत्य प्रकृष्टतमनिबन्धलेखकाय पदकमेकं, तथा गवर्णमेण्टपरिगृहीतनव्यन्यायमध्यमपरीक्षायां प्रथमस्थानाधिकारिणे मुद्राणां पञ्चविंशतिं दास्यतीति।

**मासिकसभा**—विगते सौरफाल्गुनस्य सप्तदशदिवसे शुक्रवासरे परिषदस्तन्मासिकमधिवेशनं समपद्यत। पाण्डित्यार्ज्जितसर्व्वजनाधिपत्याः श्रीमन्तः पञ्चाननतर्करत्नमहोदयास्तत्र सभापतिपदमलमकुर्व्वन्। प्रारम्भ एव विज्ञापिते पूर्व्वसभाया विवरणे कीर्तितेषु च नूतनसभ्यनामसु परिषदन्यतमसदस्यानां विद्वत्प्रवरश्रीमदादित्यनाथमुखोपाध्याय-एम् ए,पि एइच् डि महोदयानां राजकीयसंस्कृतविद्यालयस्याध्यक्षपदप्राप्तौ आनन्दप्रकाशावसरे एम् ए श्रीयुक्तकोकिलेश्वरशास्त्रिमहोदयेन वेदान्तविशारदश्रीमदनन्तकृष्णशास्त्रिमहोदयेन च अध्यक्षमहोदयानां गुणाः कीर्त्तिताः। तौ भट्टपल्लीवास्तव्येन श्रीयुक्तमन्मथनाथकाव्यव्याकरणतर्कतीर्थेन पठितः स्वरचितः कश्चिदभिनन्दनश्लोकः। परिषत्पत्रस्य परिषदाचार्य्येण श्रीकालीपदतर्काचार्य्येण वाचितमभूत् द्रा

पितसिक्तमभिनन्दनपत्रम् । इतः परं सभापतिमहोदयैस्तदभिनन्दनपत्रेण सुगुम्फितपुष्पमाल्येन च सादरमभिनन्दिताः संस्कृतविद्यालयस्याध्यक्षमहोदयाः । ततः प्रवृत्तो वेदान्तपरिभाषामधिकृत्य कश्चिच्छास्त्रीयो विचारः । तत्र श्रीयुक्तनिशिकान्ततर्कतीर्थः, श्रीयुक्तकुञ्जविहारितर्कसिद्धान्तः, श्रीयुक्तरमेशचन्द्रपञ्चतीर्थः, श्रीयुक्तगङ्गाचरणवेदान्तविद्यासागरस्य विचारमाध्यस्थ्यावलम्बनाय नियोजिताः । तत्र प्रथमतः शिवकुमारविद्यार्थिभवनान्तेवासिना श्रीमता शिवनन्दनपाण्डेयेन पूर्व्वपक्षः कृतः, तदुपरि तदुत्तरपक्षावलम्बिना भागवतचतुष्पाठीविद्यार्थिना श्रीमता निशिकान्तसांख्यतीर्थेन यदभिहितं तत्र पूर्व्वपक्षो निरुत्तरो जात इति मध्यस्थैः सभापतिमहोदयैश्च उत्तरन्तत् परिगृहीतम् । अथ पुनरपि वेदान्तपरिभाषामधिकृत्य तेनैव श्रीमता उत्तरपक्षावलम्बिना इदानीं पूर्व्वपक्षः कृतः, एतदुत्तरपक्षावलम्बी प्रथमपूर्व्वपक्षकारो श्रीमान् पाण्डेयस्तत्र किमपि वक्तुं नालमभूदिति तत्रैव तद्विचारावसानं जातम् । ततो विचारफलेन श्रीमतो निशिकान्तस्यैव ललितकुमारमित्रप्रदत्तं पारितोषिकं सर्व्वं प्राप्यमिति निर्द्धारितेऽपि विद्यार्थिनां विचारोत्साहवर्द्धनार्थं सभापतिमहोदयैः सर्व्वेषां समागतसभ्यानां सम्मतिमनुसृत्य तत् पारितोषिकात् पञ्च रूप्यकाणि विभज्य श्रीमते पाण्डेयाय प्रदत्तानि, शिष्टानि च विंशतिरूप्यकाणि श्रीमते निशिकान्तशर्म्मणे सादरमर्पितानीति । ततो यथावसरं न्यायशास्त्रमधिकृत्य कश्चिद् विचारो भवितेति सभापतिमहोदयैर्विज्ञापिते—रात्रेरष्टमघटिकायां सभाभङ्गो जातः ।

## परिषत्सदस्यानां मानप्राप्तिः

(१) **विचारपतित्वम्**—मह्रदेतदानन्दवृत्तं पारिषदानां यदस्मदीयपरिषत्सदस्यो विख्यातव्यवहारर्णावतौ एम् ए वि एल् इत्युपाधिकौ श्रीमन्तौ मन्मथनाथमुखोपाध्याय-द्वारकानाथचक्रवर्त्तिनौ सम्प्रति

कलिकाताप्रधानव्यवहारमण्डपस्य विचाराध्यक्षपदे प्रतिष्ठापिताविति। चिरमर्थिप्रत्यर्थिपक्षसमर्थनावसरे दृष्टमेवानयोरनन्यसाधारणं न्यायनैपुण्यम्। तत्र चाद्यस्तावत् पुण्यश्लोकानां स्वर्गतगुरुदासवन्द्योपाध्यायपादानां जामाता धर्म्मस्थितो सर्व्वथा तानेवानुकरोति, द्वितीयश्च सुचिरात् प्रभृत्येव सनातनधर्म्मपथमनुवर्त्तमानो विदितगुणप्रकर्ष एव विद्वद्गुणादिपक्षपातिनाम्। तदेतयोः परमधार्म्मिकयोर्धर्म्माधिकरणे नियोगोऽस्माकं विशेषतः प्रमोदमुत्पादयति। अचिरं त्यक्तविचाराधिकाराणां महामहिम्नां श्रीमदाशुतोषमुखोपाध्यायवराणां शून्यमासनं प्रतिग्राहितः श्रीमान् मन्मथनाथो नूनन्तदासनगौरवरक्षायामलम्भविष्यतीत्यस्माकमाशंसनम्। चक्रवर्त्तिमहोदयस्य तु धर्म्माधिकरणे चिरमेव नीतिव्यवहारेण सुप्रतिष्ठितमहिम्नो बहुकालादूर्द्धमेव लब्धव्यमासीत् पदमेतत्, दैवे नैवेयन्तं कालं तत्र प्रातिकूल्यमाचरितम्। इदानीमयं लब्धाधिकारो विचारकौशलेन स्वमुत्कर्षं स्वच्छन्दं प्रकाशयत्विति नः परमेश्वरे प्रार्थना।

(२) **विद्यालयाधाक्ष्यम्**—अपरञ्च नः सुखावहमेतत् यत् एम् ए पि एइच् डि इत्युपाधिकः श्रीमदादित्यनाथमुखोपाध्यायमहोदयः कलिकातासंस्कृतमहापाठशालायामध्यक्षपदे नियुक्त इति। कष्टां दशामापन्नायामत्र पाठशालायां योग्यपुरुषनियोगः सर्व्वथा संस्कृतविद्यायाः शुभमाशंसति। दर्शनपरमाचार्य्योऽयमध्यक्षवरो विद्यायामिव यथापेक्षितशासनकर्म्मण्यपि सुनिपुण इत्येतदस्माकमाशास्थानम्। आशास्महे—यदेतस्य कर्म्मनिर्वाहकौशलेन पुनरपि विद्यागारमिदं स्वप्रतिष्ठामधिकुर्व्वीत इति।

(३) **उपाधिप्राप्तिः**—अन्यदप्येकमभिनन्दनीयवृत्तान्तनिवेदनमिदानीमवशिष्यते। परिषदोऽस्या अन्यतरकर्म्मसम्पादकः कलिकाताविश्वविद्यालयस्याध्यापकः एम् ए वि एल् इत्युपाधिकः श्रीमान् पशुपतिनाथशास्त्रिमहोदयः सम्प्रति विश्वविद्यालयाधिकारिभिः 'पि एइच् डि' (दर्शनाचार्य्य) इत्युपाधिमानेन सत्कृतः। मीमांसादर्शनमवलम्ब्य

गम्भीरार्थनिबन्धविरचनमेवास्यैतदुपाधिलाभकारणम्। न वयं जानीमः कञ्चिदपि, यः खल्वितः प्राक् साक्षात् संस्कृतविषयमाश्रित्य निबन्धरचनेनात्र लब्धैतदुपाधिकः संवृत्तः। अलमात्मीयजनगुणालोचनयेति वयं विश्वविद्यालयाधिकृतेभ्यस्तदर्थं साधुवादान् समर्प्यैव विरन्तुमभिलषामः।

---

## ग्रन्थसमालोचनम्

पाइअ-सद्द-महण्णवो (प्राकृतशब्दमहार्णवः) कलिकाताविश्वविद्यालयाध्यापक श्रीहरगोविन्ददासश्रेठन्यायव्याकरणतीर्थसङ्कलितः। मूल्यं राजतमुद्राष्टकम्।

दृश्यते प्रायेण सर्व्वेष्वेव संस्कृतरूपकेषु प्राकृतांशानां सद्भावः। काव्यान्यपि सन्ति गउड़वहो-सेतुबन्धादीनि प्राकृतभाषायामुपनिबद्धानि। जैनग्रन्थास्तु बाहुल्येनैतद्भाषायामेवारचिताः। इत्थमस्मदीयसाहित्येतिहासादीनालोचयतामस्त्यत्यन्तमुपयोगः प्राकृतवाङ्मये। नियमेन प्राकृतस्याध्ययनं जैनविद्यार्थिष्वद्यापि बलवदेव प्रचलति। तदेवमत्यर्थमुपयोगमावहन्त्याः प्राकृतभाषायाः सम्यग्विज्ञानसम्पादनाय समपेक्षितः समीचीनः कश्चन प्राकृतशब्दकोशग्रन्थः, परिप्राप्तश्च सम्प्रति तथाविध एवायम्। अत्र हि शब्दकोशेऽकारादिक्रमसन्निवेशितानां शब्दानां संस्कृतपर्य्यायशब्दानुल्लिख्य हिन्दीभाषायान्तदर्थाः परिकल्पिताः, यथावसरमुदाहरणान्यपि मूलग्रन्थतः प्रदर्शितानि। प्राकृताध्यायिनामतिहितोऽयं ग्रन्थः खण्डचतुष्टयेन समाप्तिमाप्नुयात्। प्रथमखण्डेऽत्र स्वरादिशब्दा निःशेषिताः। नूनमयं पण्डितवरश्रीश्रेठमहोदयस्य यत्नातिशयं प्राकृतभाषाप्रावीण्यञ्च सूचयति। परन्तु समालोचकानामक्षिगोचरतामिदमपि नातिक्रान्तं यदत्रोदाहरणाकरग्रन्थविज्ञापनार्थमनुसृतानां साङ्केतिकचिह्नानां कतमेन कस्योपस्थितिरिति निर्द्देशो नोपलभ्यत इति तदत्र ग्रन्थकर्त्तुर्दृष्टिमाकर्ष्टुमिच्छामः इति।

---

---


प्रकाशको मुद्रापकश्च—श्रीजानकीनाथकाव्यतीर्थः।

संस्कृतसाहित्यपरिषद्भवन, श्यामबाजार ब्रीजरोड, कलिकाता।

मुद्रणस्थानं—श्रीप्रेस; १०७, कर्णवालिस ष्ट्रीट, श्यामबाजार, कलिकाता।

१८४५ शकाब्दे | Reg. No. C. 1073. | ६ष्ठ वर्षस्य
चैत्रे | | १२श संख्या
April 1924. | | Vol. VI. No. 12




# संस्कृतसाहित्यपरिषदो मासिकं मुखपत्रम्।

सम्पादकौ— महामहोपाध्यायश्रीदुर्गाचरणसांख्यवेदान्ततीर्थः
श्रीकालीपदतर्काचार्य्यश्च

सहकारिसम्पादकः—श्रीजानकीनाथसाहित्यशास्त्री।



प्रतिखण्डमूल्यं ।० चतुराणकम् ] [ वार्षिकमूल्यं ३) रूप्यकत्रयम्।
Foreign price 7s. yearly including postage.

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः ।
भाषालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

१८४५ शकीये चैत्रे, ६ष्ठ-वर्षस्य १२श-संख्या

## आशुतोषस्य साधना ।

लेखकः श्रीपञ्चाननकाव्यतीर्थः

आसीत् नदीयाप्रदेशान्तर्गते मह्लाजमपुराख्ये ग्रामे श्रीमदाशुतोष-रायो नाम कश्चित् वारेन्द्रकुलोद्भवो विप्रसाधकः ।

नदीयाप्रदेशान्तर्गते खड़ियाख्याया स्तटिनुग्रन्तमायाः वीचिचुम्बित-शिवहट्टाख्ये निसर्गसुषमासम्पत्सारे सोऽजनि ।

शिवहट्टविषये नदीयाधिपतेरेकः कृष्णरायसंज्ञको देवविग्रह-विशेषस्तज्जनपदवासिनां भक्तिमाददानस्तेषां पुण्यपरिणाम इव वर्त्तते ।

मन्यामहे एवं सजलाम्बुदप्रभस्तत्प्रभुरेव व्रजभुवं विहाय प्रेम-ततिं तनोतिस्म । अस्मदाशुतोषोऽपि प्रकटिते तस्मिन् तत्प्रेमवञ्चितो नाभूदिति, अपि तु भक्तसकलसर्वस्वमणेस्तस्य विभोः प्रेमज्योतिषा तस्य हृद्गतानि सान्द्राविद्यातमांस्येव दूरीकृत्य योगस्य इन्द्रियग्रामसंयमन-परोऽसौ गुह्याशयोत्तमश्लोक इव शीर्षशयनमधिगतो नितरां निखिलजनाननुरञ्जयति । राय इति पदस्य धनवाचित्वात् परमपुरुषकृष्णरायस्य संज्ञा भक्तजनसर्वस्वानुक्रमेणानेन चोरितेति

तच्चरितानुध्यानप्रसङ्गादनिर्वचनीयानन्दमूलकोऽयं विन्यासोऽथवा सेव्यसेवकयोर्भेदो न युज्यते यदि, भगवद्भक्तिरवलम्बनीया यदि, तद्विकल्पस्य तर्हि क्व प्रसङ्गः ?

यातु, आशुतोषस्य महान्तमभ्युदयं पश्यद्भिरस्माभिरपि ज्ञापितोऽयमनुभयः, यदयं एवम्भूतं उपासकप्रवरं अज्ञात्वा तं "उन्मत्त एष, आभिचारिकमन्त्रैर्जड़ीकृत एष" इत्यादिभिः प्रभूतैः कल्पनोत्थैर्विसंवादैरुपेक्षितं प्रतिपादितवन्तः । असौ भावितात्मा बाल्ये विद्यार्ज्जनपाटवं प्रदर्श्य स्वजनान् शिक्षकांश्चातिवेलं पुलकितान् कृतवान् ।

ब्रह्मबुभुत्सया सन्ध्याह्निकक्रियातत्परतया च परस्परं भूषणभूषभावं विदधे । जपयज्ञनिष्ठोऽसौ स्वेष्टदेवमूर्त्तिं ध्यायन् प्रायशः जननुरात्सङ्करहितो मानवक इव क्रन्दितुमभ्यस्तश्चासीदित्यपि वयं अपश्याम । स हि श्रीरामपुराख्यस्य ग्रामस्य कस्यचित् कुलीनब्राह्मणस्य दुहितुः पाणिं पीड़यामास । तस्या गर्भे च कन्यामेकां जनयति स्म ।

यूनामुपभोगासक्तिं पराजित्य साधकविजयवैजयन्तीविमण्डितः परमरायमधिकृत्याशुतोषः समाधौ स्थिरप्रतिष्ठोऽधुना हर्षोत्सं तथा विस्मयसीमानमुत्तरोत्तरं वर्द्धयति नः ।

काशीप्रयागादीनि तीर्थस्थानान्यपि एकलो विभुप्रेमोन्मत्ततया पर्य्यटन् गृहमागत्य महाजनपुरस्थं कुटुम्बनिलयं अलङ्कृत्य मौनमवलम्ब्य च द्वादशवर्षाणि यावत् शय्यामधिशेते ।

आहारे नास्था, विहारे वीतरागता, स्नानेन किमस्य विषेकसुरप्रवाहिणीवारिस्नापितचित्तस्य, किमस्य जनसदसि वाक्पटुत्वात्मारामसंयोगप्रियस्य ? कृत्तेन्द्रियक्रियस्यैवं दिनानि विगतानि ।

अमृतस्य पुत्रोऽधुनामृतत्वमास्वादयति ।

कति वर्षाण्यतीतानि, विस्मयावहोयमुदन्तोस्माभिः श्रुतः ।

अथ भगिनीपतेर्भवनं दहत्यग्निदेवे अकाण्डेऽयं शरीरिणां प्रकृतिसुलभशरीररक्षणप्रयासे मनाक् चञ्चलो भूत्वा वरगृहाद्बहिर्गतवान्। न कोऽपि तस्य गृहद्वारमुन्मोचयति स्म।

आश्चर्यमेतद्बहुजनैः परिदृष्टं। एतदपि श्रुतमसौ वाग्विरतः प्रागेवावदत् "गृहमिदमग्निसंलग्नं भविता श्वः"।

परमानन्दहेतुश्चेदमप्यस्माकम् यत्, नास्त्यस्य साधुवादप्रचारभूमा स्वेन कदापि। इदानीन्तनकाले कलिकल्मषनाशाय कैवल्यं श्रितानां फलोपाधिपल्लवितसंज्ञकानां केचन स्ववाटमलङ्कुर्वन्तामीदृशीं यशोराशिं प्रतीच्छन्तो यत् सर्वत्र तैर्नतिर्न तथ्या।

साधनभूमौ ते खट्वारूढाः, मङ्गलघटविरहिते यशोद्वारि प्रवृत्तिः पण्यजीविनी। वनदेवीव प्रसूनकदम्बसुरभिविस्तारनिपुणा निवृत्तिस्सङ्गयभीता इव सती आत्मगोपनतत्परातिगहनाटव्याम्। भद्रं वितरतु जगद्विधाता, भूदेवाश्च देवाः भवन्तु, आशुतोषस्तोषयत्वखिलजनान् इति शम्।

---

## लक्ष्मणं प्रति शूर्पणखायाः।

(लेखकः—श्रीयामिनीकान्तसाहित्याचार्यः)

स्निग्धाञ्जनं नयनयोरमृतं शरीरे
मोदो महान् मनसि कोऽयमपूर्व्वमूर्त्तिः ?
यस्यावलोकनमहोत्सव-लोलुपानि
सर्व्वेन्द्रियाणि मम हा नयनीभवन्ति।

धिग् वेधसं सकललोकललाममेनं
सृष्ट्वा निकृष्टमतिना यतिना समानः।

श्रेयः किमीश्वरयशो विहितः किमस्मै
सत्यं वचो 'जगति भिन्नरुचिर्हि लोकः'।

नेत्रं सकृत् सपदि सुन्दरमस्य यस्यां
पादं दधाति दयितेति धिया कृशाङ्गी।
कस्मिन् कियत् कति समाश्च तपो विधाय
नारीजनुः सुतनुरेतदसौ विधत्ते ?

किंवा विधिर्निखिलशिल्पनिधिर्विचार्य्य
चेतःपटे सकलसुन्दरसारभागैः।
आरोप्य रूपमतुलं कृतजीवयोगो
जैत्रं युवानमसृजत् प्रथमप्रकाशं।

सख्यौ ! क्व ते सरससुन्दररूपमेतत्
क्वासौ मरोः सदृशतापसतीव्रवंशः ?
न ज्ञायते किमपि चेतसि सन्दधानो
धातामृतं गरलसङ्गतमातनोति।

चन्द्रे कलङ्कमिव कीटमिव प्रसूने
व्यालं विलग्नमिव चन्दनपादपाङ्गे।
संवीक्ष्य भीषणमिदं त्वयि जाटजूटं
सत्यं सखे स्फुटति चित्तमिदं मदीयम्।

किं जीवनप्रतिम ! यौवनपूर्व्वभागे
भोगे विरक्तिमतिरिक्ततमां विधत्से ?
रूपानुरूपमयि रूपवतां वरेण्य !
नालोकसे किमपि मित्रकलत्रमत्र ?

प्रेमैकपात्र ! शतपत्रदलैकजैत्रं
नेत्रं प्रवर्त्तय मुहूर्त्तमयात्र देहे।

यद्‌यत्तवास्ति रुचितं तदिहास्ति सर्व्वं
रूपं वयो रतिरसो वचनप्रकारः।

दृष्ट्वा सखेऽसि विदितो विबुधप्रवीणः
कार्य्येषु किं विरचयिष्यति वैपरीत्यम्
नानासुखोचितमिदं सरसं शरीरं
दुःखाय रूक्षतपसा विरसीकरोषि।

रोचेत तुभ्यमथ चेद् विपिने तपस्या
योगाश्रमं मम मनोगहने विधेहि।
मोक्षः कियान् स हि पुनर्भवता विनेयो
नूनं भविष्यति फलिष्यति सर्व्वकामः।

राज्यप्रयोजनमिदं यदि ते तपः स्याद्
राजीवलोचन ! विलोचय यौवनेन।
पुञ्जीकृतानि भवतोऽखिलसाधनानि
लग्ने शुभे सुभग ! साधय जैत्रयात्राम्।

सन्यस्य साममरवाञ्छितमृद्धराज्यं
कामस्त्र कामचरणेन विशीर्णमूलम्।
शीघ्रं समेत्य वशमानय भूमिमेतां
रत्नानि यत्नरचितानि च तानि तानि।

यत्त्वं सखे सकललोकविलोभनीयं
शीर्णं करोषि नवयौवनमेतदेव।
दासीं सदा दहति दीपयदत्युदग्रां
ज्वालां करालवदनां वत किं करोमि।

शेषे रसोरसि निशासु शिलोपधानं
यत्त्वं सखे तदधिकं ननु बाधते माम्।

क्रूरे कुशाङ्कुरमये पथि पादपद्मं
यत् पात्यते पतति तन्मयि भीमवज्रम् ।

बन्धो ! कथं व्रजसि बन्धुरभूमिभागे
सज्जं चकास्ति भवते मम हृन्निकुञ्जम् ।
एहि प्रिय प्रथय तव विलासलीलां
शून्यं नृपासनमशून्यमिदं कुरुष्व ।

दूरे विधेहि दयितेश ! महाविशालं
लौहं धनुः करिहरीन्द्रवधे विदग्धम्
हित्वा जटां सुविकटां कटुवल्कलञ्च
रूपोचितं रचय सुन्दरसभ्यवेशम् ।

क्लान्तोऽसि चेद् विपिनपर्य्यटनप्रयासै-
रायाहि ते क्लमविनोदमहं विदध्याम् ।
कुम्भाविमौ मदनमन्त्रमहाप्रभावौ
शान्तिं विधास्यत इतो रससन्नियोगात् ।

भानुर्विहायसि भृशं तपतीति बन्धो !
तृष्णाकुलं तव मुखं ननु लोकयामि ।
सञ्जीवनीमयि सुधां हृदये निधाय
मुग्धाधरस्तव क्षते कुरुते व्यपेक्षाम् ।

प्रेम्नः पयोधर ! कियच्चिरमाकुलेय-
मालोकतां तव मुखं तृषिता चकोरी
दूरेऽस्तु वारि मधुरं मृदुगर्ज्जितं ते
नोपाज्जतेि श्रुतियुगेन सखे ! हतास्मि ।

सत्यं ममेव शतशस्तव कामिनीनां
सन्ति प्रिय ! त्वमिव मे नहि दृश्यतेऽन्यः ।

भानोः शतानि विलसन्मधुपद्मिनीनां
तासां पुनर्दिवसपालक एक एव।

---

# लीला

(पूर्व्वानुवृत्ता)

लेखकः—श्रीभवभूतिविद्यारत्नः।

मम द्वितीयकर्म्मस्थलमासीन्मातुलालयानतिदूरस्थितश्चार्णक (वाराक-पुर)नामा जनपदः। तत्स्थानादल्तरान्तरा मे पितृपदाधिकारिणो मातुलदम्पत्योश्चरणदर्शनभाग्यमायत्तमभूत्। तावपि मां सन्निहित-मवाप्य परं हर्षं जग्मतुः। मम स्वदेशागमनकथामाकर्ण्य पुनरेव बहवः कन्याजनका मह्यं स्वदुहितृदित्सवः प्रभुभूतस्य मातुलपादस्य भवनं गन्तुमारेभिरे। बधूवदनदिदृक्षुभ्यां वार्द्धक्यदशामापन्नाभ्यां मातुलदम्पतिभ्यां सविशेषमनुरुद्धोऽपि लीलाचरितदर्शनेन नारीजन-चरित्रेष्वश्रद्धान्वितो नारीपाणिग्रहणं केवलं क्लेशकरमिति जातप्रत्यय आजीवनं कौमारव्रतं जिघृक्षुर्विनयनम्रवचनं तौ न्यवारयम्। नूनं केनाप्यभिशापेन दिग्धं लीलाचिन्तनं मम हृदयतलमधराकार्षीत्, अन्यथा तन्निरन्तिरेऽस्मिन्नधिष्ठानेऽविरततद्विस्मरणप्रयासरतस्य मे हृदयात् तस्या मायामयी मूर्त्तिः कथं नापसृता! भवतु स्मृतिपथात् तन्मूर्त्तिमपसारयितुकामो विषयाविरतचित्तस्तपोनिरतो मुनि-रिवैकाग्रमनाः तात्कालिकनानादेशहितव्रतेष्वात्मानं न्ययोजयम्। तत्फलेनात्रापि मम सुयशः सर्व्वत्रैव परिकीर्त्तितमभूत्, परिज्ञातश्चाहं राजपुरुषैरशेषकर्म्मनैपुण्येन।

एवं समतीतो दशवर्षकालः स्वकीयःप्रतिहतसञ्चरणकर्म्मणा ममो-परि संघटयन् हं क्वचिद् दमये विशेषघटने। ह वृत्तमासीन्मत्-

कर्म्मपाटवाकृष्टराजपुरुषप्रसादादात्मपदोन्नतिसहितो राजसम्मानोपाधिलाभः, विषादवृत्तं तु करुणावतोर्देवतोपमचरित्रयोर्मतपितृतुल्ययोर्मातुलदम्पत्योर्यथाक्रममम्मरधामगमनम्। तदानीमुन्नतपदाधिरूढ़ेन चिरकृतज्ञेन मया महाड़म्बरेणैव सम्पादितस्तयोः श्राद्धोत्सवः। अवसरेऽस्मिन्नेतदपि वक्तव्यं यन्मम पैतृकभूमिर्नवपल्ली मया न विस्मृता। मातुलदम्पत्योः स्वर्गमनात् परं जन्मभूमेरवस्थामवलोकयितुकाम एकस्मिन् दिवसे तत्राहं गतः सर्व्वैरेव पल्लीजनैः परमादरमभ्यर्थितः। किमधिकं विस्मयकरं स्याद् यद् येनैव पितृव्यमहोदयेन प्रागस्मनाथदशायां सकृदृष्टिदानेनापि नानुगृहीतः, इदानीं स आकर्णितमदभ्युदयवृत्तान्तः स्वार्थपूरणच्छिद्रसन्धानरतः साधारणेषूच्चकण्ठमात्मवंशोज्ज्वलदीप इति मामुद्घोषयितुं प्रवृत्तः। तस्यैतेनापूर्व्वाचरणेन नोत्पाटितं मे हृदयप्रोतमभिमानशल्यं, यदि च धैर्य्यशीलेन मया तस्मै बहिरात्मीयभावः संरक्षितः। ततः स्वगृहसंस्कारदत्तदृष्टिः सत्वरं पैतृकभवनं बृहद्धर्म्मागाररूपेण परिणमय्य, स्वग्रामे च दैन्यपीड़ितानां पल्लीवासिनां कृते निम्नोच्चौ द्वौ विद्यालयौ संस्थाप्याप्रवं कामपि चित्ततृप्तिम्। चन्दननगरस्थितो मातुलालयोऽप्युत्तराधिकारसूत्रेणाधिगतः कारितसंस्कारः पुण्यचरितयोर्मातुलदम्पत्योः शाश्वतस्वर्गभोगार्थमतिथिशालारूपेण परिवर्त्तितः, तत्र च संस्थापितं भगवद्भक्तयोः स्वर्वासिनोस्तयोः परितृप्तये नित्यदेवार्च्चनविधिकर्मकं विष्णुमन्दिरम्।

एवम्प्रकारेणाहमविरतजनहितसाधनव्रतो विरलीकृतलीलाचिन्तनः सुकृतकृतापूर्व्वचित्तप्रसाद आयुःसलिलतरङ्गप्रतीकाशानि दिनानि यापयितुं प्रवृत्तो यदैकदा प्रातर्नित्यदैनिकवार्त्तावहपत्रपाठक्रमेण मया दृष्टमधोलिखितं मृत्युघोषणम्—

"मृत्युसंवादः—दुःखदुःखेन वयं वारेन्द्रभूमेः खनामधन्यमहात्मनः स्वर्गतस्यानन्ददेवरायस्यानुरूपसहधर्म्मिण्याः प्रथितकीर्त्तेरधिकरणिक-

पुरुषस्य रायवाहादुरोपाधिकश्रीयतसुशीलकुमारचक्रवर्त्तिन: स्वसु-र्धर्मागतप्राणाया वङ्गकुललक्ष्मीललामभूतायाः साध्वीशिरोमणिर्लीला-देव्याः स्वर्गमनवार्त्तां समुद्घोषयामः। अनेन हि नारीरत्नेन परिणयात् स्वल्पकालानन्तरमेव वैधव्यं गतेन केवलधर्म्मकर्म्मभिः स्वजीवनावशेषं यापयितुमभिलषता स्वभूमौ निर्म्मापितानि बहुधर्मशालादेवायतनानि प्रतिष्ठापितानि च साधारणहितार्थं बहूनि सरस्तीर्थातिथिभवनानि। पुण्यचरितायास्तस्याः प्रधानधर्म्मकार्य्याणि स्वस्वामिन् स्वाधिकृतभूभागेषु ये च निःस्वग्टहस्था वर्त्तन्ते स्म, तेभ्यो लेशतोऽपि करमगृहीत्वा-न्नाच्छादनप्रदानम्, अनाथच्छात्राणामध्ययनसौकर्य्यार्थं नानास्थानेषु वैतनिकविद्यालयस्थापनं, दयिततनयविरहिताभ्यो दीनरमणीभ्यश्च स्वजीविकोचितवृत्तिप्रदानम्। श्रूयते च निरपत्या सा स्वत्यक्तसर्व्व-सम्पत्तेर्विनाशभयाद्देवस्वत्वेन परिणमितायाः निखिलतत्त्वावधानभारं यथा सा चिरजनकल्याणसाधिका भवेदिति स्वभ्रातुः सुशीलकुमारस्य हस्ते समर्प्य स्वर्लोकं प्रस्थिता। जरामरणरहितायां नित्यानन्द-पूर्णायां स्वर्भूमौ प्रस्थितपूर्व्वेण पतिदेवेन मिलित्वोपभुङ्क्तां पुण्यवती नित्यपतिसेवनसुखसौभाग्यमितिमात्रमुल्लिख्य वयं शोकप्रसङ्गमेनमुप-संहराम इत्यलम्।"

एतेनातर्कितलीलोपरतिसंदेशेनाहं तच्छोकानलदग्धहृदयो व्यचिन्त-य"महो! प्रस्थिता लीला मम हृदयस्य तच्चिन्तामात्रसारावशेषमपि विलोपयितुम्!" पूर्व्वं येन तत्प्रत्याख्यानजनितेनाभिमानेनाहं स्वमनसः तस्य सुखमयीं स्मृतिमप्यपसारयितुमुद्यतः तस्यां सर्व्व-प्रत्याख्यानातीतमप लोकं गतायामिदानीं सोऽभिमानो विलुप्तः। विशेषतः संदेशपत्रे लीलाभ्रातृरूपमात्मपरिचयं, तत्स्थानपरजनान् विहाय च ममैवोपरि तस्याः स्वसम्पत्तितत्त्वावधानभारार्पणमवलोक्य "अहो! प्रेममय्या तया न विस्मृतोऽयं वराकः, न च विस्मृतं 'नाप-सारयितुं शक्या तव मूर्त्तिरेतद्भग्नहृदयादि'त्यात्मनः पूर्व्वनिवेदनम्।

संयतचित्तया तया परिणयात् परं विशुद्धजीवितं धारयितुकामया सत्प्रणयमवैधमिति मन्यमानया निर्म्मलभ्रातृस्नेहेन स परिणमितः, मूढ़चित्तेन मया तु तस्यास्तं पवित्राभिप्रायमज्ञात्वा तत्सविधे कल्मषमयपुनरुद्वाहप्रस्तावोत्थापनेनात्मनो बालिश्यमेव प्रदर्शितम्। अपि च तस्या औदास्यपूर्णं मौनभावं दृष्ट्वा मोहान्वितेन मया चिरमत्पक्षपातिन्यां तस्यां कृतघ्नत्वमपि समारोपितम्।" इत्येवम्भूतचिन्ताकुलचित्तोऽहमतर्कितं कियन्तं कालमयापयमिति न जाने, यदा मदीयासन्नपरिचारको मदन्तिकमुपागम्य मम हस्ते लाक्षामुद्रासनाथं पत्रमेकमदात्। पत्रस्यावरणभागं मयमनसिंहनामाङ्कितं निरीक्ष्य "हो नूनं समागतमेतल्लीलाधिष्ठानादि"त्यतीव समुत्सुकः तत्पत्रावरणमुन्मोच्यापश्यं तत्र लेखद्वयम्। तयोरेकः खल्वमरधामप्रस्थितया लीलया लिखितं मां प्रत्यन्तिमः शेषनिवेदनम्, अपरञ्च तदुपरि राजपुरुषस्वाक्षरान्वितं तत्सर्व्वसम्पत्तिरक्षावधानभारसमर्पणपत्रम्। तस्या निवेदनपत्रे एवं लिखितमासीत्—

"भ्रातः सुशीलकुमार,

इदानीं स्वजीविताबसानं समागतमवलोक्यातिकठिनहृद्रोगाक्रान्ताहं चिरानुकूलं त्वां ज्ञाताज्ञातात्मनिखिलापराधकृते क्षमां याचमाना मदीयं शेषनिवेदनमेतल्लिखामि। आशैशवज्ञातं तव चरित्रविषयं विचिन्त्य, अगणितमदपराधनिचयस्त्वं मानुग्रहः सर्व्वमेतन्मम निवेदनं नावज्ञास्यसीति निःसन्देहास्मि। पूज्यजनैर्यदा त्वां परित्यानेन सह मम परिणयः सम्पादितस्तदैवाहमार्य्यकुलसम्भूता स्वपतिदैवतदत्तचित्ता कठोरात्मसंयमेन तव प्रेममयमूर्त्तिं हृदयादपसार्य्य तत्र भ्रातृमूर्त्तिं ते समस्थापयम्। ततोऽधिकरणिकपुरुषरूपेण मयमनसिंहे गमनवार्तां निशम्य भगिन्येव मया कृतं त्वदीयामन्त्रणम्। प्रोषितपूर्व्वभावस्य तव मुखात् अविधवोचितं पुनरुद्वाहप्रस्तावमाकर्ण्य, यदि विस्मृतप्रायः शैशवप्रणयः पतिरहिताया मे नारी-

जनोचिते दुर्ब्बलहृदये पुन: समुदीयादित्याशङ्कया त्वत्प्रकाशाद्दात्मान-सगोपाये । अन्यथा न मन्यस्व भ्रातस्तन्मे त्वदवगणननिमित्तं प्रत्याख्यानम् । ततो मद्गृहात् प्रस्थिते त्वयि कातरकातरया मया नयनवारिवर्षैर्भूसितलं कीदृशमवाकीर्णं तद्विदितं सर्व्वान्तर्यामिनैव । भवतु, परिणयात् परं मम हृदयपटे नवस्थापिता ते भ्रातृमूर्तिः न कदाचिदपस्ता । कियत्कालं यावदतिप्रबलहृद्रोगाक्रान्तया समैतच्छेषापराधनिवेदनम् ।

मृत्युमुखपतनोन्मुख्यास्तव भगिन्या अपरञ्च निवेदनं यत् केवल-धर्म्मकर्म्मभिरात्मजीवनावशेषं यापयितुकामया मया निराश्रयभिक्षुक पथिकादीनां समुपकृतये संस्थापितान्यत्र बहुसंख्यकधर्म्मशालातिथि-भवनानि, दीनगृहस्थानामनाथबालकविधवानाञ्च प्रतिपालनार्थं कृतं सम्यग् व्यवस्थापनम् । तद्विपुलकर्म्ममयं ममैतद् भूस्वामित्वमनपत्याया मे परलोकगमनात् परमात्मीयभूतं कर्म्मकुशलं त्वामन्तरेण क एव परि-चालयितुं शक्नुयादिति विचिन्त्य विशेषतोऽस्मिन् प्रदेशे सर्व्वजनानां त्वत्-पक्षपातित्वमवलोक्य चात्मनो निखिलसम्पत्तिं स्थायित्वकामनया देव-स्वत्वेन परिणमय्य तस्याः सर्वतत्त्वावधानभारं तव हस्ते समर्पयामि । तद्विषयको लेखो हि समग्रप्रकृतिजनानुमोदितो राजपुरुषस्वाक्षराङ्कित एतत्पत्रसंलग्नः प्रेष्यते । चाणकजनपदात् पुनरत्रैव राजकर्म्मव्यपदे-शेनागत्य पालय भ्रातस्तव चिरानुगृहीतभगिन्या अनुरोधवचनम् तद् राजपुरुषैः सह परामृश्यात्रागन्तुं कृतविलम्बेन त्वया सार्द्धं यदि मे साक्षात्कारो न भवेदिति पत्रद्वारैव पालितमेतन्मम कर्त्तव्यम् ।"

लीलायाः पत्रमेतदधिगम्याहो ! तथा एष सुविमलचित्तभावो सदनानलसन्तप्तं नाधर्म्येन मया वैपरीत्येन परिज्ञात इत्यनुतप्तहृदय-स्तदीयशेषदर्शनस्याभावात् संव्यथितचित्त आत्मानि स्वर्लोकगतायास्तस्या भ्रातृत्वसम्बन्धमारोपयन् तत्तृप्तये तदीयशेषनिवेदनं कर्म्मणैव परि-पालयितुकाम उच्चतरराजपुरुषेभ्यः पुनर्मयमनसिंहगमनाभिलाषमावेद्य

चिरमदनुकूलानां तेषां समादेशेन सत्वरं लीलास्थानं गतः। जननी-पदमधिष्ठितया लीलया विहीनाः सर्व एव तत्रत्या जनाः पुनर्मामासाद्य हर्षविषादसङ्कुलचित्ता मामभ्यर्थयामासुः। अहञ्च गृहीत-निखिललीलाविषयकर्म्मभारो यावत्कालमात्मनोऽधिकरणिकपदमवाप्स्यत, तावत्कालं द्वे कर्म्मणी एव सम्पाद्येदानीं राजकीयकर्म्माद् गृहीतवार्द्धक्यवृत्तिः केवललीलाकर्म्मदत्तचित्तस्तत्पवित्र-भावेनात्महृदयं यथाशक्त्यापूर्य्याविरतं जनहितं साधयन्नमरधामस्थितां तां किञ्चित् परितर्पयितुं पारयामीत्यात्मानं चरितार्थं मन्ये।

(समाप्ता)

---

# शास्त्रसामञ्जस्यम्

( पूर्व्वानुवृत्तम् )

लेखकः महामहोपाध्यायश्रीकैलासचन्द्रकाव्यव्याकरणसांख्यपुराणतीर्थभट्टाचार्य्यः।

ततः श्रुतमोक्षं मुमुक्षुं प्रत्युच्यते कणादेन "अथातो धर्म्मं व्याख्यास्याम" इति। अथ श्रुतमोक्षस्याधिकारे अतो मोक्षसमन्वा-रम्भणप्रयोजनाद् धर्म्मं विशेषेणाख्यास्याम इति।

ननु यतो मोक्षनिष्पत्तिः स्यात्तदनाख्याय किमर्थं व्याख्यायते धर्म्म इत्याशङ्कायामाह "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म्म" इति यस्माद-भ्युदयनिःश्रेयसयोः सिद्धिर्भवति स सर्वो धर्म्म इत्युच्यते।

ननु वेदस्यैकांशे यागादिकमपरांशे च श्रवणादिकमुपदिष्टं तत् सर्वमेव किं धर्म्मजनकमित्याकाङ्क्षायामाह "तद्वचनादाम्नायस्य प्रामाण्यमिति" तस्य धर्म्मस्य वचनादाम्नायस्य प्रामाण्यमङ्गीकृत-मर्थान्मीमांसायां समस्तवेदस्य क्रियार्थकत्वकथनादेव धर्म्मार्थकत्व-

सांख्यमतं नह्यनर्थिका क्रिया वेदोपदिष्टा सम्भवति, तथात्वे ह्यननुष्ठानलक्षणमप्रामाण्यमापततीति भावः।

ननु मिथ्योपलब्धिविनाशस्तत्त्वज्ञानादिति न्यायोक्तस्तेनैव श्रवणादिक्रियायाः सार्थकत्वे सम्भवत्यपि तद्विरोधेन किमिति श्रवणादिजन्यं धर्मान्तरमिष्यते भवतीत्याकाङ्क्षायामाह "धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसमिति।

योगजसंस्काररूपादशुक्लाकृष्णाख्याद् धर्मविशेषात प्रसूतं द्रव्यादिगतसाधर्म्यद्वारेण तत्त्वविषयकं यज् ज्ञानं तस्मान् निःश्रेयसं स्याद् इति शेषः। योगजसंस्कारं विना तत्त्वेषु विशेषज्ञानं न सम्भवति श्रवणमात्रात्तेषु सामान्यज्ञानमेव सम्भवति तदपि द्रव्यादीनां साधर्म्यवैधर्म्यद्वारोक्तत्वैवोपतिष्ठत इति। मुमुक्षूणां हि योगाभ्यासेनैव वैशेषिकोक्ताः परमाणुरेव प्रथमं साक्षात् कर्त्तुं शक्यस्तस्मादत दर्शने मोक्षारम्भकज्ञानकर्मणी उपदिष्टे इत्यतोक्तं "समन्वारम्भणाद्" वैशेषिकदर्शनसार्थकत्वमिति।

मोक्षस्य ज्ञानकर्मभ्यारभ्यत्वं श्रुतिरपि कथयति। "ज्ञानकर्मणी तं समन्वारभेते इति ततश्चात्र काचिदपि विप्रतिपत्तिः सुधीभिर्नानुसरणीयेति।

इत्थं समन्वारम्भणवतो मोक्षस्य विधानं यत् सांख्यदर्शनस्य विशेषप्रयोजनमुक्तं तत् सांख्यदर्शिनां सुगममेवेति मे प्रतिभाति।

इह हि मध्यमाधिकारिणा ज्ञेयानां सर्वेषां तत्त्वानां सङ्ख्यानं कृतं येषु सांख्यतिनामकं विशेषज्ञानं योगानुष्ठानसाध्यं। ततश्च मध्यमाधिकार्य्यस्य तत्त्वज्ञानस्य सामान्यविशेषभावेन सांख्ययोगोभयदर्शनसाध्यत्वात् तयोरैक्यमपि शास्त्रकृद्भिः परिकल्पितं। तथाच श्रीमद्भगवद्गीतादा"वेकं साङ्ख्यञ्च योगञ्च यः पश्यति स पश्यती"त्येवमुक्तं तथापि विशेषज्ञानस्य सामान्यज्ञानपूर्वकत्वादस्ति पौर्वापर्य्यानुरोधिनी

क्रमग्राह्यतैव तयोर्द्दर्शनयोरिवास्य योगेन विशेषज्ञाननिष्पादनद्वारैव मोक्षो नियस्यते इत्यतो नियमादिति यद् योगस्य विशेषप्रयोजनमुक्तं तदपि सुस्थितमेव। तथापि योगसाध्यो मोक्षनियमः कीदृश इति चेदुच्यते "प्रसंख्यानेप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिरिति" सूत्रादनन्तरस्य "ततः क्लेशकर्मनिवृत्तिरिति" सूत्रस्य भाष्ये प्रोक्तं "क्लेशकर्मनिवृत्तौ जीवन्नेव विद्वान् विमुक्तो भवति कस्माद् विपर्य्ययो भवस्य कारणं, न हि क्षीणविपर्य्ययः कश्चित् केनचित् क्वचित् जातो दृश्यत इति।

पुनरनिष्टशङ्कारहितायामेतस्यां जीवन्मुक्तावस्थायां निर्वाणापर-नामकं कैवल्यमवशिष्यते यदर्थको वेदान्तस्याधिकोपदेशः। जीव-न्मुक्तस्यैव ख्यातिवैराग्याधीनकैवल्यापेक्षापि योगेनैव ज्ञापिता। तथा च "सत्त्वपुरुषान्यथाख्यातिमात्रस्य सर्वज्ञातृत्वं सर्वभावाधिष्ठा-तृत्वञ्च" इति सूत्रादनन्तरं "तद्वैराग्यादपि दोषबीजक्षये कैवल्यमिति" योगसूत्रम्।

मैत्र्यादिचित्तपरिकर्म्म विदो विधाय
क्लेशप्रहाणमिह लब्धसबीजयोगाः।
ख्यातिञ्च सत्त्वपुरुषाण्यतयाधिगम्य
वाञ्छन्ति तामपि समाधिभृतो निरोद्धु॥

मित्येवं प्राचीनाः काव्यकर्तोऽपि ख्यातिमत एव वेदान्ताधिकारं प्राहुः।

यथा चास्मिंश्चरमाधिकारे वेदान्तात् ख्यातिवैराग्यं जायते तदप्युच्यते

विष्णोः स्वरूपात् परतोऽहितेऽन्ये
रूपे प्रधानं पुरुषश्च विप्र!

इत्येवं विष्णुपुराणादुक्तदिशा जड़वित् कारणभावेनैवाद्वयं ब्रह्म वेदान्ते प्रतिपादितं। तादृशब्रह्मज्ञानादेव हि द्रष्टृदृश्यभावनिवृत्त्या निर्व्वाणनिष्पत्तिर्भवति। तस्मात् प्रकृत्यादिकारणवादनिराकरणेन

ब्रह्मकारणवादस्य यद् व्याख्यानं साम्प्रदायिकैः प्रवर्त्तितन्तत् सुधीभिः रवश्यमेव परिहर्त्तव्यम्। सन्ति हि कारणानां तिस्रः कक्षाः, अन्वहं परमाणुः स्थूलजगतः कारणं, तदादिसूक्ष्मजगतश्च प्रकृतिः, ब्रह्म तु तस्या अपि सचिवः। सुतरां ऊर्द्ध्वाधोभावभिन्नासु कक्षासु यथायथमवस्थितानां कारणानां विरोधशङ्काऽपि न प्रवर्त्तते।

अहो! असत्यामपि प्रतिद्वन्द्वितायां कारणानामेकतमसमर्थनायैवान्यतमखण्डनलीला सर्व्वशास्त्रार्थविप्लवकरी विद्वद्भिः कथमिवाभिनन्द्यत यथाधिकारं क्रमशस्तिसृषु कक्षासु प्रविशता योगिना सर्व्वाण्येव कारणानि द्रष्टव्यानि तस्मादेतेषु हानोपादाने कथमपि न सम्भवतः।

तदेतत् सर्व्वं साङ्ख्यकृता प्रकृतिकारणतानिरूपणप्रसङ्गे सम्यगेवोक्तम्- "अधिकारत्रैविध्यान्न नियमः" इति सूत्रेण, अर्थात् ब्रह्मकारणत्वमेव सर्व्वैरङ्गीकार्य्यमिति नियमो न सम्भवत्यधिकारिणां त्रैविध्यादतः प्रकृतिकारणत्वमणुकारणत्वञ्चाधिकारभेदादङ्गीकार्य्यमिति भावः। तथा चास्य सूत्रस्य तात्पर्य्यं सुविशदमाघोष्यते, निशम्यतां महात्मभिः—

लोकैर्जगतो निदानमणुरेवापाततो दृश्यते
वस्तुत्वात् प्रकृतिर्हि तैस्तु चरमं दृश्येत तत्त्वैषिभिः।
भाव्यन्तत् परमार्थदर्शिभिरथ ब्रह्मैव शब्दादिति
त्रैविध्यादधिकारिणां न नियमस्तादतः कुत्रचित्॥

तदेवमधिकारभेदानुभवनीयेषु यथास्वकक्षं समवस्थितेषु कारणेषु प्रोच्चण्डखण्डनताण्डवलीलाभिः ऋषिवाक्यानि दलयन्तः साम्प्रदायिकाः कथं श्रद्धेयवचनाः स्युस्तथ्याभिनिवेशिनां विदुषामित्यास्तामितावदेति।

इत्थं प्रोक्तैर्वेदान्तसूत्रैः षण्णामेव दर्शनानां यदेवं प्रयोजनं सम्यगेव प्रतिपादितं तदेव साङ्ख्यदस्यापीति साङ्ख्यसूत्रेण संक्षेपादुक्तं यथा "ऊहादिभिः सिद्धिरष्टधा भवतूहादिभिरष्टभिरिति। तदर्थः सुगम एव। किन्तु प्रसिद्धतयैव सूत्रकृतानुल्लिखितान्यूहादीनि

कानोतीदानीं दुष्कालवशाद् विचिकित्सनीयानि। तथापि श्रीश्वरकृष्णकारिकैवात्र कुव्याख्याजालादुन्मुच्य पर्य्यालोचनीया यथा—

ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः।
दानञ्च सिद्धयोऽष्टौ सिद्धेः पूर्व्वोऽङ्कुशस्त्रिविधः॥ इति

कारिकोक्तापि तत्तत्संज्ञामात्रमुपदिष्टं प्रसिद्धेरेव लक्षणन्तु न कृतं। हा हन्त! सा प्रसिद्धिरिदानीमस्तमितैव कथमन्यथा व्याख्यातृभिरगृहीतत्वैर्य्यथेच्छमुपमर्द्दिता दृश्यते। सुतरां प्रोक्तवेदान्तसूत्राण्यनुसृत्यैव कारिकेदानीं गृहीतार्था क्रियततराम्।

एवमेव क्रमसम्प्राप्ता सिद्धयः क्रमेणैवात्रोपदिष्टाः परिलक्ष्यन्तेऽपि। तथाहि षड्भिर्व्वेदाङ्गैर्जनिता प्रथमा सिद्धिरूहाख्या, वेदजनिता द्वितीया शब्दाख्या ततो मीमांसाजनिता तृतीयाध्ययनाख्या, न्यायजनिता चतुर्थी परिणामविद्योताख्या, वैशेषिकजनिता पञ्चमी तापविघाताख्या, योगजनिता सप्तमी मित्रलाभाख्या, वेदान्तजनिता चाष्टमी शोधनाख्या इति सर्व्वेषामेव शास्त्राणां प्रकृतपुरुषार्थपरत्वं सर्व्वशास्त्रकृत्सम्मतमत्रापि देदीप्यते। तात्पर्य्यालोचनाऽभीष्टाऽपि समयाभाव दुपेक्ष्यते। किमु वक्तव्यं भवद्भिः पूर्णो मासोऽपि न दत्तः प्रबन्धरचनायै। तस्मात् षण्णां दर्शनानां सर्व्वेषां सामञ्जस्यं प्रसङ्गेन जोप्सितमप्यपहाय प्रस्तुतसार्थक्यमात्रं प्रदर्श्येदानीं पाशुपतादिदर्शनानामपि सार्थक्यं संक्षिप्ततरमुच्यते।

दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः;
भौतिकास्तु शतं पूर्णं सहस्रन्त्वाभिमानिकाः॥
बौद्धा दशसहस्रन्तु तिष्ठन्ति विगतज्वराः।
पूर्णं शतसहस्रन्तु तिष्ठन्त्यव्यक्तचिन्तकाः।
निर्गुणं पुरुषं प्राप्य कालसंख्या न विद्यते॥

इत्येवं वायुपुराणाद्युक्ताः सर्व्वेषामेव फलानि विभागशः प्रतिपत्तव्यानि। ततो भूतेन्द्रियाभिमानबुद्धिषु लीनाविदेहाख्याः तेषां

यथास्वं फलं सायुज्यं नाम मुक्तिराख्यायते। ये पुनरव्यक्तलीनास्ते प्रकृतिलयास्तेषां फलं सारूप्यं नाम मुक्तिरिति, चरमोक्तस्य कालसंख्याशून्यस्य निर्व्वाणस्य विवरणम् प्रागेव कृतम्!

शैववैष्णवादीनां तत्तल्लोकप्राप्तिरूपं सालोक्यं मुक्तिश्च पुराणादिषु प्रसिद्धैव। एवं फलविभागे स्थिते पाशुपतदर्शनादीनां फलं शिवसालोक्यं, पूर्णप्रज्ञादीनाञ्च विष्णुसालोक्यमनुमीयते। बौद्धानां बुद्धिसायुज्यं, जैनानां चाभिमानसायुज्यं वैदेह्यमेदस्तथा ये पुनरार्षदर्शनैकदेशिनस्तेषामपि भूतेन्द्रियाद्यन्यतमसमापत्त्या वैदेह्यमेव। किन्त्वेषां मध्ये हटवेदान्तिनां प्रकृतिलयत्वमिति विशेषस्तथाच श्रुतिः—

अन्धं तमः प्रविशन्ति येऽविद्यामुपासते।
ततो भूय इव ते तमो य उ विद्यायां रता इति॥

तत्रापि शाङ्करमतानुसारिणां पुनर्व्वैदेह्यमेव बौद्धवत्। तन्मतं प्रच्छन्न बौद्धमिति बहुवैष्णवदर्शनग्रन्थेषु बहुभिस्तान्त्रिकपौराणिकवचनैरपि समर्थितं दृश्यते। दैत्यमोहनार्थकस्य चार्व्वाकदर्शनस्य तु किञ्चिदपि फलं नास्ति उपासनादुपदेशाभावात्! "यथाभिमतध्यानाद्वेति" योगसूत्रादुपासनामात्रस्यैव सार्थक्यप्रतिपादनात् खृष्टयवनादीनामपुपासनाविशेषात् फलविशेषोऽस्तीति ध्रुवमनुमातव्यमेवञ्च सर्व्वकर्म्मविमुखो भोगाभिमुखो नास्तिको नरकं व्रजतीत्यपि निःसंशयमेव पतनस्य नैसर्गिकत्वादुन्नति-शान्त्योश्च कर्म्मज्ञानसाध्यत्वादिति संक्षेपेण सर्व्वाः पुरुषगतयः प्रदर्शिताः।

इत्थम् आस्तिक दर्शनानां यथाकथञ्चित्पुरुषार्थपरतयैकमत्यं नास्तिकदर्शनादेव तद्वैमत्यञ्च चतुर्थप्रश्नस्योत्तरसारमपि मया प्रसङ्गेन प्रकाशितम्। तथा न्यायवैशेषिकयोर्मोक्षश्रवणमोचारम्भण-रूपार्थवत्त्वस्यैव तत्तत्त्वसारतया षष्ठप्रश्नस्याप्युत्तरं विवृतप्रायमेव!

58　1

केवलं समयाल्पतयैव प्रबन्धवितयं नारब्धं, वस्तुतोऽपि हि चतुर्थ-पञ्चमषष्ठानां प्रश्नानामुत्तरम्यैकगवेषणाविषयत्वात् सर्व्वदर्शनसार्थक्या-नीत्यैवमेकप्रश्नेनैव भवितव्यमासीत्। गच्छतु तदिदानीं भवताम-न्तिके सविनयमिदं प्रार्थनं यदेतस्य पञ्चमप्रश्नोत्तरप्रबन्धस्य प्रचार-वाहुल्यं क्रियतामिति, तत् कुत इति नानुयोक्तव्यं बहवो हि सुधिय इदानीमार्षवाक्यसामञ्जस्यमेवाभिनिविशन्ते तत्र कैश्चिदार्षदर्शनानां प्रस्थानवाहुल्यं कक्षीकृतमित्यपि श्रूयते ततश्च मदुक्तदिशा तैस्तदवश्य मुच्छिद्येत नितरा मत्याशा महती मे स्फुरति। भवद्भिः—स्वाधीन ज्ञानाधीनशास्त्रार्थपर्य्यालोचनायां नियुक्तेन मया य एष पञ्चम प्रश्नोत्तर प्रवन्धो विरचितः, तत्रार्षविरोधि विविधसम्प्रदायविगानात् केषाञ्चिद् यथोपलब्धनिष्ठानां सम्भाव्यमानः प्रकोपो मास्त्विति चान्तिमं मे प्रार्थनमिति।

परार्थं येऽपार्था अपि परमिहामुत्र सुखयो
स्तथैवाधिव्याधिप्रभृति भूतदुःख प्रतिहृतेः।
उपायान् विज्ञानैकप्रदिदिशुरज्ञान शमनैः
ऋषिभ्यस्तेभ्यो मे प्रणतिरियमास्तां शिवकरी।

(समाप्तम्)

## दुर्गेशनन्दिनी।

लेखक —श्री.........

### एकविंशतितमः परिच्छेदः।

### "स्वप्नसाफल्यम्"

रोगशय्याविलग्ना पितृहीना अनाथा बाला। जगत्सिंहश्च वर्त्तते तस्याः शयनपार्श्वे। दिवसो गच्छति, रात्रिरेति, पुनरपि गच्छति दिनं, समागच्छति निशा। राजपुतकुलावतंसः शुश्रूषते

तामासीनो भग्नपर्यङ्कस्य पार्श्वदेशे, अनुतिष्ठति साहायकं तस्या दीनाया निःशब्दाया विधवायाः कार्य्यजातस्य। आधिक्षीणा दुःखिनी सा बाला तं प्रति दृष्टिं व्यापारयति वा न वा; तस्याः शिशिरनिपीड़िते वदनपङ्कजे आगच्छति वा न वा तत् पूर्व्वं स्मितम्, इत्येव द्रष्टुकामः स विलोकयति तस्या मुखं प्रति।

कुत्र वा शिविरः? कुत्र वा तस्य सेना? शिविरभङ्गं विधाय सेना तावत् पाटलिपुत्रमभिप्रस्थिता। कुत्र तस्यानुचराः? दारुकेश्वरतटे प्रतीक्षन्ते ते प्रभोरागमनम्। कुत्र वा तेषां प्रभुः? स उत्फुल्लयति नयनवारिसेचनेन प्रबलातपविशोषितां कुसुमकलिकाम्।

कुसुमकलिका क्रमशः पुनरुत्फुल्ला जाता। संसारेऽस्मिन् स्नेह एव प्रधान ऐन्द्रजालिकः। व्याधिप्रशमने प्रणय एव प्रधानम् औषधम्। नोचेत् को नाम प्रभवति हृदयव्याधिमुपशमयितुम्? यथा निर्व्वाणप्रायः प्रदीपः तैलविन्दुसञ्चारेण पुनरपि शनैः शनैः प्रज्वलति, यथा निदाघशुष्का वल्लरी आषाढ़स्य नववारिसेचनेन पुनरपि विकसिता, जगत्सिंहमासाद्य तिलोत्तमा तथा अनुदिनं पुनर्जीवितमिव प्राप्तवती।

क्रमशो बलमासाद्य सा पर्य्यङ्कोपरि उपवेशनसमर्था बभूव। विमलायामसन्निहितायां उभौ सहासीनौ बहुदिवसीयानि मनोगतानि वक्तुमशक्नुताम्। कृताः कति न स कथाः, चाल्लाः कति नाम मानसापराधाः, उक्तास्च कति नाम मर्म्मसि उदिता मनसि एव लीना आशाः, कथितास्च ये नाम मनोमोहनाः स्वप्नाः दृष्टाः जागरणे निद्रायां वा। एकदा विवृतः तया रोगशयनगतया विचेतनया दृष्टः स्वप्नः।

नववसन्तश्रीविराजिते कस्मिंश्चित् क्षुद्रशैले क्रीड़ति सा कुसुमराजिभिर्नवकुमारेण सह। राशीकृतानि वासन्तपुष्पाणि सङ्कल्य ग्रथिता मालिकाः! परिहिता काचित् माला स्वकण्ठे अपरा च जगत्सिंहस्य गलदेशे स्थापिता। छिन्ना सा माला तस्य कटिस्थितस्य

असेः संस्पर्शेण। "न पुनस्तव ददामि मालां कण्ठदेशे, चरणौ तु निगड़ेन बध्नामि" इत्युक्त्वा रचितस्तया कुसुमनिगड़ः। निगड़ेन बन्धुमुद्यतायां तस्यां नवकुमारोऽपससार। तिलोत्तमापि तमनुजगाम। जगत्सिंहो वेगेन पर्व्वतात् अवततार। तीर्णस्तेन पथि कश्चित् क्षीणो निर्झरः उत्पतनेन। बाला तिलोत्तमा न शशाक उत्पत्य तरितुम्। यत्र निर्झरः सङ्कीर्णतां गतस्तत्रैव तरिष्यति इत्याशया निर्झरतटे परिधाव्य सा अवतरणरता बभूव। दूरमास्तां निर्झरस्य सङ्कीर्णता। यथा यथा सा गच्छति तथा तथा निर्झरः विस्तृतिमेव भजते। क्रमेण निर्झरः क्षुद्रनदीत्वं गतः। क्षुद्रा नदी क्रमेण महानदीत्वं गता। न तावत् दृश्यते जगत्सिंहः। समुच्चा बन्धुरा च तटभूमिः। अहो न शक्यते तत्र पद्भ्यां गन्तुम्। तत्र च पुनः चरणतलस्था तटभूमिः खण्डशः सशब्दं नदीगर्भे पतति। अथश्च प्रचण्डो भीषणो जलावर्त्तः। तिलोत्तमा पर्व्वतं पुनरारुह्य नदीग्रासात् पलायितुमचेष्टत। पन्थाश्च बन्धुरः। न चलति चरणः। सा उच्चैः आक्रन्दत्। सहसा कालमूर्त्तिः कतलुखानः पुनः सञ्जीवितः सन् तस्याः पन्थानं रुरोध। कण्ठस्य पुष्पमाला सहसा गुरुभारं लौहशृङ्खलत्वं प्रापः। कुसुमनिगड़ो हस्तच्युतो स्वचरणे एव पपात। सपदि च लौहनिगड़तां प्राप्य चरणौ बबन्ध। सहसा अङ्गं स्तब्धतां गतम्। तदा कतलुखानः तस्या गलदेशं अवलम्ब्य घूर्णयन् तां नदीगर्भे निचिक्षेप।

स्वप्नकथां समाप्य तिलोत्तमा साश्रुनयना अवादीत्। युवराज, नैष निष्फलः स्वप्नः। त्वदर्थं रचितः कुसुमनिगड़ो मन्ये सत्यमेव स्वचरणयोः लौहनिगड़त्वं गतः।

युवराजस्तदा विहस्य कटिस्थितं असिं तिलोत्तमापादतले संस्थाप्य अवदत्—तिलोत्तमे, तवाग्रतः सञ्जातोऽहम् असिविहीनः। पुनरपि मालिकां प्रयच्छ मे। असिरयं तव पुरत एव द्विधा क्रियते।

तिलोत्तमां निरुत्तरां समवलोक्य राजपुत्रः समभाषत तिलोत्तमे, न क्रियते मया उपहासः। तिलोत्तमा लज्जया अधोमुखी तस्थौ। तस्मिन् दिवसे प्रदोषकाले अभिरामस्वामी कक्षान्तरे समासीनः प्रदीपालोके पुस्तकपठनव्यापृतस्तस्थौ। राजपुत्रस्तत्र गत्वा सविनयमवादीत्—महात्मन्, निवेद्यते मया किञ्चित्। तिलोत्तमाधुना स्थानान्तरगमनक्लेशम् सहितुं समर्था। किमनेन भग्नगृहवासक्लेशेन श्वो यदि शुभो न भवति दिवसस्तदा मन्दारणदुर्गं नीयतामेषा। यदि पुनर्भवतां न भवत्यनभिमतं तदा अम्बरवंशे दौहित्रीं प्रदाय कृतार्थी क्रियताम एष जनः।

अभिरामस्वामी पुस्तकं परित्यज्य समुत्थाय गाढ़ं सस्वजे राजपुत्रम्। न तावत् लक्षितं तेन पुस्तकोपरि पदं निधाय स तदा स्थित इति।

विमला आसमानी च मनोभावं परिज्ञाय शनैः शनैरनुजग्मतुः स्वामिसकाशमागच्छन्तं राजकुमारम्। श्रुतं ताभ्यां सर्वमेव गृहाद्बहिस्तिष्ठन्तीभ्याम्। राजपुत्रो गृहान्निष्क्रम्य ददर्श सहसा पूर्वभावप्राप्ताम् विमलाम्। निरन्तरं विहसन्ती सा आसमान्याः केशकलापं छिनत्ति, प्रहरति च ताम। आसमानी प्रहारं तृणाय मत्वा विमलासकाशे नृत्यपरीक्षां ददाति। राजपुत्रः एकेन पार्श्वेन अपससार।

---

## द्वाविंशतितमः परिच्छेदः
### समाप्तिः

विकसितं कुसुमम्। मन्दारणदुर्गं गत्वा अभिरामस्वामी माड़म्बरं जयत्सिंहाय दौहित्रीं सम्प्रददे।

परिणयोत्सवे जगत्सिंहेन सहचराः जाहानाबादात् निमन्त्र्य आनीताः। तिलोत्तमायाः पितृबान्धवाः अपि अनेके आहूताः समागत्य अमोदन्त।

58 2

आयेषाया प्रार्थनानुसारेण प्रेषितोऽयं सन्देशस्तत्सकाशेऽपि। आयेषापि पौरजनपरिवृता किशोरवयस्केन स्वसहोदरेण सह समागता।

यवनकन्यापि आयेषा तिलोत्तमाया जगत्सिंहस्य च स्नेहाधिक्यात् ससखीजना दुर्गान्तःपुरमेव निवेशिता बभूव। पाठक, किं मन्यते भवता न तावत् विवाहोत्सवनिरता बभूव तापितहृदया आयेषा इति? नैतत् सत्यम। आयेषा सहर्षा चित्तस्य प्रफुल्लतया सर्व्वानेव प्रफुल्लितवती। विकम्पितशारदसरसीरुहमन्दान्दोलनेन इव मधुर-स्मितेन सर्व्वत्रैव श्रियं ततान।

निशीथे विवाहकार्य्यं समाप्तिं गतम्। आयेषापि तदा तदीय सहचरीभिः प्रत्यावर्त्तनोद्युक्ता बभूव। सहास्यं विमलामापृच्छत। अज्ञातवृत्तान्ता विमला सस्मितमवादीत्—नवावकन्ये वयमपि पुनर्भवत्या शुभोद्वाहे निमन्त्रिताः स्याम।

विमलायाः सकाशादागत्य आयेषा तिलोत्तमामाहूय कस्मिंश्चित् निभृते कक्षे आनीतवती। तत्करमवलम्ब्य च प्रोवाच—भगिनि, गम्यते मया। कायेन, मनसा वाचा च आशिषं ते प्रयच्छामि—त्वमक्षयेण सुखेन कालं यापय इति।

तिलोत्तमा पप्रच्छ—पुनरपि कदा भवतीं द्रक्ष्यामि?

आयेषा प्रत्यभाषत—कथं नाम पुनर्दर्शनाशा क्रियते मया।

तिलोत्तमा विषादं गता। उभे एव नीरवतां भेजतुः।

क्षणान्तरे आयेषा प्रोवाच—दर्शनं पुनर्भवतु वा न वा, न तावत् विस्मर्य्यतामायेषा।

तिलोत्तमा विहस्यावादीत्—आयेषां विस्मृतायाः मे मुखं न निरीक्षिष्यते राजकुमारः।

आयेषा धीरमुवाच—नाहं तुष्यामि अनेन वचनेन। न त्वं कदापि युवराजसमीपे मद्विषयकं वाक्यमुत्थापय। ऊररी क्रियतामेतत्।

परिज्ञातमायेषया जगत्सिंहस्यार्थे आयेषया सर्वसुखं परित्यक्तमिति तु जगत्सिंहस्य हृदये शल्यमिव विद्धं तिष्ठति। आयेषाप्रसङ्गमात्रमपि तस्य अनुतापकरं भवेदिति।

उररीकृतमेतत्तिलोत्तमया। आयेषा पुनरुवाच—अथापि न विस्मर्तव्योऽयं जनः। यच्च चिह्नं प्रदीयते स्मरणार्थं तत् मा तावत् प्रत्याख्यायताम्।

एवमुक्त्वा दासीमाहूय आदिदेश। दासी आज्ञानुसारेण गजदन्तविनिर्म्मितमञ्जूषामध्यस्थं रत्नालङ्कारजातम् आनिनाय। आयेषा दासीं विसृज्य तदलङ्कारजातं स्वहस्तेनैव तिलोत्तमां परिधापयामास।

राजकन्यापि तिलोत्तमा तेषामलङ्काराणाम् अद्भुतशिल्पकौशलं तन्मध्यवर्त्तिनां हीरकादिरत्नराजीनां असामान्यां समुज्ज्वलदीप्तिं विलोक्य विस्मिता बभूव। आयेषा पितृप्रदत्तानि निजाङ्गभूषणानि विलोप्य तिलोत्तमायाः कृते कारयामास अनन्यदुर्लभान्येतानि रत्नभूषणानि। तिलोत्तमायामेतेषां प्रशंसां ख्यापयन्त्यामायेषा प्रोवाच—भगिनि मा तावत् प्रशस्यन्तामेतानि। त्वयाद्य परिहितं यद्रत्नं हृदयमध्ये न खलु एतानि सदृशानि तस्य चरणरेणोरपि।

एवं वदन्ती आयेषा महता क्लेशेन नयनजलं संवृतवती। तिलोत्तमा किञ्चिदपि ज्ञातुं न शशाक।

समाप्ते अलङ्कारसन्निवेशे आयेषा तिलोत्तमाया हस्तद्वयं विधृत्य मुखं प्रति दृष्टिं व्यापारयामास। मनसि च चिन्तयामास ईदृशं सरलं प्रेमप्रतिमं मुखं निरीक्ष्य मन्ये प्राणेशः कदापि न प्राप्स्यति मनःपीड़ाम्। यथा विधातुरन्यादृशी इच्छा न जाता, तथा तच्चरणे एषा मे भिक्षा, अनया एव तस्य चिरसुखं सम्पादयेदिति।

तिलोत्तमां प्रोवाच च तिलोत्तमे, गम्यते मया। तव स्वामी कार्य्यव्यापृतो भवत्—अतो न तावत् तदामन्त्रणार्थं क्रियते कालहरणम्। जगदीश्वरो वः दीर्घायुषौ विदध्यात्। परिधातव्यानि

अङ्गेषु मया प्रदत्तानि रत्नानि। अन्यच्च—मम—तव रत्नमेतं स्थापयितव्यं हृदयमध्ये ।

तव रत्नत्रेष्ठमिति वदन्त्यास्तस्याः सञ्जातः कण्ठरोधः । तिलोत्तमा ददर्श आयेषाया नयनपल्लवे जलभारस्तम्भिते कम्पेते इति ।

तिलोत्तमा समदुःखा इव पप्रच्छ—कथं नाम रुद्यते त्वया ? सपदि आयेषायाः नयनवारिस्रोतो निरन्तरमवहत् ।

आयेषा पुनः पलार्द्धमपि अविलम्बा द्रुतं गृहं परित्यज्य शिविकामारुरोह ।

आवासगृहमुपगताया आयेषाया रात्रि र्न प्रभाता । आयेषा वेशं परित्यज्य शीतलपवनपथे कत्तवातायने तस्थौ । तस्याः परित्यक्तवसनाधिककोमले सुनीले गगनमण्डलमध्ये लत्तं तारकाः जाज्वलन्ते । मृदुपवनतरङ्गेण अन्धकारस्थानात् वृत्ताणां पत्राणि मुखरितानि । दुर्गशिखरे पेचको गम्भीरं निनदति । पुरतो दुर्गप्राकारमूले, यत्र आयेषा तिष्ठति तत्रैव अधः, जलपूर्णा दुर्गपरिखा नीरवं आकाशपटप्रतिबिम्बं विधृत्य वर्त्तते ।

आयेषा वातायनासीना सुचिरं चिन्तयामास । अङ्गुलीतोऽङ्गुरीयकं गरलाधारं उन्मोचयामास । एकदा मनसा वितर्कयति निवारयितुं शक्नोम्यहं सर्व्वां तृष्णां एतद्गरलपानेन । अन्यदा पुनर्विमृशति—किम् एतदर्थमेव प्रेषिताहं विधात्रास्मिन् संसारे ? कथं मया गृहीतं नारीजन्म, न चेत् सोढुं, समर्थाहम् एतां पीड़ाम् ? किमथवा श्रुत्वैतत् जगत्सिंहः कथयिष्यति ?

पुनरपि अङ्गुरीयम् अङ्गुलौ संनद्धम् । भूयोपि किमपि विमृश्य अपनीतम् ।

विममर्श च – दु संवार एष लोभो रमणीभिः ।
एवक्रमा आयेषा गरलाधारं तदङ्गुरीयकं दुर्गपरिखासलिले निचिक्षेप ।

---

(समाप्ता)

# नलदमयन्तीयम्

लेखक:—श्री

विदू—साधु वयस्य साधु, कोऽन्यस्त्वामन्तरेण मन्दारकस्य सुखं दु:खञ्च जानीते ? तदिदानीं काननविहारो मे महते सुखाय कल्पते, एहि तावत् पारिजातकुञ्जमञ्जुलतरं विकसितवञ्जुलरसालकुरुवक-गन्धराजवकुलपादपैरुपशोभितं मालतीमल्लिकामाधवीवल्लीममलङ्कृ-तोपकण्ठं मलयमारुतोल्लासितप्रसूनसौरभं विलासोद्यानम् इदमभितो विहृत्य मानसं परितर्पयाव: । (परिक्रामत:)

राजा—वयस्य, मन्दारक, जानास्येव मे हृदयावस्थां, सम्प्रति मम हि—

वहिरेव कुसुमसुषमा हृदयं तिमिरै: समाच्छन्नम् ।
क्षितिधरगह्वरगेहं लग्ने वहिरातपे यद्वत् ॥

तदनेन वनविहारेण प्रतिक्षणप्ररूढ़प्रियास्मृतिरनीशोऽस्मि सुखमखण्ड-मुपभोक्तुम् । क्षणे क्षणे समुदेति मानसे सैव मे मनोरथभूमि: । तथाहि मन्ये—

सुषमा कुसुमनिरूढ़ा यदि दयिता सा भवेदस्मिन् ।
काञ्चनमिव मणिवद्धं वनमिदमद्धा कमनीयम् ॥

वयस्य, किंवा वहुलमावेदयामि—

विना तल्लावण्यं वितथ इव वल्लीसमुदयो
विना तस्या: स्पर्शं कुसुममपि नो मार्दवकजनु: ;
अलं वा पुष्पाणां ललितरचना पादपतले,
न चेत् पद्मं नीरे कथमिव तदीयस्तुतिकथा ॥

विदू—भो वयस्य, किमिति अदृष्टैव तत्रभवतीं विदर्भराज-नन्दिनीम् एवं विमुग्धोऽसि ? अहन्तु कुमारसदृशाकारे भवति दर्शनोत्तरमेव परं स्नेहं विन्दे, तत् कीदृशोऽयं ते मोहमहिमा ?

राजा—वयस्य, मा मैवम्, कुत: ?

चित्रे पुरा चतुरचित्रकरोपनीता
सा चित्ततस्कररुचिः प्रविलोकिता मे।
तस्मात् परं मनसि कल्पनया प्रणीय
तन्मूर्त्तिमस्मि सुतरां परिमोहितात्मा॥

विदू—वयस्य, नेदं न जानामि, तथापि कथयामि नास्ति ते परमार्थविवेक इति।

राजा—वयस्य, कथमिव?

विदू—अपि नेदं जानाति भवान्, यथा चतुरचित्रकारिणो रमणीयतामतिमात्रमुद्भावयितुकामा अनुकार्य्यं सौन्दर्य्यं परिवर्त्त्य चित्रे प्रदर्शयन्ति, तदत्रापि न तथा प्रस्तुतमिति को वा ब्रूयात्?

राजा—वयस्य, मन्दारक! न परमार्थं जानासि, कुतः?

नैपुण्यं यावदेवास्तु शिल्पिनां शिल्पकर्म्मसु।
अनुकार्य्यस्य लावण्यान्निकृष्टानुकृतिस्थिरम्॥

विदू—राजासनमध्यासीनानां चित्तवृत्तिरेवं दर्शिनी, अस्माकन्तु दीनब्राह्मणानां नैवं प्रतिभाति।

राजा—वयस्य, कथं वा न प्रतिभायात्? तथाहि पश्य—

अभिनयकुशलानामुत्तमानां नटानाम्
अपि बहुविधभावाभासदानव्रतानाम्।
अविकलमनुकार्य्यावस्थया नो विधानम्,
स्वहृदयपरिबोधस्तत्र तु स्यात् प्रमाणम्॥

विदू—यद्येवं तदा वञ्चितोऽसि नूनं निपुणतमानां शैलूषाणामभिनयदर्शनव्यापारेण, तथाहि श्रूयताम्—लोके प्रायेण प्रतिदिनमुपजायमानमेव दृश्येषु निपुणनटैरभिनीयमानं रसान्तरमुत्पादयतीति।

राजा—वयस्य, यद्यपि तथा तर्कप्रसादलब्धजन्मना निश्चयेन चित्रलेखापेक्षया विदर्भनन्दिनी निकृष्टैव स्यात्, तथापि विपुलायामस्यां

वसुन्धरायां अनेन चित्रलेखेन यैव सुमदृशी, सैव मे मनोरथभूमिः, कथमिति ?

आदौ दृष्टा चित्रशिल्पे मया या,
सैवाभून्मे रागपात्रं महोयः।
सा चेद् मैमी तत्र मे चित्तरागः,
सा चेदन्या तत्र मे चित्तरागः॥

विदू—उन्मत्त, नेदृशं लावण्यं विधातुः शिल्पं स्यात्।

राजा—वयस्य, महति भ्रमान्धकारे पतितोऽसि, तथाहि पश्य—

यो धाता नलिनीदलानि तनुते वासन्तवापीजले,
यो वा चान्द्रमसीं रुचिं रचयते पर्व्वण्यपूर्व्वात्मिकाम्।
यो वा नूतनपल्लवेषु कुरुते दिव्यप्रसूनस्रजं,
सोऽयं तादृशरूपसाधनविधौ किं नो समर्थायताम्॥

अपिच—

अंशतो लक्षिता विद्या वालकानां परीक्षणे।
सर्व्वविद्यासमुत्कर्षमनुमापयते ध्रुवम्॥

विदू-(मुखभङ्गीं नाटयन्) हुम्! सर्व्वविद्यासमुत्कर्षमनुमापयते ध्रुवम्! अथ भवन्तं पृच्छामि, यदि एकदेशदर्शनेन वस्तूनां सर्व्वविज्ञानमङ्गीकरोषि, तदा मम इमां भुजङ्गकुटिलां यष्टिमपि सरलामवेहि।

राजा—कथमिव ?

विदू—यतस्तावत् अस्या अपि पाददेशात् प्रभृति चतुरङ्गुलं स्थानं सारल्ये न तवैव हृदयमनुकुरुते।

राजा—वयस्य, वृथैव मे चित्तवृत्तिं तर्केण पराभवितुमीहसे,

कुतः— दिङ्मोहस्तर्कयुक्तिभ्यां नापक्रमति चेतसः।
अपरोक्षपरिज्ञानं यावन्नोदेति देहिनाम्॥

विदू—(स्वगतम्) अहो अस्य निर्व्वन्धः! तावतापि प्रयत्नेन न शक्यते मानसमस्य परिवर्त्तयितुम्, तत् किमिदानीं करिष्ये? भवतु अन्यतः सञ्चारयामि। (प्रकाशम्) भो वयस्य, अनार्य्याः खल्वमी पादपाः, ये चित्तनिर्वृतिमुपपादयितुं भवता समाश्रिता अपि सुतरामनिर्वृतिमिव भवतः समुपदिशन्ति, तदेहि यावत् इमाननार्य्यानपहाय मलयानिलनर्त्त्यमानतरङ्गसम्पातमधुरस्य तीरतरुस्खलितप्रसूनरसबिन्दु-चन्द्रकालङ्कृततटोपान्तसलिलस्य धवलमरालमालासञ्चरणजटिलस्य दाड़िमसरोवरस्य मणिमयसोपानिकायामुपविश्य शीतलमलयानिलेन शरीरं मानसञ्च परितर्पयावः।

राजा—वयस्य, किमिति मुधैव पादपानधिक्षिपसि? अनपराधाः खल्वमी प्रकृते वृत्ते, तथाहि दुःसाध्येन आमयेन परिपीड़िते यदि नोपकुर्व्वन्ति भेषजानि तत्र को वापराधो भेषजानाम्, वयस्य, मन्ये सम्प्रति सर्व्वार्थनिष्पादनसमर्थः कल्पवृक्षोऽपि नितरामल्पायते मे मनोवेदनामपनेतुम्। तदलमेतानुपालभ्य, कुतः?

पुष्पोपहारपरिशोभितकुञ्जपुञ्जे
छायातरुप्रकरशोभिवनोपकण्ठे।
सङ्गत्य काममपि मदं पुरतः प्रपन्नः,
सत्यं मदीयदुरितेन विपर्य्ययोऽद्य॥

विदू—(साधिक्षेपम्) कथं वा नोपालभेय? यतो मूढ़ाः खल्वमी महीरुहा न जानन्ति बहुमानं महीपतीनाम्। येन किल एवमेतानपेक्षमाणेऽपि सकलापेक्षणीये भवति निरपेक्षा एव समुपलक्ष्यन्ते, तद् वयस्य, क्षणं प्रतिपालयस्व, यावदेताननतिमूढ़ान् बहुग्रन्थिकठोरेण तैलाभ्यङ्गगृहीतसारेण कुटिलकुटिलेन दण्डेन समुद्बोधयामि।

(आहन्तुमुपगच्छति)

राजा (निरुध्य) वयस्य, मा मैवम्, नैते भाजनमाक्रोशस्य येन बहिश्चेतनेष्वेव आक्रोशः फलं प्रसूते, नान्तश्चेतनेषु।

विदू—तदास्ताम्, एहि सम्प्रति मणिसोपानिकामाश्रयाव:।

राजा—एवं भवतु (परिक्रम्य उभौ मणिसोपानिकायामुपविशत:)

विदू—भो वयस्य, पश्य पश्य अमीषां तरङ्गाणां विनयवर्त्तिताम्, एते हि सुदुर्लभदर्शनं त्वां मणिसोपानिकायामुपलभ्य पादक्षालनमिव कारयितुकामा: पादोपकण्ठमुपसर्पन्ति, तदितोऽप्यधस्तादवतीर्य्य परिपूरय मनोरथं तरङ्गबान्धवानाम्। (राजानं करे गृहीत्वा अवतारयति)

राजा—वयस्य, मनोज्ञेयं सौन्दर्य्यपरम्परा तरलतरङ्गसञ्चारिण्या वापिकाया:, तथाहि

मृदुलपवनयोगाद् भग्नकार्यैस्तरङ्गै:
सुललितसलिलेयं वापिका सम्पतन्ती।
प्रणयरुचिरचेता नायिकेव प्रसन्ना
दवयितुमुपतापं यत्नसीमां दधाति॥

विदू भो वयस्य, इतोऽपि पश्यतु भवान् मलयानिलसञ्चालितायां कमलदयितायां दशाविशेषं मधुव्रतस्य।

राजा—वयस्य, एवं पश्यामि, शोच्यस्तावदयं मधुव्रतस्तपस्वी, महतीमिव दुरवस्थामनुभवति, तथाहि

पातुं मधूनि विपुलं विदधत् प्रयत्नं
भृङ्गो यदैव परिसर्पति पङ्कजिन्याम्।
हा हा तदैव च समीरसमीरिताङ्ग:
शून्ये समुत्पतति लूनमनोऽभिलाष:॥

विदू—भो:! अधमस्तावदेष धूर्त्तमधुव्रत:, येन एवमसकृत् प्रतिषिध्यमानोऽपि एनामेव अनुवर्त्तमानो दृश्यते, तदुच्यतामेष धृष्ट:, अलमस्या: पुनरनुवर्त्तनेनेति।

राजा-वयस्य मन्दारक, न कदापि परिप्राप्तोऽसि तथा रागगोचरतां, येनैवमभिधत्से, पश्य,

प्रणयो विदितनिषेधो द्विगुणीकुरुते मनोभावम।
अचलनिरुद्धस्रोतास्तरङ्गिणी तीव्रतां धत्ते॥

विदू-(स्वगतम) अये अनेन वृत्तान्तेन समुपचिता आत्मापि प्रियवयस्येन। तद् भवतु एवं तावत्। (प्रकाशं) भोः वयस्य, किमिति पदे पदे तामेव अविदितगुणविशेषां अधिकृत्य आत्मानं खेदयसि? परिह्रीयतामेष दुरन्तो भावानुबन्धः, दृश्यन्तामेतानि मृदुलभुजलताललितानि तरङ्गितवापीसलिलानि, घनचन्दनगन्धबन्धुराणि मन्दसमीरणस्पन्दनानि, मदनगीतिकापर्य्याकुलेन मधुकरपटलेन असकृदनुवध्यमानानि विकचसरसीरुहाणि, आतपत्रानुकारिकमलदलान्तरालगतानि मनोहराणि च विलसन्ति चक्रवाकमिथुनानि।

राजा-वयस्य, मन्दारक, किमेतानि मया न दृश्यन्ते? एतान्येव साभिनिवेशं दृश्यमानानि जीवनं मे धारयन्ति, कुतः?

वीचिश्रेण्यां ननु भुजलतामाहवं मे प्रियायाः,
पद्मोत्सङ्गे करचरणयोः सौष्ठवं सन्निधत्ते।
शैवालेषु स्फुरति मसृणा केशपाशस्य शोभा,
हंसे सौम्यस्मितसुभगता पद्मवन्धे च गन्धः॥

विदू-(स्वगतम्) यथा हि कुक्कुरविषवेगपर्य्याकुलः सर्व्वं कुक्कुरमयं पश्यति, तथैव एष दमयन्तीपर्य्याकुलो जगदेव तन्मयं पश्यति, तत् किमत्र प्रतिविधेयम्?

वातः पद्मदलानि संविघटयन् प्राणप्रियादूतवत्
पद्मिन्या हृदयस्य वृत्तिनिवहं वक्तीव मामञ्जसा।
क्रीड़ाकौतुकिनीव चञ्चलजला वापी प्रियं मारुतं
सिञ्चन्ती जलशीकरैः प्रियकथास्तोमानिवोत्कण्ठते॥

विदू-भो वयस्य, यदि केवलं प्रतिपदं तामेव स्मरन् विलम्बं नाटयेथास्तदा नाहं ते सहचरो भवितुमर्हामि, (मुखं परावर्त्त्य निपुण-

मन्यतो दृष्ट्वा) भो वयस्य, येयं मरालमालापर्य्याकुला नातिदूरवर्त्तिनी नीरोपान्तभूमिः तत्र दृष्टिं देहि।

राजा—किं निमित्तम्? (दृष्टिं ददाति)

विदू—तस्या एव भूमेरुपरिष्टात् सुविशुद्धकाञ्चनप्रायं किमपि दृश्यते, अदृष्टपूर्व्वमिदं, तत् किन्नु खलु स्यात्? अपि भवतैव मानस-सरोवरशोभामतिशययितुकामेन केनापि निपुणशिल्पिना काञ्चनमयशत-पत्रं कारितम्?

राजा—नहि नहि अहमपि भवानिव साम्प्रतमेव प्रथमदर्शी।

विदू—तत् केनानेन वस्तुना भवितव्यम्!

राजा—(आलोकयम्) वयस्य, अहं हि जानामि

या माधवी श्रोस्त्रिदिवे विहृत्य,
मन्दाकिनीकाञ्चनपद्महस्ता।
समेत्य वापीसलिले निलीना
तदीयपाणिस्खलितं किलैतत्॥

अथवा— आवर्त्तानिलचालिता कमलिनी किञ्जल्कमालाघना,
मन्दस्पन्दितरङ्गसङ्गतिवशात्तीरोपकण्ठं गता।
प्राचुर्य्यात् परिपिण्डिताङ्गरचना स्वर्णायमानद्युतिः,
तद्भागादिव हंसपङ्क्तिरमला तत्पार्श्वतो राजते॥

विदू—यथा तथा भवतु, यावत् समीपमुपसृत्य विगतशङ्को भवावः

राजा—एवं क्रियताम् (उभौ सोपानादवतीर्य्य पश्यतः) वयस्य, अपि पश्यसि?

विदू—अथकिम्। (निपुणं निरूप्य सहर्षम्) भो वयस्य, दिष्ट्या वर्द्धसे, एष नूनं काञ्चनखनिसम्भूतः काञ्चनशैलाङ्कुरः प्रादुर्भवति, तदत्र वयस्यः प्रमाणम्।

राजा—(स्मितं कृत्वा) वयस्य, तत्त्वविमुग्धो भवानन्यथैव कल्पयते, नायं काञ्चनशैलाङ्कुरः, परं कश्चन काञ्चनमयो मरालयुवा मलयानिल-

सम्पर्करम्ये तीरोपकण्ठे गाढ़ं निद्रासुखमुपभुङ्क्ते। तथाहि

परांङ्मुखं मस्तकमात्मदेहे,
प्रविश्य सङ्कोचितकीर्णपक्षः।
एकं पदं कुक्षिगतं दधानः,
सन्दृश्यते नूनमसौ विहङ्गः॥

विदू—कथमयं सचेतनो जीवः? मम तावदयं अचेतनः पिण्डभूतः प्रतिभाति। तत् किमत्र प्रमाणमनुसन्धत्से।

राजा—वयस्य, पश्य प्रमाणं—एतस्य खलु

उच्छ्वासनिश्वासवशाच्छरीरे,
प्रसारणाकुञ्चनयोः प्रकाशः।
प्रभञ्जनोत्पातवशात् कदाचित्,
शीर्षे पदे पक्षयुगे च कम्पः॥

विदू—वयस्य, यद्येवं तदा अपूर्व्वमिदं प्रमोदस्थानं, नहि तावन्मात्रेण तृप्तिं जनयति, तद् गच्छ विन्दैनं नेत्रसुखलाभाय।

राजा—करेण गृहीतो यदि कष्टातिशयमयं गच्छेत्, तदा महत् पातकं सम्पद्येत।

विदू...किमेतन्मात्रेण परमानन्दो वर्जयितव्यः, स्वर्गमहिम्न प्राणिहिंसनमिव नेत्रहृदये मरालस्य स्वल्पमात्रं संयमनकष्टमुपेक्षणीयमस्माभिः।

राजा...भवतु यावदेनं शिथिलपाणिस्पर्शेन ग्रहीष्यामि, यथास्य गृहीतस्य न शरीरपीड़ा भवेत्।

विदू...का हानिः, यथा कथञ्चन कार्य्यसिद्धिरावश्यको नाम। तद् गच्छ, अलं विलम्बेन।

राजा...वाढ़ं, एष गच्छामि। (गच्छन् दक्षिणवाहुलोचनयोः स्पन्दं सूचयन्) अये! किमिदम्!

वामेतरभुजस्पन्दः स्फुरितं दक्षचक्षुषः।
किमकाण्डे द्वयं प्राप्तं फलसम्भावना कुतः?

## सन्देशाः

**मासिकाधिवेशनं सम्पादकाभिनन्दनं च** विगत-सौरचैत्रस्य चतुर्विंशे वासरे सायं कलिकाताराजकीयसंस्कृत-विद्यामन्दिराध्यक्षपादानां श्रीमतामादित्यनाथमुखोपाध्यायदर्शन-सागर एम्, ए, पि, एच, डि महोदयानाम् आध्यक्ष्येण समपादि परिषदश्चैत्रमासिकं साधारणमधिवेशनम्। तत्र सभापतिवरण-पूर्व्वसभाविवरणवाचन — नवीनसदस्यनामकीर्त्तनादिषु समाप्तिं गमितेषु अधिवेशनाद्यकृत्यजातेषु निर्द्धारिता आगामिहायनीयपरिषत्कृत्य-सम्पादकाः। ततश्च परिषदन्यतरसम्पादकानां श्रीमतां पशुपतिनाथ शास्त्रि एम्, ए, वि, एल् महोदयानां कलिकाताविश्वविद्यालयतः पि, एच्, डि, इति गौरवजनकोपाधिलाभमुपलक्ष्य तस्मै अभिनन्द-नादिकं किमपि विसृष्टम्। तथाचादौ परिषदन्यतरसम्पादकश्रीयुक्त गोष्ठपतिरायचतुर्धुरीणकाव्यतीर्थमहोदयेन वाचिताः केचन परिषदा-नन्दातिरेकगर्भाः शास्त्रिमहोदयदीर्घजीवनकामनात्ताः पट्टवस्त्रखण्डो-परि चातुर्य्यगरिम्णा मुद्रापिता रमणीयरमणीया भावगम्भीरा अधस्तनाः श्लोकाः उपहृतञ्च तत् वस्त्रखण्डं शास्त्रिमहोदयाय। अथ क्रमेण श्रीमता वामाचरणकाव्यतीर्थेन परिषच्छात्रसमितिप्रतिनिधिभूतेन श्रीमता चिन्ताहरणचक्रवर्त्तिना च वाचितं श्लोकगर्भमभिनन्दनपत्रद्वयं, यन्नाम वाचनादनन्तरमुपहृतं शास्त्रिमहोदयाय। ततश्च श्रीमता सतीशचन्द्र-चक्रवर्त्तिना पठितं वङ्गभाषामयश्लोकात्मकं किमपि अभिनन्दनपत्रम् यदपि च पठनानन्तरमुपहारीकृतं अभिनन्द्यमानेभ्यः श्रीमद्भ्यः शास्त्रि-पादेभ्यः।

एवमवसिते अभिनन्दनपत्रवाचनरूपे अभिनन्दनप्रधानाङ्गे सभाध्यक्ष-महोदयाः, परिषत् सभापतिमहामहोपाध्यायश्रीयुक्तप्रमथनाथतर्क-भूषणपादाः, श्रीमन्तः शितिकण्ठवाचस्पतिपादाः श्रीमन्तो ललितकुमार-मित्रमहोदयाः श्रीमन्तः शरच्चन्द्रखान्महाशयाः श्रीमन्तस्ताराचरणा युर्व्वेदशास्त्रिणश्च शास्त्रिमहोदयानां विविधगुणनिचयसमुपवर्णन-

60 1

पुरःसरम् उपाधिलाभे तेषां सम्यगुपयोगितां विश्वविद्यालयाधिकृतानाम् तेभ्य उपाधिप्रदानविधौ गुणग्रहणपाटवं च समालोचयन्तः मधुरमधुरां वाक्यावलीं प्रवर्त्तितवन्तः। समाप्तिं प्राप्तासु च तासु वाक्यप्रवृत्तिषु श्रीयुक्तपशुपतिनाथशास्त्रिमहोदयाः अभिनन्दनस्य सम्यगुत्तरप्रदानावसरे विनयमधुरां वक्तृताम् कामप्यारचयामासुः।

ततः सभाकृत्यसम्पादने सभापतिमहोदयानां क्लेशराशिमुल्लिख्य स्वतो धनेभ्योऽपि तेभ्यः पिष्टपेषणन्यायेन केचन वितीर्णाः साधुवादाः। एतदनन्तरं परिषत्सदस्यैः पल्लवकुलतिलकभूतानां श्रीमतां महेन्द्रविक्रमनरपतिमहोदयानां कृतिर्मत्तविलासम् परिषच्छात्रसमितिसदस्यैश्च महाकवेर्भासस्य मनोहरं वस्तु मध्यमव्यायोगश्च प्रयुक्तौ परिषद्रङ्गमञ्चे। अभिनयस्य पाटवन्तु अन्तं यावत् तिष्ठद्भिर्निखिलैर्दर्शकवर्गैरेव प्रमाणीकृतं तत्र नापेक्ष्यतेऽस्माकं प्रशंसावादः। अभिनयान्ते च रात्रेर्दशम घटिकायामवसितं निखिलं सभाकृत्यम्।

तत्र सभायां वाच्यत्वेन पूर्व्वमेव निरूपितः श्रीमत उपेन्द्रनाथसेनगुप्तकाव्यतीर्थस्य 'विविदिषा' इति प्रबन्धः। प्रबन्धविषयस्य गुरुत्वात् दीर्घत्वाच्च तस्मिन् दिवसे बहुकृत्यानां सम्पादनीयत्वान्न वाचितम्। निर्णीतञ्च यदेव आगामिनि अधिवेशने वाचयिष्यते इति।

## परिषदभिनयः—

विदाङ्कुर्व्वन्तु श्रीमन्तः परिषत्सदस्याः परे च संस्कृतानुरागिणो विद्वांसः इतःपूर्व्वं परिषत्सदस्यैः कविचूडामणिर्भवभूतेरुत्तररामचरितं नाम नाटकमचिरमभिनीतं भविष्यतीति वार्त्ता प्राचरत्, परमिदानीं कारणान्तरेण पुनः प्राचीनकवेर्भासस्य बालचरितमभिनीतं भविष्यतीति निर्द्धारितं वर्त्तते। अभिनयोपयोगिशिक्षा प्रारब्धा, सत्वरमेव रसज्ञा अभिनेतारः साधारणानामानन्दमनुकूलयितुमात्मनैपुण्यं बालचरितमधिकृत्य प्रकाशयिष्यन्ति, भासस्य ग्रन्थेषु यथा अभिनयसमुत्कर्षः सम्पादयितुमलं न तथा कवीनामपरेषामिति दृष्टचरमेव निपुणदर्शि-

कानां तदिदमन्यतमं सविशेषं कारणं प्रक्रान्तवस्तुपरित्यागेन भासनाटकममवलम्बने इति विज्ञाप्यते।

## परिषच्छात्रसमितिः—

विदितमस्तु तत्रभवतां परिषत्प्रियमहोदयानां यथा संस्कृतभाषाविज्ञान-समुन्नतये कृतपरिकरायाः संस्कृतसाहित्यपरिषदः कार्य्यानुकूल्यविधानाय शैशवादेव छात्राणां संस्कृतविद्यादक्षतायामभिनिवेशसम्पादनाय तथा वाक्पाटवादिप्रतिबन्धकीभूतभीत्यादिपरिहारेण यथोचितवाग्विभवसमुन्मेषणाय विविधोन्नत्युपायसङ्कलनार्थञ्च प्रतिष्ठापिता नातिचिरं काचित् छात्रसमितिः परिषद्भवने परिषच्चतुष्पाठीसम्पर्कं साक्षात् परम्परया वा प्राप्तवद्भिः कतिपयैः समुत्साहिभिर्बालैः। ते इतःपूर्व्वं परिषदो रङ्गालये सुतरां चातुर्य्येण परिषदाचार्य्यश्रीकालीपदतर्काचार्य्यप्रणीतं स्यमन्तकोद्धारं नाम व्यायोगं तथा लब्धप्रतिष्ठप्राचीनकविचूड़ामणिभासस्य मध्यमव्यायोगं नाम रूपकमभिनीय परिषत्सदस्यानामितरेषाञ्च गुणग्राहिणां मानसानि परमन्वरञ्जयन्। सम्प्रति पुनस्ते भासस्य कर्णभारं नाम रूपकं तथा भट्टनारायणकवेर्वेणीसंहारनाटकस्य तृतीयाङ्कमभिनेतुमुद्यममातिष्ठन्ति। प्रायेण प्रत्यहमेव तेषां साग्रहमनुशीलनमस्माकमभिनयोत्कर्षसम्भावनामुद्दीपयति, आशंसामहे यथा पूर्व्वमिव साम्प्रतमपि ते यथापरिश्रमं फलमधिगमिष्यन्ति। एवंक्रमेण हि सम्प्रदायाविच्छेदः सम्पद्यते लोके, दृष्टप्रकर्षास्तावत् परिषत्सदस्या नानाविषयेषु, तेषामनुकृतिकामनां हृदये दधानाः सुनिपुणाश्छात्रसमितिसदस्या यदि वर्त्तेरन्, तदा तेषामपि तथैव प्रकर्षसमुत्पत्तिस्तदनन्तरं तदनुकरणेन परेषां तदनुकरणेन च इतरेषामित्येवं सम्प्रदायो निर्व्विरोधं रक्षितः स्यात्। वयमीश्वरसमीपे नातिचिरमुद्भूतायाः परिषदाशास्थानभूताया अस्याः सुदीर्घं निरामयञ्च जीवनमभिकामयामहे।




গুণে অদ্বিতীয়, গন্ধে অতুলনীয়, শিরোরোগের মহৌষধ।
এক শিশি ১৲ টাকা, ৩ শিশি ২৷৷০, ৬ শিশি ৫৲ টাকা, ১২ শিশি ৯৷৷০ টাকা, এক গ্রোস ১০৮৲ টাকা, ডাকমাশুল স্বতন্ত্র

---




রক্তশুদ্ধির মহৌষধ। শরীরের দুর্ব্বলতা দূর করিয়া কান্তি ও পুষ্টি বর্দ্ধনে অদ্বিতীয়। ১ শিশির মূল্য ১৷৷০ দেড় টাকা, ৩ শিশি ৩৷০ আনা। ৬ শিশি ৭৷৷০ সাড়ে সাত টাকা, ডাকমাশুল স্বতন্ত্র।

## সি কে সেন এণ্ড কোং লিমিটেড।

২৯নং কলুটোলা ষ্ট্রীট, কলিকাতা।

---

প্রকাশকো মুদ্রাপকশ্চ—শ্রীজানকীনাথকাব্যতীর্থঃ।
সংস্কৃতসাহিত্যপরিষদ্ভবনম্, শ্যামবাজার ব্রীজরোড, কলিকাতা।
মুদ্রণস্থানম্—১০৩, কর্ণওয়ালিস ষ্ট্রীট, শ্যামবাজার, কলিকাতা

